**गामी भवति**–इति, “ तेषामश्वः प्रथमागामी भवति ”–इति, “ तेषां रथः प्रथमागामी भवति ”–इति तत्र तत्र प्रथमागामी भवतीति वचनं यथाप्रधानमभिधानं पूर्वं समाम्नातमित्यस्य न्यायस्योपप्रदर्शनार्थमिति लक्ष्यते । इतरथा ह्यविवक्षितक्रमेषु प्रथमागामिवचनमकृत्वैव यत्किंचित् पदमुपादध्यात् । तदेतत् पृथिवीस्थाने सर्वत्र क्रमप्रयोजनमुच्यते । पार्थिवस्य ज्योतिषो यथा अग्नि-शब्देन प्रसिद्धतमः संबन्ध. 5 न तथा जातवेदः-शब्देन, यथा जातवेदः-शब्देन न तथा वैश्वानर-शब्देन, यथा च वैश्वानर-शब्देन न तथा द्रविणोदः-शब्देन । तान्येनानि गुणविप्रकर्षात् प्रसिद्धिविप्रकर्षाच्च अग्निशब्दात् विप्रकृष्यन्ते । इध्मादीनां तु व्यवधानेनाग्न्यभिधानत्वमित्यातितरां विप्रकर्षः । अश्वप्रभृतयस्तु स्थानमात्रमग्नेर्भजन्त इति इध्मप्रभृतिभ्योपि विप्रकृष्यन्ते । तेषामपि च उदितप्राणवृत्तयोऽश्वशकुनिमण्डूका इति प्रथमम् । अनुदितप्राणवृत्तयस्तु 10 अक्षादयः ते पश्चादाद्वन्द्वेभ्यः । इत्येवं सर्वत्र क्रमप्रयोजनमुपेक्ष्यम् ।

शाकपूणिस्तु पृथिवीनामभ्य एवोपक्रम्य स्वयमेव सर्वत्र क्रमप्रयोजनमाह । तदुक्तं वार्तिककारेण

“ क्रमप्रयोजनं नाम्नां शाकपूण्युपलक्षितम् ।
प्रकल्पयेदन्यदपि न प्रज्ञामवसादयेत् ”—इति ॥ 15

---

1. *a. d.* omit भवति इति before तेषामश्वः; *d.* omits इति before तेषां रथ.. 1–2. *m.* omits तेषां रथ प्रथमागामी भवति इति· 2. *d.* omits भवति इति before तत्र तत्र; *a. d.* omit भवति before इति वचनं. 4. *a. d.* उपादद्यात्, *m.* उपदध्यात्, for उपादध्यात् of *bi.* 6. *d.* omits च after यथा· 7. *a. d. m.* एतानि for एनानि of *bi.* 10. *d.* उदितप्राणवृत्तयो, *bi.* उदितप्रमाणवृत्तयो, *m.* उदितप्रमाणप्रभृतयोऽश्वः शकुनिः मंडूकाः इति; *d. m.* अनुदितप्राणवृत्तयस्तु for अनुदितप्रमाणवृत्तयस्तु of *bi.* 11–12. *a.* only omits from उपेक्ष्यम् to क्रमप्रयोजनम् (l. 12). 15. *a. d. m.* omit इति·

---

1. तेषामश्वः etc.—Nir. IX. 1.
1–2. तेषां रथः etc.—Nir. IX. 11.
10. अश्वशकुनिमण्डूकाः—See Nigh. V. 3. 1–3.
11. अक्षादयः—Nigh. V. 3. 4–28.
11. आद्वन्द्वेभ्यः—The pairs begin with उलूखलमुसले, Nigh. V. 3. 29–36.
12–13. तदुक्तं वार्तिककारेण—The following quotation is untraced.

प्रकृतमिदानीमुपवर्ण्यते । इध्मादीनां गुणाभिधानसामान्यं किंचिदस्ति यतस्तेनाधिकार-वचनम् **अथात आप्रियः** इति । अथ इति विशेषाधिकारे । **अतः** इत्यानन्तर्ये । **आप्रियः** वक्ष्यन्त इति वाक्यशेषः ।

इह कारणादभिधेये अभिधाननियमो नैरुक्तानाम् । तदर्थमुपोद्धत्य **आप्रियः**
5 **कस्माद् आप्नोतेः प्रीणातेर्वा** इति निराह । आप्रिय ऋचः, तत्संबन्धात् देवता अपि । तथाहि दर्शयति—" **आप्रीभिराप्रीणाति** ", " इतीमा आप्रीदेवताः " इति च । ऋचस्तावत् आप्नुवन्ति प्रीणन्ति वा देवता इत्याप्रियः । अथ पुनर्देवता आप्यन्ते आप्रीयन्ते वा इत्याप्रियः ।

**तासाम् इध्मः (२) प्रथमागामी भवति** । प्रथममागन्तुमस्य आप्रीदेवता-
10 पदसमाम्नाये शीलमिति प्रथमागामी । कस्मात् । तत्पूर्वत्वादिज्यायाः, अनित्यत्वाच्च तनूनपान्नराशंसयोरन्यतरस्य ।

**तस्य** इध्मस्य समित्कलापस्य **एषा** प्राधान्यस्तुतिः **भवति** ॥ ४ ॥

**" समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः ।**
**आ च वह मित्रमहश्चिकित्वान्त्वं दूतः कविरसि प्रचेताः ॥ "**

15 **समिद्धोऽद्य मनुष्यस्य मनुष्यस्य गृहे देवो देवान्यजसि जातवेद, आ च वह मित्रमहश्चिकित्वाँश्चेतनावाँस्त्वं दूतः कविरासि प्रचेताः प्रवृद्ध-चेताः । यज्ञेध्म इति कात्थक्योऽग्निरिति शाकपूणिः ॥**

1. *a. d.* अनुवर्ण्यते for उपवर्ण्यते; *m.* गुणाभिधानं सामान्यं· 6. *d.* omits च after इति· 7. *a.* इति च for वा· 10. *a. d.* तत्पूर्वत्वादिज्यायाः; *bi.* एतत्पूर्वकत्वा-दिज्यायाः, *m.* तत्पूर्वकत्वादिज्यायाः. 17. C. कान्छ्वयो; Bi. mss. ( क, ख, ग ) read शाकपूणिस्तनूनपान्नपादित्यननन्तरायाः·

6. आप्रीभिराप्रीणाति—AB. VI. 4.

6. आप्रीदेवताः—Cf. Nir. VIII. 21.

9. 'इध्मः'—Nigh. V. 2. 2.

13-14. RS. X. 110. 1; AV. 5. 12. 1; VS. 29. 25.

16. **चेतनावान्**—Durga does not read चेतनावान्.

16. **प्रचेताः**—Three mss. of Bi. (क, ख, ग) do not read प्रचेताः ताः· Durga, however, has it.

16-17. **प्रवृद्धचेताः**—Durga does not read प्रवृद्धचेताः·

तनूनपादाज्यं भवति । नपादित्यननन्तरायाः प्रजाया नामधेयम् । निर्णततमा भवति । गौरत्र तनूरुच्यते । तता अस्यां भोगास्तस्याः पयो जायते । पयस आज्यं जायते । अग्निरिति शाकपूणिरापोऽत्र तन्व उच्यन्ते । तता अन्तरिक्षे । ताभ्य ओषधिवनस्पतयो जायन्त, ओषधिवनस्पतिभ्य एष जायते । तस्यैषा भवति ॥ ५ ॥ 5

**समिद्धो अद्य**–इति । जमदग्नेरार्षम् । त्रैष्टुभम् । सूक्तमेवाहाग्नेयं यास्कः । हे इध्म यस्त्वं **समिद्धः**–संदीप्तः **अद्य** एतस्मिन् विशिष्टे यजनीयेहनि **मनुषः**–**मनुष्यस्य मनुष्यस्य** समानेहनि प्रवृत्तयागानां त्रैवर्णिकानां **दुरोणे**–यज्ञगृहे **देवः**–दाता हविषां हेतुकर्तृत्वेन, **देवः**–दीप्तो वा द्योतनो वा, **देवान्**–दानादिगुणयुक्तान् एतान् हेतुकर्तृत्वेन यागेङ्गभावमुपगच्छन् **यजसि** हे **जातवेदः** । जातवेदस आधार इति 10 तदभिधानेन संबोध्यते । दृष्टा हि मञ्चस्थेषु क्रोशत्सु तदभिधानप्राप्तिः । अथवा जातवेदा अपि त्वदृतेऽनभिव्यक्तस्वशक्तिः । त्वदाधारत्वादशक्त एवायं यष्टुम् । तस्माज्जातवेदास्त्वदाधारो यजति यत्, तत् त्वमेव यजसीत्युच्यते । अस्माकमप्येतस्मिन्नहनि हे **मित्रमहः**–मित्राणां पूजयितः नित्यमभ्युपेक्ष्यमाणः उपकारप्रवृत्तो यजमानानां **चिकित्वान्**–जानानः **आ च वह**–आह्वय च देवान्, आहूय चैतान् यज । तथास्मिन् 15 कर्मणि ज्वलन्नङ्गभावमुपेहि यथैतस्मिन् कर्मणि हविः प्रतिजिघृक्षन्तोङ्गभावमीयुर्देवाः । अपि च नैतदतिचित्रं यदेवमस्माकमस्मिन् कर्मणि वर्तेथाः । किं कारणम् । यतो ब्रूमः । **त्वं दूतः कविरसि प्रचेताः** । अग्न्यावेशादग्निवदपेक्ष्योच्यसे । **त्वम् एव दूतः**

---

1. Bi. J. R. तनूनपादाज्यं भवति । नपादि°. 5. Bi. J. conclude VIII. ii. 2 with भवति. 6. *a. d.* omit त्रैष्टुभम्. and *a.* omits आहाग्नेयं यास्कः. 7–8. *a. d. m.* read मनुष्यस्य once only. 8. *a. d.* omit त्रैवर्णिकानां. 10. *a. d.* यागाङ्गभावमुपगच्छन्. 12. *d.* त्वदाधारत्वात् शक्ति अशक्त एवायं etc. 13. *a. d.* उच्यसे. 14. *a* only मित्रमह; *bi.* ms. (ख) has नित्यमभ्युपेक्ष्यमाणोपकारप्रवृत्तो, *bi. j.* °मभ्युपेक्षमाणः उपकारवृत्तो, *m.* °मभ्युपेक्ष्यमाण. उपकारप्रवृत्तो, *d.* नित्यमभ्यपेक्षमाणः etc. 15. *m.* देवता आहूय. 16. *m.* उपैहि for उपेहि. 18. *a. d. m.* अग्निवदपेक्ष्योच्यसे, *bi.* अग्निर्यदपेक्ष्योच्यसे.

---

1. Durga reads—**तनूनपादाज्यमिति कात्थक्यः । अग्निरिति शाकपूणिः नपादित्यन°.**

1. **आज्यं भवति**—Bi. mss. (क, ख, ग) do not read आज्यं भवति.

3. Durga does not notice the *bhāṣya* words—**अग्निरिति शाकपूणिः ।.**

सर्वयजमानानां त्वत्पूर्वकत्वाद् देवतायागस्य । **कविः**—क्रान्तदर्शनः क्रान्तप्रकाशः सर्वत्र **प्रचेताः**—प्रकृष्टप्रज्ञानः । यस्मात् त्वम् ऋत्विग्यजमानानां साफल्ये हेतुः तस्य तव युक्त-मस्माकमाहूय देवान् यष्टुमित्यतो ब्रूमहे । आह्वय चास्माकं देवान् यज च ॥

**यज्ञेध्म इति कात्थक्यः** । कत्थकस्य पुत्रः **कात्थक्यः** आचार्यः । स मन्यते
5 योयमिध्म आधीयते प्रतिप्रणवं इध्मो यज्ञे स एवायमिति । नन्वेतस्मिन् मन्त्रे न तस्य लिङ्गमस्ति । सत्यं नास्ति साक्षात् । प्रैषे तु "समिद्भ्यः प्रेष्या"—इति श्रूयते । युक्तं च यदर्थमेव प्रेष्यते स एवेज्यते । तस्मात् समिधामेवेध्मभावमुपगतानामग्निना संदीप्तानां समुदायापेक्षमिदं व्यवहितमभिधानमाप्रीगतं **समि॑द्धो अ॒द्य** इति । समिध एव चेमा इज्यन्त इति स्फुटमैष्टिके हौत्रे । "समिधो यज"—इति प्रेषितो होता

10 "समिधः समिधो अग्न आज्यस्य व्यन्तु"

—इति वषट्करोति । तस्माद् युक्तं यत् कात्थक्यो मन्यते यज्ञेध्म इति ।

अथ पुनरन्यः कथं मन्यते । अत आह **अग्निरिति शाकपूणिः** । स पुनः कया उपपत्त्या अग्निं मन्यते । आरादुपकारित्वात् प्रैषस्य, संनिपत्योपकारित्वाच्च यजतावाप्रियः, यदाप्रीरूपं तद् बलवत् । किंच पुनराप्रियो रूपम् । अग्न्यर्थता । कथमिति । शृणु ।

15 **समि॑द्धो०—०दे॒वान्य॑जसि जा॒तवे॑दः । आ च॒ वह॑ मित्रमहश्चिकि॒त्वान्त्वं दू॒तः क॒विर॑सि॒ प्रचे॑ताः ॥** "—इति सर्वाण्येतानि अभिधानानि कर्माणि च अगौणान्याग्निपक्षे, गौणानीध्मपक्षे ।

---

2. *a. d.* साफल्ये, *bi. m.* सायुज्ये· 3. *a. d.* आह्वय, *bi.* आहूय· 4. *d.* कथकस्य for कत्थकस्य and काथक्यः for कात्थक्यः in both places. 5. *a. d.* प्रतिप्रणवं इध्मो यज्ञे स, *bi.* प्रतिप्रणवं यज्ञे स, *m.* प्रतिप्रणवं यज्ञे स एवायमिध्म इति· 7. *a. d.* omit अग्निना; *d.* समुदायोपेक्ष्यमिदं· 9. *d.* ऐष्टि हौत्रे, *bi.* ऐष्टिके होत्रे, *m.* ऐष्टिके हौत्रे· 11. *d.* काथक्यो· 12. *a. d.* read यतः for अत· ; *m.* omits अत आह· 13. *m.* यजतावाप्रियः। यदाप्रीरूपं, *bi.* यजतावाप्रियां यद् etc. 15. *d.* समिद्धो देवान् etc. continuous; *d.* omits आ च वह. 16. *d.* adds त्वं before दूतः·

---

6. समिद्भ्यः प्रेष्या—Cf. MŚr. Sû. 1. 8. 3. 17.

9. समिधो यज—MŚr. Sû. 1. 3. 2. 2. ; ÂpŚr. Sû. 2. 17. 4 ; ŚB. 1. 5. 3. 8.

10. समिधः समिधो अग्न etc.—ÂŚr. Sû. 1. 5.

"गौणमुख्ययोश्च मुख्ये कार्यसंप्रत्ययः"—इति न्यायः।

तस्मादप्रच्युतस्वरूपाया आप्रियो यजतावुपकारबाहुल्यादाग्नेयत्वाच्च प्रयाजानामग्निरेवायमनया आप्रिया इज्यत इति शाकपूणिर्मन्यते।

यास्कस्यापि चैतदेवाभिमतम् "आग्नेया इति तु स्थितिः" इति अधिकरणान्ते हि वक्ष्यति। एवं तर्हि अग्निरित्येतदेव समाम्नातव्यमासीत् न इध्मः इति। नैवम्। 5 कस्मात्। समिद्धो अद्येत्येतदस्यामाप्रियामग्नेर्लिङ्गमस्ति न त्वग्निशब्दः। अतोऽस्यासमाम्नानम्। पौनरुक्त्यदोषाच्च। तदिध्मशब्देऽपि समानम् इति चेत् तदपि ह्याप्रियां नास्तीति। न। प्रैषिके समाम्नानात् क्रियाविशेषितत्वाच्च। आहूय चास्माकं देवान् यज चेति। स एषोऽग्निः समित्कलापमिध्ममात्मत्वेनाभिसंपन्नस्तदाख्यतामुपगतः तेनेध्माभिधानेनेज्यत इति इध्मशब्दः समाम्नातो नाग्निशब्द इति। सर्वत्र शाकपूणेरेवमाप्रीष्वग्न्यर्थान्यभिधानानि। 10

शाकपूणिपक्षे मन्त्रयोजना। हे भगवन् अग्ने **समिद्धः** यः त्वं संदीप्तः **अद्य**—अस्मिन्नहनि **मनुषः**—मनुष्यस्य **दुरोणे**—यज्ञगृहे **देवः**—दाता दीपनः द्योतनो वा **देवान्**—दातॄन् दीप्तान् वा **यजसि जातवेदः** हविषा यजमानानां जातप्रज्ञान स त्वमस्माकमपि हे **मित्रमहः**—मित्राणामुपकारप्रवृत्त **चिकित्वान्**—जानानः स्वमधिकारम्, आहूय देवान् यज चेति। किम्। ब्रूमहे। यस्मात् त्वमेव **दूतः** सर्वयजमानानां भवसि **कविः**—15 क्रान्तदर्शनः **प्रचेताः**—प्रवृद्धप्रज्ञान इति।

**तनूनपात्** (२) इति निर्वक्तव्यम्। तत् पुनरेतत् **आज्यम् इति कात्थक्यः, अग्निरिति शाकपूणिः**। यथा तावदाज्यं तथा निरुच्यते। **नपात् इति अननन्त-**

1. *a. d. m.* read मुख्ये संप्रत्यय°. *bi. j.* कार्यसंप्रत्यय. 3. *m.* इति शाकपूणिराचार्यो मन्यते. 4. *d.* एतदेव मतम् for एतदेवाभिमतम् of *bi. j.* 8. *a. d. m.* read समाम्नानात्। विशे (*d.* शि) षितत्वाच्च for समाम्नानात् क्रियाविशेषितत्वाच्च of *bi. j*; *a. d.* read आह्वय for आहूय. 9. *a. d.* तदाख्यातां (?) for तदाख्यतां. 12. *a. d.* omit वा after द्योतनो. 13. *d.* जातप्रज्ञान° for जातप्रज्ञान. 14. *a. d.* मित्रमह for °महः. 15. *a. d. m.* add इत्येवम् after किम्. 17. *d.* काथक्य°. 18. *a. d. m.* add एतत् after नपात् इति.

1. न्यायः—Cf. Paribhâsendusekhara § 15, on the sûtra "ओत्" Pâṇini i. i. 15. The reading there is—"गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः॥ १५॥"

5. वक्ष्यति—Nir. VIII. 22.

7. 'तनूनपात्'—Nigh. V. 2. 3.

**रायाः प्रजाया नामधेयम्** । या पितुरनन्तरा पुत्राख्या सा भवति अननन्तरा पौत्राख्येत्यर्थः । किं कारणम् । सा हि **निर्णततमा भवति** । कथम् । पुत्रस्तावत् पितुर्नीचैर्नतो भवति । ततोपि नीचैर्नततमः पौत्रः । तत्रैतस्मिन् पक्षे यः **तनू**-शब्दः पूर्वपदं तनूनपाच्छब्दस्य तेन **गौः उच्यते** । सा कस्मात् । **तताः अस्यां भोगाः**
5 क्षीरदध्यादय. । ततः किम् । **तस्याः पयो जायते** । तस्याः पुत्रः पयः । **पयसः आज्यं जायते** । तस्मात् तस्याः पौत्रः । एवं गोः तन्वाख्यायाः नपात् आज्यम् । तस्मात् तनूनपात् ।

अग्निपक्षे **आपः अत्र** अस्मिन् अग्नेः तनूनपात्त्वे **तन्वः उच्यन्ते** । ताः कस्मात् । **ताः अन्तरिक्षे** । ततः किम् । **ताभ्यः ओषधिवनस्पतयो जायन्ते** ।
10 **ओषधिवनस्पतिभ्यः एषः** अग्निः **जायते** । तस्मादयमपां पौत्रः ॥

**तस्य** तनूनपातः आज्यस्य अग्नेर्वा प्राधान्यस्तुतिः **एषा भवति**—॥ ५ ॥

**" तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन् स्वदया सुजिह्व ।**
**मन्मानि धीभिरुत यज्ञमृन्धन् देवत्रा च कृणुह्यध्वरं नः ॥"**

**तनूनपात् पथ ऋतस्य यानान् यज्ञस्य यानान्, मधुना समञ्जन्**
15 **स्वदय कल्याणजिह्व । मननानि च नो धीभिर्यज्ञं च समर्धय । देवान् नो यज्ञं गमय ॥**

---

1. *a. d.* omit पुत्राख्या सा भवति अननंतरा. 1–2. *d.* reads या पितु· अनन्तरा पुत्राख्या तस्यानन्तरा पौत्राख्येत्यर्थः instead. 2. *d.* omits कथं. 4. *d.* omits सा before कस्मात्; *d. m.* तताः, *bi.* नता . 5. *a. d.* omit पयः after पुत्रः. 8. *a. d. m.* तनूनपात्त्वेः *bi. j.* °त्वेन. 10. *d.* omits अग्निः after एषः. 12. R. समञ्जन्त्स्वदया. 14–15. R. समञ्जन्त्स्वदय.

---

12–13. RS. X. 110. 2; AV. 5. 12. 2; VS. 29. 26.

14. **मधुना**—Durga reads मध्वा only. He does not notice मधुना, Yâska's *bhâsya* on the *nigama* word.

15. **कल्याणजिह्व**—This word is omitted by Durga. Instead of it he has जिव्हया हित or जिव्हायां हित.

16. **देवान् नो यज्ञं गमय**—Durga does not notice this sentence in his commentary.

**नराशंसो यज्ञ इति कात्थक्यो, नरा अस्मिन्नासीनाः शंसन्ति । अग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति । तस्यैषा भवति ॥ ६ ॥**

**तनूनपात् पथ ऋतस्य**–इति । हे **तनूनपात्** आज्य त्वमुच्यसे । एतान् **पथः**–मार्गान् सर्वान् **ऋतस्य–यज्ञस्य यानान्**–हवींषि यज्ञे यान्युत्सर्पन्ति तानि **मध्वा** मधुरेण स्वादेन **समञ्जन्**–संप्रक्षयन् **स्वदय**–स्वादुतामापादय हे **सुजिह्व**–जिह्वया हित । एवं कुर्वन् **मन्मानि–मननानि** यानि वयं मन्यामहेऽर्थवस्तूनि ध्रुवाण्येतानि **नः** स्युरिति तानि स्वाभिः **धीभिः** स्वैः कर्मभिः, अभिघारणालंकरणोपस्तरणादिभिः, **ऋन्धन्**–संसाधयन् स्वगुणैरुपकुर्वन् **समर्धय**–संपादय । अपि चैवं कुर्वन्नेतं **यज्ञं समर्धय**–संपादय । या काचिदापदुत्पद्यते यज्ञस्य तां प्रायश्चित्तेनाङ्गभावमुपगच्छन् **गमय देवत्रा–देवान्** प्रति । स्विष्टमध्वरमस्माकं च कुरुष्वेत्यर्थः । एतदाशास्महे त्वत्तः ।

अग्निरिति शाकपूणिः । हे भगवन् अग्ने **तनूनपात्** त्वम् एतान् **पथः ऋतस्य–यज्ञस्य यानान्** हवींषि **मध्वा**–मधुरेण पाककृतेन रसेन **समञ्जन्**–समभिव्यञ्जयन् **स्वदय**–मृष्टीकुरु हे **सुजिह्व**–स्वर्चिः अथवा हे सुवाक् । एतान्येवं कुर्वन्नस्मदभिमतान्यर्थवस्तूनि **नः** संसाधयन् **यज्ञम् ऋन्धन्**–समर्धयन् स्वसामर्थ्याच्च **देवत्रा**–देवप्रविष्टं कुरु इत्येतदाशास्महे वयं त्वत्त इति ।

**नराशंसः** ( ४ ) **यज्ञः इति कात्थक्यः** । कस्मात् । **नराः अस्मिन् आसीनाः शंसन्ति** । नरशब्दः पूर्वपदम्, आसेर्निष्ठान्तस्य मध्यं, शंसतेरुत्तरपदम् ।

1. C. काच्छक्यो· 2. Bi. J. conclude VIII. ii. 3. with तस्यैषा भवति· 4. *m.* omits यज्ञस्य; *m.* यान्त्युत्सर्पन्ति for यान्युपसर्पन्ति; *a. d.* omit तानि· 5. *a. d.* संप्रक्षयन्, *bi.* सप्रक्षयन्; *d.* आपादयत for आपादय· 5–6. *bi.* सुजिह्व जिह्वया हि ते एतदेवं कुर्वन्, *a. d.* सुजिह्व जिह्वया हित एवं कुर्वन्, *m.* जिह्वायां हित एतदेवं कुर्वन्· 6. *a. d.* यानि वयं मन्यामहे, *bi. j. m.* यानि च वयं etc. 7. *a. d.* read तानि again for स्वाभिः· 8. *d.* ऋधन् for ऋंधन्· 8–9. *d.* समर्धय । संपादयन्नपि चैतं यज्ञं समर्धय संपादय । *a. d.* omit एव कुर्वन्. 9. *a. d. m.* read ता for त of *bi. j.*, and उपगच्छ for °गच्छन्· 12. *m.* omits यज्ञस्य after ऋतस्य. 14. *a. d.* ऋधन्; *a. d.* समर्द्धय for समर्द्धयन्, *m.* omits समर्धयन्. 15 *a. d.* देवप्रतिष्ठं, *bi.* °प्रविष्टं. 16. *a. d.* काथक्यः here as well as in several places before. 17. *d.* नर शब्दः·

11. अग्निरिति शाकपूणिः ।—Yâska does not read these words here. See his *bhâṣya*.

16. ' नराशंसः '—Nigh. V. 2. 4.

अथ कोऽर्थः । **नराः** मनुष्याः **अस्मिन्** **आसीनाः** उपविष्टाः **शंसन्ति** इति नराशंसः । **अग्निरिति शाकपूणिः** । स कस्मात् । **नरैः प्रशस्यः** स्तुत्यः **भवति** ।

**तस्य** नराशंसस्य **एषा भवति** प्राधान्यस्तुतिः ॥ ६ ॥

" **नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः ।**

5 **ये सुक्रतवः शुचयो धियंधाः स्वदन्ति देवा उभयानि हव्या ॥**"

**नराशंसस्य महिमानमेषामुपस्तुमो यज्ञियस्य यज्ञैः, ये सुकर्माणः शुचयो धियं धारयितारः स्वदयन्तु देवा उभयानि हवींषि । सोमं चेतराणि चेति वा । तान्त्राणि चावापिकानि चेति वा ॥**

**ईळ ईट्टेः स्तुतिकर्मणः । इन्धतेर्वा । तस्यैषा भवति ॥ ७ ॥**

10 **नराशंसस्य महिमानमेषाम्**–इति । वर्तमान एव कर्मणि ब्रवीति । योयमेषा**म**भिमतफलदाता नराणा, नराशंसो यज्ञः द्रव्यदेवतात्यागात्मकः प्रयोगः तस्य अधिष्ठाता । तथ्यग्नौ देवताविशेषे जगदुत्पत्त्यनुग्रहबीजम् । **नराशंसस्य** वयम् **उपस्तोषामः**–**उपस्तुमः** उपगम्य चेतसा **महिमानं**–माहाभाग्यं विभूतिं **स्तुमः**–अभिकीर्तयामः । **यजतस्य–यज्ञियस्य**–यजनस्य संपादयितुः–प्रयोक्तुरभिमतफलसंपादयितुः **यज्ञैः**-
15 कर्मभिः युक्ताः **उपस्तुमः** । तदेवमेतास्मिन्नुपास्थितमहिम्नि नराशंसे यज्ञे किमप्यस्तु इत्याशास्महे । **ये सुक्रतवः–सुकर्माणः** जगदनुग्रहप्रवृत्ताः **शुचयः**-निर्णिक्ततरपापाः **धियंधाः** स्वाधिकारयुक्तानां कर्मणाम् **अनुविधारयितारः**, प्रज्ञानां वा । एवमादिगुणयुक्ताः **देवाः** ते **स्वदन्ति–स्वदयन्तु** एतानि **हव्या–हवींषि उभयानि** ।

9. Bi. J. R. वेल ईट्टेः, C. D. वेळ ईट्टेः; Bi. J. conclude VIII. ii. 4 with भवति· 12. *a. d. m.* omit उपस्तोषाम· 13. उपगम्य चैतस्य for उपगम्य चेतसा; *a. d.* विभूतीः for विभूतिं· 14. *d* यजनस्य संपादयितुः for यजनसंपादयितुः of *bi. j.* 15. *a. d.* तदेवमेतस्मिन्नुपस्तुतमहिम्नि, *bi. j.* यदेवमेतस्मिन्नु°; *a. d.* omit अपि after किं· 16. *a. d. m.* सुक्रतकर्माणः for सुकर्माणः; *d.* निषिक्ततरपापाः for निर्णिक्त°· 17. *a. d.* add यज्ञानां after प्रज्ञानां. 17–18. *a. d.* एवमादिगुणा· for °गुणयुक्ता· 18. *a. d.* omit ते; *a. d.* स्वदंतु आस्वादयन्तु, *m.* स्वदन्ति आस्वादयन्तु.

---

4–5. RS. VII. 2. 2; VS. 29. 27; MS. 4. 13. 3: 201. 12; KS. 37. 4; TB. 3. 6. 3. 1.

9. ईट्टेः स्तुतिकर्मण·—Cf. 'ईड स्तुतौ' Dhâtup. 2. 9.

9. इन्धेतः—Cf. 'ञिइन्धी दीप्तौ' Dhâtup. 7. 11.

यदि सौमिकः पशुः ततः **सोमं च इतराणि** पशुपुरोडाशधानाप्रभृतीनि । अथ पृथक् सोमात्, **तान्त्राणि** प्रयाजाज्यभागस्विष्टकृत्प्रभृतीनि, **आवापिकानि च** प्रधान-हवींषि, इत्येतदाशास्महे ।

अग्निरिति शाकपूणिः । योयमेषामभिमतोपकारकारी नराणां, प्रशस्यः नराशंसोऽग्निः तस्य वयम् **उपस्तोषामः-उपस्तुमः महिमानं यजतस्य**-यज्ञसंपादयितुः 5 **यज्ञैः**-कर्मभिः दानैर्वा संयुक्ताः । तस्मिन्नुपस्तुतमहिम्नि नराशंसेऽग्नौ हुतानि **ये सुक्रतवः देवाः शुचयः धियंधाः** ते एतानि **उभयानि** हवींषि आस्वा-दयन्तु इत्येतदाशास्महे ।

**ईळः** ( ५ ) अग्निः । स पुनरयम् **ईट्टेः स्तुतिकर्मणः** । स्तूयते ह्यसौ । **इन्धतेर्वा** दीपनार्थस्य, तत्क्रियायुक्तो ह्यसौ । **तस्य एषा** प्राधान्यस्तुतिः 10 **भवति**—॥ ७ ॥

" आजुह्वान ईड्यो वन्द्यश्चा याह्यग्ने वसुभिः सजोषाः ।
त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान् ॥ "

**आहूयमान ईळितव्यो वन्दितव्यश्चायाह्यग्ने वसुभिः सहजोषण-स्त्वं देवानामसि यह्व होता । यह्व इति महतो नामधेयम् ।** 15

2. *bi. j. m.* add ततः after सोमात् ; *a. d.* add च after तान्त्राणि. 4. *a. d.* read नाराशंसो for नराशंसो. 5. *a. d.* omit उपस्तोषामः. 6. *a. d.* युक्ताः for संयुक्ताः; *d.* उपस्तुते महिम्नि for °स्तुतमहि°, *m.* उपस्तुत्यमहिम्नि. 9. *d.* ईळ:, *bi. j.* ईलः, *m.* इलः. 14. C. D. ईळितव्यो, Bi. J. R. ईलितव्यो.

4. अग्निरिति शाकपूणिः—It seems that the text of Durga reads the words अग्निरिति शाकपूणिः before the words ईळ ईट्टेः स्तुतिकर्मणः।

9. ' ईळः '—Nigh. V. 2. 5.

9. ईट्टेः स्तुतिकर्मण.—Cf. ' ईड स्तुतौ ' Dhātup. 2. 9.

10. इन्धतेर्वा दीपनार्थस्य—Cf. ' ञिइन्धी दीप्तौ ' Dhātup. 7. 11.

12-13. RS. X. 110. 3; AV. 5. 12. 3; VS. 29. 28; MS. 4. 13. 3: 201. 14; KS. 16. 20; TB. 3. 6. 3. 2.

14. Durga does not repeat—**ईळितव्यो वन्दितव्यः** of the text in his commentary.

15. Durga does not comment on—**यह्व इति महतो नामधेयम्।**

**यातश्च ह्रतश्च भवति । स एनान् यक्षीषितो यजीयान् । इषितः प्रेषित इति वाधीष्ट इति वा । यजीयान्यष्टृतरः ॥**

**बर्हिः परिबर्हणात् । तस्यैषा भवति ॥ ८ ॥**

**आजुह्वान ईड्यो वन्द्यश्च**—इति । हे भगवन् यः त्वम् **ईड्यः वन्द्यः च**
5 सर्वलोकस्य । **ईड्यः**–दीपनार्हः हविर्भिराज्यादिभिः । **वन्द्यः**–स्तुत्यः । स त्वम् **आजुह्वानः–आहूयमानः** एतस्मिन् कर्मणि अस्माभिः **वसुभिः सजोषाः–सहजोषणः** समानप्रीतिर्भूत्वा **आयाहि**। कस्मात् पुनरेवं ब्रूमहे । इतः यस्मात् हे **यह्व**–महन् **त्वम् असि होता देवानाम्** आह्वाता । **सः** त्वमस्माभिः **इषितः–प्रेषितः–अधीष्टो वा** अभ्येषितो होतृत्वे स्थित्वा अस्माकम्, **एनान्** देवान्
10 **यक्षि**–यज इत्येवं ब्रूमहे । किमित्येवं ब्रूमहे। यस्मात् **यजीयान्** असि **यष्टृतरः** मनुष्यहोतुरिति ।

इह **ईड्यः** इति एकवचनमग्नेरव्यवधानेन । तथैतस्मिन् मन्त्रे एकस्य श्रुतत्वात् । ऐष्टिके पुनर्हौत्रे

"इलो अग्न आज्यस्य व्यन्तु"

15 —इति बहुवचनयुक्तादाख्याताद् व्यन्त्वित्येतस्मात् इलः—इत्येतस्यापि बहुवचनत्वमेव इडो व्यन्तु—इति । तच्च पुनरन्नाभिधानम् । अन्नं च पुनरोपधय एव । ताश्च पृथिवीस्थानाः इत्यग्निं भजन्ते । तदात्मनायमग्निरिज्यत इति । तत्र बहुवचनं प्रतिसमाधानमो-

3. Bi. J. conclude VIII. ii. 5 with भवति. 4. *m.* adds अग्ने after भगवन्. 5. *a. d.* read ईड्यः दीपनादाज्यहविरादिभिः. 6. *d.* reads वसुः for वसुभिः; *a. d. m.* omit सजोषाः. 8. *a. d.* महन्, *bi. j.* महत्. 9. *a. d.* एतान् for एनान्. 10. *d.* omits इत्येवं ब्रूमहे after यज; *a.* omits किमित्येवं ब्रूमहे before यस्मात्; *m.* adds यजीयान् again before यष्टृतरः. 12. *d.* इड्य for ईड्यः of *bi. j., m.* इड इ°. 13. *a. d.* read हौत्रे for होत्रे of *bi. m.* 14. *d. m.* इडो for इलो. 16. *d.* इडो for ईडो of *bi. j.* 17. *a. d.* तच्च for तत्र; *m.* प्रतिसमानं for प्रतिसमाधानं.

1. Durga does not comment on the words—**यातश्च ह्रतश्च भवति.**

7. सहजोषणः समानप्रीतिः—Cf. 'जुषी प्रीतिसेवनयोः' Dhâtup. 6. 8.

14. इलो अग्न etc.—Âŝr. Sû. i. 5.

प्यात्मनाग्नेर्व्यवधारणात् । उक्तं च—"योऽयमृबीषे पृथिव्यामग्निरन्तरोषधिवनस्पतिष्वप्सु तमुग्निन्यथुः सर्वगणं सर्वनामानम्"—इति । तस्मादुपपद्यत इति ।

**वर्हिः** (६) इति निर्वक्तव्यम् । तत् पुनरेतत् प्रसिद्धमेव कुशमयं यज्ञाङ्गम् । तत् कस्मात् बर्हिः इति । उच्यते । **परिवर्हणात्**—परिच्छेदनात् । लूनं हि तद् भवति परिवृद्धं वा । **तस्य एषा** बर्हिषः प्राधान्यस्तुतिः **भवति** ॥ ८ ॥ 5

**"प्राचीनं वर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् ।**
**व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ॥"**

**प्राचीनं वर्हिः प्रदिशा पृथिव्या वसनायास्याः प्रवृज्यतेऽग्रेऽह्नां वर्हिः पूर्वाह्णे । तद्विप्रथते वितरं विकीर्णतरमिति वा विस्तीर्णतरमिति वा । वरीयो वरतरमुरुतरं वा । देवेभ्यश्चादितये च स्योनम् । स्योनमिति सुखनाम स्यतेरवस्यन्त्येतत् । सेवितव्यं भवतीति वा ॥** 10

**द्वारो जवतेर्वा, द्रवतेर्वा, वारयतेर्वा । तासामेषा भवति ॥ ९ ॥**

**प्राचीनं बर्हिः**—इति । प्राच्यां दिशि यदञ्चितं गतं जातं प्रागग्रं वा यत् स्तीर्यते तद् भवति **प्राचीनम्** । किं पुनस्तत् । **वर्हिः** । **प्रवृज्यते**—प्रच्छिद्यते लूयते । अथवा

1. *a. d. m.* व्यवधानात् for व्यवधारणात्; *d. m.* योयमृबीसे; *d.* अग्निरन्तरोपधिवन°. 3. *a. d.* read वक्तव्यं for निर्वक्तव्यम्. 5. *a. d.* read तस्य for यस्य of *j*. 8. Bi. J. प्रवृज्यते अग्रे अह्नां; C. D. प्रवृज्यतेग्रेह्नां. 9. C. D. R. वितीर्णतरं for विकीर्णतरं. 12. Bi. J. conclude VIII. ii. 6 with भवति.

1–2. योऽयमृबीषे etc.—Nir. VI. 36.

3. 'बर्हिः'—Nigh. V. 2. 6

6–7. RS. X. 110. 4; AV. 5. 12. 4; VS. 29. 29; MS. 4. 13. 3: 202. 1; KS. 16. 20; TB. 3. 6. 3. 2.

9. **वितरं**—Some mss. of Bi. (क, ख, ग) do not read वितरं.

9. **विकीर्णतरम्**—Durga does not notice either विकीर्णतरमिति वा or its variant वितीर्णतरामिति वा.

10. 'स्योनम्'—Nigh. III. 6. 15.

11. स्यतेः—Cf. 'षोऽन्तकर्मणि' Dhâtup. 4. 41,

**प्रवृज्यते**-प्रस्तीर्यते । किं पुनरेवमेव स्वमनीषिकया । नेत्युच्यते । **प्रदिशा**-विधिवाक्येन ।

"प्रागुदग्वा बर्हिश्छिनत्ति ।"

तत्सामर्थ्यात् । अथवा **प्रदिशा**-प्रस्तरणमन्त्रेण

5 "देवस्य त्वा"

—इत्यनेन । स्तरणपक्षेऽपि

"प्राचीनं बर्हिः स्तृणाति"

—इति विधिवाक्यम् ।

"ऊर्णम्रदा वि प्रथस्व"

10 —इति मन्त्रः । किमर्थं पुनस्तत् प्रवृज्यते । **पृथिव्याः वस्तोः अस्याः** । पृथिवी वेदी तस्याः **वस्तोः-वसनाय** आच्छादनाय । कदा च पुनस्तत् **प्रवृज्यते** । **अग्रे अह्नाम् पूर्वाह्णे** । तदा हि प्रशस्यते दर्भस्तरणं लवनं वा । **तत्**प्रवृक्तं प्रस्तीर्यमाणं वा यथाकालं विविधं **प्रथते** विस्तीर्यते वेद्यां छाद्यमानायां प्रवृज्यमानं वा विस्तीर्यमाणं वा **विप्रथते** । **वितरम्** विस्तीर्णादपि **विस्तीर्णतरम्** । **वरीयः-वरतरम्** अन्येभ्यो

15 यज्ञाङ्गेभ्यः श्रेष्ठतरं तदाधारत्वाद्धविषाम् । **उरुतरं वा** बहुतरं वा । किमर्थं पुनस्तत् प्रवृज्यते विप्रथते वा । **देवेभ्यः च अदितये च** कथं नाम **स्योनं सुखं** स्यादिति ।

---

1. *d.* किंपुनरेव स्व° for किं पुनरेवमेव स्व°; *m.* प्रदिशां. 3–4. *a. d. m.* बर्हिश्छिनत्ति । तत्सामर्थ्यात्, *bh. j.* बर्हिश्छिनत्तीति सामर्थ्यात्. 4. *a. d.* मन्त्रेण for प्रस्तरणमन्त्रेण. 9. *d.* म्रदा for म्रद्रा of *j.*; *a. d.* विप्रथस्व for पिप्रथस्व of *bh. j.* 10–11. *m.* reads पृथिवी वेदिस्तस्याः; *a. d.* omit पृथिवी वेदी तस्याः. 11. *d.* omits च after कदा. 12–13. *a. d. m.* तत्प्रवृक्तं प्रस्तीर्यमाणं वा यथाकालं विविध प्रथते; *bh. j.* तत्प्रवृत्तं वा यथाकालं विविधं प्रथते. 13–14. *m.* omits from विस्तीर्यते वेद्यां etc. to वा विप्रथते. 13. *a. d.* read प्रस्तीर्यमाणं for विस्तीर्यमाणं. 13–14. *a. d.* omit वा before विप्रथते. 14. *a.* only reads विस्तरं for वितरं. 15. *a. d. m.* omit वा after उरुतरं.

---

3. प्रागुदग्वा बर्हि°—The quotation is untraced. But cf. प्रागुदग्वाभिप्रव्रज्य बर्हिरच्छैति '—MŚr. Sû. 1. 1. 1. 28.

5. देवस्य त्वा—The *mantra* is—"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां बर्हिर्देवसदनं दामि"—MS. 1. 1. 2: 4. 1. 2; MŚr. Sû. 1. 1. 1. 34.

7. प्राचीनं बर्हिः स्तृणाति—The quotation is not traced.

9. ऊर्णम्रदा—RS. V. 5. 4. Cf. MS. 3. 1. 13, and 4. 1. 14.

बर्हिषा हि सगुणीकृतात्कर्मणो देवानां हविर्दातॄणां यजमानानाम् अभीप्सितेन फलेन योगो भवति तत् सुखम् । **अदितये** पृथिव्यै बर्हिषा हि सगुणीकृतात् कर्मणश्चाहुतिद्वारेण वृष्टिर्भवति । तत ओपधिप्ररोहः तत् सुखम् ।

नात्र ब्रवीत्यग्निरिति । तेन यज्ञाङ्गमेव । अभिमतमेतदिदमप्यस्याचार्यस्य । तद्द्वारेणैव व्यवधानेनाग्निः स्तूयते पृथिव्यायतनत्वात् तस्य । अपरे पुनरग्निवदपि योजयन्ति मन्त्रा- 5 र्थदृशः । तत्पक्षे बर्हिरित्यग्न्यभिधानम् । प्रागञ्च्यते प्रणीयत इति **प्राचीनम् । बर्हिः** प्रवृद्धमाहवनीयाख्यं ज्योतिः । **प्रवृज्यते**–प्रणीयते । तत् पुनः **प्रदिशा**–वचनेन

" प्राञ्चमुद्धरन्ति "

इति । **पृथिव्याः वस्तोः वसनाय** । अग्निनैव हि वेदिरनग्निका भवति । **अग्रे अह्नाम् पूर्वाह्णे** । **तत्** विविधं **प्रथते** सामिधेनीप्रक्षेपात् । आज्यभागाघारादिपु च 10 **विस्तीर्णतरं** विक्षिप्ततरं प्रथते । **वरीयः वरतरम्** अन्येभ्यो ज्योतिर्भ्यः । **उरुतरं**–महत्तरं **वा देवेभ्यः** यजमानेभ्य इतरेभ्यो वा **अदितये च** पृथिव्यै कथं नाम **स्योनं** स्यादिति ॥

**स्योनम् इति सुखनाम । स्यतेः** धातोः अवपूर्वात् । तदेव हि **अवस्यन्ति**– व्यवस्यन्ति निवसन्ति प्राणिनः । **सेवितव्यं भवतीति वा** । तद्धि सर्वस्य सेवनार्हं 15 भवति ।

**द्वारः** ( ७ ) इति निर्वक्तव्यम् । ताः पुनरेता **जवतेर्वा,** जवन्ति हि ताभिः ।

1. *bi. j.* सगुणीकृत्कर्मणो, *m.* सगुणीकृतात्कर्मण्यो; *a. d.* add वा after फलेन. 2. *a.* only reads पृथिव्या for पृथिव्यै; *a. d. m.* वा for हि; *m.* कर्मणः आहुतिद्वारेण; *d. m.* omit च after कर्मणः. 3. *a.* only reads ओषधीपु रोहः ?, *d. m.* ओषधीप्ररोहः. 3–4. *a.* तत्सुखनाम प्रब्रवीत्यग्निरिति तेन etc., *d.* तत्सुख नात्र ब्रवीति etc. 4. *a. d.* आचार्यस्य । तद्द्वारेणेव, *bi. j. m.* आचार्यस्य च तद्द्वारेणैव. 6. *bi. j.* प्रागुच्यते, *m.* प्रागच्यते. 9. *a. d.* अग्निनैबाहिवेदिरनग्निका; *m.* omits हि. 10. *a.* only reads आज्यभागाद्याघारादिपु च, *d. m.* आज्यभागाघारादिपु. 12. *a. d.* read वा before महत्तरं and not after it; *a. d.* omit च. 15 *a. d. m.* omit व्यवस्यन्ति. 17. *bi. j.* read यज्ञे गृहद्वार इति कात्थक्यः ।, after निर्वक्तव्यम्; *a. d. m.* omit it.

8. प्राञ्चमुद्धरन्ति—The quotation is not traced. But cf. MS. I. 6. 5.

17. 'द्वारः'—Nigh. V. 2. 7.

द्रवतेर्वा धात्वन्यत्वमर्थैकत्वम् । वारयतेर्वा वारणीया हि द्वारादेव निवार्यन्ते । तासाम् एषा प्राधान्यस्तुतिः भवति ॥ ९ ॥

"व्यचंस्वतीरुर्विया वि श्रंयन्तां पतिभ्यो न जनंयः शुम्भमानाः ।
देवींर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यों भवत सुप्रायणाः ॥"

5 व्यञ्चनवत्य उरुत्वेन विश्रयन्तां पतिभ्य इव जाया ऊरू मैथुने धर्मे शुशोभिषमाणाः । वरतममङ्गमूरू । देव्यो द्वारो बृहत्यो महत्यो विश्वमिन्वा, विश्वमाभिरेति यज्ञे । गृहद्वार इति कात्थक्योऽग्निरिति शाकपूणिः ॥

उषासानक्तोषाश्च नक्ता चोषा व्याख्याता । नक्तेति रात्रिनामानक्ति 10 भूतान्यवश्यायेनापि वा नक्ताव्यक्तवर्णा । तयोरेषा भवति ॥ १० ॥

**व्यचंस्वतीः** इति । याः एताः विविधेनाञ्चनेन गमनेन युज्यन्ते **व्यचस्वतीः** ताः । किं कुर्वन्तु । **उर्विया–उरुत्वेन** महत्त्वेन **विश्रयन्ताम्**–विश्रियन्ताम् । कथम् । **पतिभ्यः न जनयः । पतिभ्य इव जायाः** । यथा पतिभ्यो जाया **ऊरू मैथुने धर्मे** विवृण्वन्ति **शुशोभिषमाणाः**–शोभयितुमिच्छमानाः प्रहर्षात् । एवं 15 **विश्रयन्ताम्** । इदानीमुत्तरोऽर्धर्चः प्रत्यक्षकृतः । याः यूयं **व्यञ्चनवत्यः** एवं विश्रयध्वे ता वो ब्रवीमि । हे **देव्यः** दानक्रियाहेतुभूताः **द्वारः बृहत्यः महत्यः विश्वमिन्वाः** । **विश्वं** सर्वम् **आभिः एति** यज्ञशरणमिति विश्वमिन्वाः ।

---

6. The mss. क, ख, ग of Bi. read वरतरम्. 10. Bi. J. conclude VIII. ii. 7. with तयोरेषा भवति 12. *a.* विश्रियंतां, *d.* विश्रयंतां for विश्रियन्ताम् of *bi. j. m.* 13. *d.* omits न after पतिभ्यः; *a. d.* omit यथा पतिभ्यो जाया. 14. *a. d. m.* omit शुशोभिषमाणाः; the ms. ग of *bi.* reads सुशोभि°. 16. *m.* ततो ब्रवीमि for ततो ब्रवीति of *bi. j.*; *a. d.* ता वो ब्रवीमि. 17. *a. d.* read यज्ञशरणमिति for यज्ञोपकरणमिति of *bi. j.*, *m.* यज्ञे उपकरणमिति.

---

3–4. RS. X. 110. 5; AV. 5. 12. 5; VS. 29. 30; MS. 4. 13. 3: 202. 3; KS. 16. 20; TB. 3. 6. 3. 3.

4. Yāska has not explained the words—देवेभ्यों भवत सुप्रायणाः.

6. Durga does not explain **वरतममङ्गमूरू**.

7. **यज्ञे गृहद्वार इति कात्थक्यः**—is not explained by Durga.

यूयमुच्यध्वे । **देवेभ्यः** एतेभ्यो हविर्दातृभ्य. ऋत्विग्भ्यः यजमानेभ्य इतरेभ्यो वा **सुप्रायणाः**-सुप्रगमनाः **भवत** इत्येतदाशास्महे ।

**अग्निः इति शाकपूणिः** । तत्पक्षे योजना । अग्न्यर्चिषो **द्वारः** जवनात् द्रवणाद्वा । हविर्वा । ताभिर्जवति द्रवति वा वारयन्ति वा रक्षःप्रभृतीनीति द्वारः । **व्यचस्वतीः** याः एताः विविधेनाञ्चनेन तद्वत्यः । अग्न्यर्चिषः ताः **उरुत्वेन विश्रयन्ताम्** । 5
कथम् । **पतिभ्य इव जायाः ऊरू मैथुने धर्मे** शोभयितुमिच्छमानाः । या यूयं विविधेनाञ्चनेन तद्वत्यः याश्चैवं विश्रयध्वे ता वो ब्रवीमि । हे **देव्यः बृहत्यः विश्वमिन्वाः** सर्वं हविर्याभिर्जवति ता यूयमस्य हविषः **सुप्रायणाः**-सुप्रगमनाः **भवत** इति ।

**उषासानक्ता** (८) इति एकपदम् । अस्य विग्रहः **उषाश्च नक्ता च** । अत्र 10
**उषा व्याख्याता**—" उच्छतीति सत्याः " इति । **नक्तेति रात्रिनाम** । तत् कस्मात् । **अनक्ति** क्लेदयति **भूतानि अवश्यायेन** इति । अवश्यमेता आयन्तीत्यवश्यायाः प्रुष्वाः । अनक्तेरकारलोपे नक्ता । **अपि वा नक्ता अव्यक्तवर्णा** । नकारः प्रतिषेधे । न अक्ता न व्यक्ता अनक्ता । यथा अहः सर्वमभिव्यक्तरूपं भवति न तथा रात्रिः । **तयोः एषा** प्राधान्यस्तुतिः **भवति** ॥ १० ॥ 15

**"आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ ।**
**दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ॥"**

1. *a. d.* एतेभ्यो देवेभ्यः. 2. *m.* प्रायणा for सुप्रायणाः. 3. *a. d.* अचिषः for अग्न्यचिषः. 4. *d.* omits वा after द्रवति; *a. d. m.* वारयंति, *bi.* वारयति. 6. *d.* ऊरून्मैथुने धर्मे. 7. *a. d.* ( and *bi.* ms. ख ) read ता वो ब्रवीमि, *bi. j.* ततो ब्रवीमि, *m.* ततो ब्रवीति. 8. *d.* जवंति for जवति: *m.* सुप्रगमनाः for सुगमना. of *bi. j.* 10. *a. d.* इत्येतत्पदम्, *bi. j.* इति एकपदम्: *d. m.* omit अत्र. 12. *d.* omits इति after अवश्यायेन; *a. d. m.* अवश्यमेता आयंतीत्यवश्यायाः, *bi. j.* अवश्यमेतदायन्तीति etc. 13. *d.* प्रुष्वा *bi. j.* प्रुष्वा. 14. *d.* न व्यक्ता नक्ता and not अनक्ता.

10. ' उषासानक्ता '—Nigh. V. 2. 8.

11. उषा व्याख्याता—Nir. II. 18.

16-17. RS. X. 110. 6; AV. 5. 12. 6; 27. 8; VS. 29. 31; MS. 4. 13. 3: 202. 5; KS. 16. 20; TB. 3. 6. 3. 3.

सेष्मीयमाणे इति वा। सुष्वापयन्त्याविति वा। आसीदतामिति वा। न्यासीदतामिति वा। यज्ञिये उपक्रान्ते दिव्ये योषणे। बृहत्यौ महत्यौ। सुरुक्मे सुरोचने। अधिदधाने शुक्रपेशसं श्रियम्। शुक्रं शोचतेर्ज्वलतिकर्मणः। पेश इति रूपनाम। पिंशतेर्विपिशितं 5 भवति॥

दैव्या होतारा। दैव्यौ होतारावयं चाग्निरसौ च मध्यमस्तयोरेषा भवति॥ ११॥

आसुष्वयन्ती इति। आसुष्वयन्ती-सेष्मीयमाणे-परस्परं स्मयमाने। अथवा सुष्वापयन्त्यौ सुष्ठु जनान् स्वापयन्त्यौ। यजते हेतुकर्तृत्वेन। यजते-10 यज्ञिये-यज्ञसंपादयित्र्यौ। उपाके-उपक्रान्ते-उपगम्य इतरेतरं क्रान्ते। दिव्ये-दिविजे द्योतने। योषणे संमिश्रे परस्परतः। बृहती-बृहत्यौ-महत्यौ। सुरुक्मे-सुरोचने सुदीप्ते। ये एते एवमादिगुणयुक्ते उषासानक्ते अधिश्रियं श्रियम् अधिदधाने उपरि स्थापयन्त्यौ शुक्रपिशम्-शुक्रपेशसम् शुक्ररूपां श्रियम् आसदताम्-आसीदताम् एतस्मिन् स्वे योनौ। आकार उत्कृष्यते। उपसर्गस्य 15 हि क्रियापदेन सामर्थ्यम्। न्यासीदताम् इति नियमेनासीदतामिति। निः उत्तरपदस्थोऽप्यपकृष्यते तेनैव क्रियापदेन। निशब्दश्चोत्तरपादपूरणः।

---

1–5. The mss. क, ख, ग of *bh.* read पिंशतेर्विपिशितं भवति. 7. Bh. J. conclude VIII. ii. 8 here. 9. *a. d.* add बृहत्यौ महत्यौ before यजते. 10. *a. d. m.* प्रज्ञस्ते for उपक्रांते. 11. *a. d.* omit द्योतने; *a. d. m.* omit बृहत्यौ. 12. *m.* सुष्ठु रोचने; *a. d.* दीप्ते for सुदीप्ते; *d.* उपासानक्तौ for °नक्ते; *a. d.* omit श्रियम्. 13. *a. d. m.* omit शुक्रपिशं शुक्रपेशसम्; *a. d.* शुक्ररूपां. 14. *a. d. m.* omit आसदताम्; *a. d.* omit स्वे; *d.* नियोनो for योनो; *a. d.* उत्कृष्यः for उत्कृष्यते. 15–16. *d.* निरंतरपदस्थो for निरुत्तर°. 16. *a. d. m.* अपकृष्यते तेनैव क्रियापदेन, *bh. j.* अपकृष्य तेनैव etc., *a. d.* निशब्दश्चोत्तरपादपूरणः; *bh. j. m.* निशब्दश्चोत्तरपदो वा पादपूरणः.

---

3–4. शुक्रं शोचतेर्ज्वलतिकर्मणः—This portion of the text is not commented upon by Durga.

4. 'पेशः'—Nigh. III. 7. 11.

न ब्रवीत्यग्निरिति । येन द्वित्वानुपपत्तिरिति केचित् । अपरे पुनर्वर्णयन्ति । उषा अग्नेर्दीप्तिः । नक्ता आहुतिः । दीप्तिर्विवासयति तमः । आहुतिरनक्त्याज्येन । ते एते दीप्त्याहुती सुष्ठु स्मयमाने इव **यजते–यज्ञिये**–यज्ञसंपादयित्र्यौ **उपाके–उपक्रान्ते** परस्परतः **दिव्ये**–द्योतने परस्पराश्रयात् **योषणे**–मिश्रीभूते **बृहती–बृहत्यौ–महत्यौ सुरुक्मे–सुरोचने अधिदधाने शुक्रपिशम्–शुक्रपेशसम्** एतस्मिन् यजमाने 5 **श्रियम् आसदताम्–आसीदताम्** एतस्मिन्नग्नौ **न्यासीदतां** नियमेनाधिकं वा इत्येतदाशास्महे ।

**पेश इति रूपनाम पिंशतेः** धातोः । तद्धि **विपिशितं भवति** । विकसितं भवति यावदाश्रयभावित्वात् । विनिहितमिति केचिदन्याश्रितत्वात् ।

**दैव्या होतारा** ( ९ ) इति वक्तव्यम् । **दैव्यौ होतारौ** इति शब्दसमाधिः । 10 **अयं चाग्निरसौ च मध्यमः** इत्यभिधेयवचनम् । **तयोः एषा** प्राधान्यस्तुतिः **भवति** ॥ ११ ॥

“ **दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै ।**
**प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता** ॥”

**दैव्यौ होतारौ प्रथमौ सुवाचौ, निर्मिमानौ यज्ञं मनुष्यस्य मनुष्यस्य** 15

---

1. *m.* पुनर्वर्णयन्त्यपरे. 2. *m.* नक्ता आहुतिर्दीप्तिः; *a. d.* आहुतिर्नक्ताज्येन, *m.* आहुति नक्त्याज्येन. 3. *m.* सुष्ठु स्मयमाने; *a. d.* omit यजते; *a. d.* omit उपाके. 4. *m.* परस्पराश्रयात्, *bi. j.* परस्पराश्रयणात्; *a. d. m.* omit बृहती. 5. *a. d. m.* सुष्टुरोचने for सुरोचने; *a. d. m.* omit शुक्रपिशं; *m.* reads शुक्रपिशसम् for शुक्रपेशसम्; *a.* alone reads अस्मिन् for एतस्मिन्. 6. *a. d. m.* omit आसदताम्. 7. *a.* only reads च for वा 8. *d.* विपिशितं, *m.* विपीशितं. 8–9. *a.* omits विकसितं भवति.

---

8. पिंशते धातोः—cf. ‘ पिश अवयवे ’—Dhâtup. 6. 156.

10. ‘ दैव्या होतारा ’—Nigh. V. 2. 9.

13–14. RS. X. 110. 7; AV. 5. 12. 7; VS. 29. 32.

14. **प्रदिशा**—Yâska neither reads nor explains this word.

15. **निर्मिमानौ**—Not noticed by Durga.

15. **मनुष्यस्य मनुष्यस्य**—The mss. क, ख, ग of Bi. do not repeat मनुष्यस्य. Durga also reads the word once only.

**यजनाय । प्रचोदयमानौ यज्ञेषु कर्तारौ पूर्वस्यां दिशि यष्टव्यमिति प्रदिशन्तौ ॥**

**तिस्रो देवीस्तिस्रो देव्यस्तासामेषा भवति ॥ १२ ॥**

**दैव्या होतारा—इति** । यावेतौ **दैव्यौ होतारौ** । देवेषु भवौ **दैव्यौ** । देवावेव 5 वा **दैव्यौ** इति स्वार्थे एव तद्धितः । मनुष्यहोतारौ होतृमैत्रावरुणौ अपेक्ष्य । दैव्यौ होतारौ इति विशेषणम् । कौ पुनस्तौ । **होतारा-होतारौ** आह्वातारौ देवानाम् । वाय्वग्नी । किंलक्षणौ । **प्रथमा-प्रथमौ**-मुख्यौ मनुष्यहोतारावपेक्ष्य **सुवाचा-सुवाचौ**-प्रशस्तवाचौ सुस्तुती **मिमाना यज्ञं** यज्ञनिर्मातारौ नित्यं **मनुषः-मनुष्यस्य यजध्यै-यजनाय प्रचोदयन्ता-प्रचोदयमानौ विदथेषु-यज्ञेषु** 10 **कारू-कर्तारौ** ऋत्विजौ ।

"नानग्निको यज्ञोऽस्ति"

इत्यग्निर्निर्मिमीते । न चासावनुपध्मातो वायुना ज्वलतीति वायुर्निर्मिमीते । विज्ञायते हि

"तस्मादेष नानुपध्मातो ज्वलति"

---

3. Bi. J. conclude VIII. ii. 9 with भवति. 4. *d.* दैव्यौ होताराविति यावेतौ etc. 4–5. *bi. j.* देवेषु भवौ देव्यौ देवावेव वा देव्यौ, *a. d.* देवावेव वा दैव्यौ, *d.* reads दैव्यौ in both the places, *d. m.* दैव्यौ इति स्वार्थे etc. 5–6. *a. d.* मनुष्यहोतारौ अपेक्ष्य दैव्यौ होतारौ होतृमैत्रावरुणौ विशेषणं? 6. *a. d. m.* omit होतारा; *m.* होताराबाह्वातारौ. 7. *a. d. m.* वाय्वग्नी किंलक्षणौ, *bi. j.* वाय्वग्निकलक्षणौ; *a. d. m.* omit प्रथमा; *a. d. m.* omit सुवाचा. 8. *a.* alone reads सुप्रवाचौ for सुवाचौ. 9. *a. d.* प्रचोदयन्तौ for प्रचोदयन्ता. 12. *d. m.* निमिमीते for निर्मिमीते; *a. d.* वायुर्मिमीते.

---

1. **पूर्वस्यां दिशि**—Durga reads प्राच्यां दिशि for पूर्वस्यां दिशि.

5–6. मनुष्यहोतारौ होतृमैत्रावरुणौ अपेक्ष्य । दैव्यौ होतारौ इति विशेषणम्—The commentary here is not intelligible. The form होतृमैत्रावरुणौ is grammatically faulty. The words होतृमैत्रावरुणौ and विशेषणं are interpolations and must have been introduced into the commentary from the marginal explanatory notes, by some ignorant scribe.

11. नानग्निको यज्ञोऽस्ति—The quotation is not traced.

13. तस्मादेष etc.—ŚB. 11. 8. 3. 7.

—इति । स एष मैत्रावरुणो वायुरग्नेर्होतृवदधियज्ञे वर्तमानस्य नित्यं चोदयिता तन्मूलत्वाच्च यज्ञकर्मणः । तावेव देवानामाह्वातारौ उच्येते । यावेतावेवं **प्रचोदयन्तौ विदथेषु–यज्ञेषु कारू–कर्तारौ** मनुष्यहोतुः अनुग्रहस्य नित्यं स्वाधिकारकर्मानुग्रहसंनिधानात्, यदेतत् **प्राचीनं**–प्राच्यां दिशि **ज्योतिः** आहवनीयाख्यं प्रणीयते प्रदिशा मन्त्रेण 5

"प्राचीमनु प्रदिशं प्रेहि"

—इति । अनेन विधिवाक्यप्रदेशेन वा

"प्राञ्चमुद्धरन्ति"

—इति । एतत् प्रणीय नित्यं यष्टव्यमित्येवमर्थं **प्रदिशन्तौ**–आज्ञापयन्ताविव यौ नित्यमवियोगेन स्वभावतो यज्ञोपकारे वर्तमानौ तौ ममाप्येवं वर्ततामिति **एवमाख्यात**- 10 मध्याहृत्य समाप्यते । निराख्याततत्वान्मन्त्रस्य ॥

**तिस्रो देवीः** (१०) इति पदम् । ताः पुनरेताः **तिस्रः** एव **देव्यः** । प्रथमया ता निराह । तिस्र इति देवीशब्दस्य विशेषणम् । **तासाम् एषा भवति** प्राधान्यस्तुतिः ॥ १२ ॥

**"आ नो॑ य॒ज्ञं भार॑ती॒ तूय॑मे॒त्विळा॒ म॑नु॒ष्वदि॒ह चे॒तय॑न्ती ।** 15
**ति॒स्रो दे॒वीर्ब॒र्हिरे॒दं स्यो॒नं सर॑स्वती॒ स्वप॑सः सदन्तु ॥"**

2. *d.* उच्यते for उच्येते. 3. *d.* मनुष्यस्य होतुरन्यग्रहस्य नित्यं etc. 4. *a. d.* add आ‌‌‌‌‌त्तौ after °संनिधानात् and read after it यत्प्राच्यां दिशि ज्योतिराह°; *m.* omits प्राचीनं. 7. *a. d.* विधिवाक्यप्रदेशेन वा, *bi. j. m.* विधिवाक्यप्रदेशेन अनेन वा. 8. *m.* प्रांचमुत्धरतीति. 9. *m.* प्रणीयं for प्रणीय; *m.* आज्ञापयन्त्याविव. 10. *a. d.* तौ ममापि, *bi. j. m.* do not read तौ before ममापि; *a. d.* वर्ततां for वर्तेतां of *bi. j. m.* 12. *a. d. m.* तिस्र एव देव्यः, *bi. j.* तिस्रो देव्यः. 15. The mss. (क, ख, ग) of Bi. and J. read तूय॑मे॒त्विला॒ for तूय॑मे॒त्विळा॒ of others.

6. प्राचीमनु etc.— MŚr. Sû. 1. 5. 4. 7.

8. प्राञ्चमुद्धरन्ति—The quotation is not traced. Cf. MS. 1. 6. 5.

12. 'तिस्रो देवीः'—Nigh. V. 2. 10.

15–16. RS. X. 110. 8; AV. 5. 12. 8; VS. 29. 33; MS. 4. 13. 3; 202. 9; KS. 16. 20; TB. 3. 6. 3. 4; cf. also MS. 2. 126: 150. 14.

**ऐतु नो यज्ञं भारती क्षिप्रम् । भरत आदित्यस्तस्य भाः । इला च मनुष्यवदिह चेतयमाना । तिस्रो देव्यो बर्हिरिदं सुखं सरस्वती च सुकर्माण आसीदन्तु ॥**

**त्वष्टा तूर्णमश्नुत इति नैरुक्तास्त्विषेर्वा स्याद्दीप्तिकर्मणस्त्वक्षतेर्वा 5 स्यात् करोतिकर्मणस्तस्यैषा भवति ॥ १३ ॥**

**आ नो यज्ञं भारती**–इति । आभिमुख्येन अस्माकं यज्ञमागच्छतु । का पुनरसौ इति । **भारती** । **भरत आदित्यः** सर्वभूतान्युदकेन बिभर्ति । **तस्य** स्वभूता **भाः** दीप्तिः । कथमेतु । **तूयम्–क्षिप्रम्** । **इला च** पृथिवीस्थाना ।

" इहैवेलया वसुमत्या "

10 --इत्यनुयाजेषु उन्नीतसामर्थ्यात् पार्थिवत्वम् । **मनुष्वत्–मनुष्यवत् इह** कर्मणि **चेतयन्ती**–चेतयमाना । यथा मनुष्येण मनुष्य आहूतो भोक्तुमविलम्बमान आगच्छेत् क्षिप्रमेवमागच्छतु सा ममेह कर्मणि हविर्भोक्तव्यमित्येवमर्थं जानाना । **सरस्वती च** मध्यस्थानैवमेव **चेतयन्ती** आगच्छतु । ता एताः **तिस्रः** अपि **देव्यः स्वपसः–सुकर्माणः** अस्मिन् कर्मणि **इदं बर्हिः स्योनं सुखं** प्राप्य 15 एतस्मिन् **आसदन्तु आसीदन्तु** इत्येतदाशास्महे ॥

---

1. Bi. J. R. इला, C. इडा· 4. The mss. (क, ख, ग) of Bi. read °स्तक्षतेर्वा· 5. Bi. J. conclude VIII. ii. 10 with भवति· 7. *a. d.* add इति after बिभर्ति; *m.* भूता for स्वभूता· 8. *d.* ऐतु for एतु; The *bi.* ms. (क) reads तूयं शीघ्रम्; *bi. j. m.* इला. 9. *bi. j. m.* इहैवेल्या; *bi.* ms. (ख) reads इडा and इहैवेडया. 10. *a. d.* पार्थिवत्वं, *bi. j. m.* पार्थिवत्वात्; *a. d. m.* omit मनुष्वत्; *d. m.* add तूयं (*m.* यूयं?) before मनुष्यवत्. 11. *a. d. m.* omit चेतयमाना, but *bi. j.* read it. 13. *bi.* ms. (ख) reads एवमेताः for ता एताः of *bi. j.* 14. *m.* सुकर्मणः ?; *d.* omits इदं; *a. d. m.* omit सुखं. 15. *a. d. m.* omit आसदंतु; *d.* सीदन्तु for आसीदन्तु.

---

4–5. Durga does not explain :—**इति नैरुक्ताः, स्याद्दीप्तिकर्मणः,** and **स्यात्करोतिकर्मणः**.

4. Durga seems to read **त्विषेर्वा वृद्ध्यर्थस्य** in place of **त्विषेर्वा स्याद्दीप्तिकर्मणः**, see line 2, page 875.

4. 'त्विष दीप्तौ'—Dhâtup. 1. 1026.

9. इहैवेल्या—MS. 4. 13. 8.

**त्वष्टा** (११) इति वक्तव्यम् । अत्र तूर्णशब्दात् क्षिप्रवाचिन· पूर्वपदम् अश्नोते-रुत्तरपदम् । क्षिप्रं व्याप्नोति यदनेन व्याप्तव्यं भवति । **त्विषेर्वा** धातोः **वृद्ध्यर्थस्य** । वृद्ध एव नित्यमसौ देवतात्वात् । **त्वक्षतेर्वा स्यात्** क्रियासामान्यमात्रवाचिनः उत्सृष्टतनूकरणस्वार्थस्य । **तस्य एषा** प्राधान्यस्तुतिः **भवति**—॥ १३ ॥

**"य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा ।　　5**
**तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यक्षि विद्वान् ॥"**

**य इमे द्यावापृथिव्यौ जनयित्र्यौ रूपैरकरोद् भूतानि च सर्वाणि तमद्य होतरिषितो यजीयान्देवं त्वष्टारमिह यज विद्वान् ।**

**माध्यमिकस्त्वष्टेत्याहुर्मध्यमे च स्थाने समाम्नातः । अग्निरिति शाकपूणिस्तस्यैषापरा भवति ॥ १४ ॥**　　10

**य इमे द्यावापृथिवी** इति । **यः** त्वष्टा **इमे द्यावापृथिव्यौ** सर्वेषां भूतानां **जनयित्र्यौ रूपैः** नानाविधैः अनेकप्रकारैः **अकरोत् भूतानि च सर्वाणि** । अथवा रूपैरिति कर्तैवानया तृतीयया लक्ष्यते । तत्तद्रूपमास्थाय **यः** त्वष्टा **द्यावापृथिव्यावकरोत् भूतानि च सर्वाणि** । किं तस्य त्वष्टुः । **तं देवं त्वष्टारम् इह**

1. *d.* निर्वक्तव्यम् for वक्तव्यं· 2. *d.* व्याप्तं for व्याप्तव्य· 3. *m.* तक्षतेर्वा. 8. D. reads यक्षि for यज, C. agrees with the text. 9. The mss. (क, ख, ग) of Bi. read माध्यमक· for माध्यमिक·. 10. D. reads तस्यैषा भवति, C. as text; Bi. J. conclude here VIII. ii. 11. 11. *a. d.* omit इमे· 12. *a. d.* read नानाचित्रैः for नानाविधैः, *a. d.* omit अनेकप्रकारैः. 13. *d.* omits यः before त्वष्टा· 14. *m.* तद्देवम् इहाद्य त्वष्टार अद्य; *a. d.* add इहाद्य before त्वष्टारं and omit इह after it·

1. 'त्वष्टा'—Nigh. V. 2. 11.
1. अश्नोतेः—'अशू व्याप्तौ संघाते च' Dhâtup. 5. 18.
4. उत्सृष्टतनूकरणस्वार्थस्य—Cf. 'तक्ष् त्वक्ष् तनूकरणे' Dhâtup. 1. 656–57.
5–6. RS. X. 110. 9; AV. 5. 12. 9; VS. 29–34.
8. **इषितो यजीयान्**—Durga does not read **इषितो यजीयान्**.
9. मध्यमे च स्थाने समाम्नातः—See Nigh. V. 4. 21.

अद्यैतस्मिन्नहनि कर्मणि च हे होतः **यक्षि**–यज **विद्वान्**–जानानः मयेदमवश्यं कर्तव्यमिति।

माध्यमिकस्त्वष्टेति विचारः। तत्र तावत् **माध्यमिकः त्वष्टा इति आहुः** आचार्याः। केचिन्नैरुक्ता एवं मन्यन्ते। **माध्यमिकः** इति संज्ञाप्रसिद्धिः। को हेतुः।
5 **मध्यमे च स्थाने समाम्नातः** इति। किंच। एतस्मिन्नेव मन्त्रे व्यपदेशात्। कथम्। य इमे द्यावापृथिव्यौ भूतानि च सर्वाण्यकरोत् तं देवं त्वष्टारं यजेति। त्वष्टुरन्यो यष्टा। स एव पुनः संबोध्यते हे होतरिति मनुष्यहोत्रा। न चान्यः पार्थिवादग्नेर्होतास्ति। तस्माद् यो यष्टा स पार्थिवः य इज्यते स मध्यमस्त्वष्टेति। सर्वशिल्पवतामाचार्यो देववर्धकिर्दाक्षायणीपुत्रो द्वादशानामादित्यानामन्यतम इत्यैतिहासिकाः॥ कोत्र निश्चयः।

10 अयमेव **अग्निरिति शाकपूणिः**। कथम्। यत्तावत् **मध्यमे च स्थाने समाम्नातः** इति, अकारणमेतत्। अयमप्यग्निर्मध्यमे स्थाने समाम्नात इति। यत् पुनरेतद् व्यपदेशात् इति तदपि समानमिन्द्रेणापि त्वष्टृव्यपदेश इति

"त्वष्टा दधदिन्द्राय शुष्मम्"

—इति। अपि च व्यपदेशादन्यत्वमित्यशक्यमध्यवसातुम्। अनन्यत्वेपि हि व्यपदेशो
15 भवति। तद्यथा

"अग्निमग्न आवह"

—इति। हे अग्ने भगवन् अग्निम् आवह इति व्यपदेशो सत्यनन्यत्वम्। न हि पार्थिवादन्यः सूक्तभाग् हविर्भाग् वा अग्निरस्ति योऽनेन प्रसिद्धहोतृत्वाभिधानेनाहूयेत इज्येत च।

1. *a. d.* कर्मणि च, *bi. m.* कर्मणि वा. 3 and 4. *a. d.* माध्यमकः for माध्यमिकः of *bi. j. m.* 3. *d.* appears to read माध्यमिकस्त्वष्टेत्याहुरिति विचारः etc. 4. *m.* संज्ञाप्रसिद्धः. 5. *a. d.* omit एव. 6. *a.* only reads यजति; *d.* त्वष्टुरन्यो यथा for त्वष्टुरन्यो यष्टा ?. 8. *d.* सर्वशिल्पवतामाचार्यो देववर्धकिर्, *m.* सर्वशिल्पमतामाचार्यो देववर्धकिर्, *bi. j.* सर्वशिल्पिमतामा° देववर्धकिर्. 9. *d.* द्वादशानामादित्यानां मन्य इत्यैतिहासिकाः. 11. *a. d.* omit एतत् after अकारणम्; *a. d.* read प्रथमे for मध्यमे. 13. *a. d.* add इन्द्राय again after शुष्मं and before इति. 17. *a. d.* add अत्र after इति and read हे भगवन्नग्ने. 18. *a. d.* omit अग्निरस्ति before योऽनेन; *a. d.* read आहूयतेज्यते च ?, *m.* आहूयेत इज्यते च, *bi. j.* आहूयेत इज्येत च.

11. मध्यमे च स्थाने समाम्नातः—See Nigh. V. 4. 23.

13. त्वष्टा दधद्—MS. 3. 11. 1.

16. अग्निमग्न आवह—TB. 3. 5. 4.

"स्वं महिमानमावह"

--इति स्विष्टकृति विशेषलिङ्गात् स्वमेवात्मनात्मानं विधिवशात् आह्वानेन संस्मृत्य द्वैधं त्रैधमनेकधा वा यजति । अन्यद्वाभिनिर्वर्तयति । तद्वदिहापि कर्मात्मनः परो योऽस्य तक्षणगुणयोग्यात्मा यदधिष्ठितः कर्मात्मा सर्वरूपाणि पाकेन विकरोति तमधिकृत्योच्यते

"त्वष्टा रूपाणि विकरोति" 5

--इति । तदयमुच्यते मनुष्यहोत्रा

"यज त्वम्"

--इति । एवं तावद् व्यपदेशः शक्यप्रतिसमाधानः । यत् पुनरुक्तं देवशिल्पीति तत्तद्गुणसामान्यादेवासावपि कौशलातिशयमपेक्ष्योच्यत इत्यदोषः ।

यथा चाग्निरेव नान्यः तथा विशिष्टतरलिङ्गा **अपरा ऋक् भवति** ॥ १४ ॥ 10

**"आविष्ट्यो॑ वर्धते॒ चारु॑रासु जि॒ह्मानां॑मू॒र्ध्वः स्वय॑शा उ॒पस्थे॑ ।**
**उ॒भे त्वष्टु॑र्बि॑भ्यतु॒र्जाय॑मानात् प्रती॒ची सिं॒हं प्रति॑ जोषयेते ॥"**

**आविरावेदनात् । तस्यो वर्धते चारुरासु । चारु चरतेर्जिह्मं जिहीतेरूर्ध्व उच्छ्रितो भवति । स्वयशा आत्मयशा उपस्थ उपस्थाने । उभे त्वष्टुर्बिभ्यतुर्जायमानात् । प्रतीची सिंहं प्रति जोषयेते ।** 15

---

2. *d.* स्वमेवात्मामनात्मानं ?, *m.* स्वयमेवायमात्मनात्मानं, *bi. j.* स्वयमेवात्मनात्मानं; *m.* संस्मृत्य, *bi.* संस्कृत्य. 3. *d.* अभिनिर्वर्तय इति ?, *m.* अभिनिर्वर्तयति, *bi.* अभिनिवर्तयति. 4. *a.* तल्लक्षणगुणयोग्यात्मा, *d. m.* तक्षणगुणयोग्यात्मा; *bi. j.* तक्षणाक्रियालक्षणगुणं योग्यात्मा; *bi. j.* add केन विकरोति after पाकेन विकरोति but *a. d. m.* do not have it. 9. *a.* alone omits तत् before तद्गुण°. 11. The mss. (क, ख, ग) of Bi. read जिहीतेरूद्ध्वर्मुद्धृतं भवति.

---

1. स्वं महिमानमावह—TB. 3. 5. 4; ĀŚr. Sū. 1. 3.

5. त्वष्टा रूपाणि विकरोति—The quotation is not traced. Cf. त्वष्टा रूपाणि पिंशतु—RS. X. 184. 1.

11–12. RS. I. 95. 5; MS. 4. 14. 8: 227. 4; TB. 2. 8. 7. 4.

13–14. Durga omits **चारु चरतेर्जिह्मं जिहीतेरूर्ध्व उच्छ्रितो भवति.**

15. The mss. (क, ख, ग) of Bi. do not read—**प्रतीची सिंहं प्रति जोषयेते.**

**द्यावापृथिव्याविति वाहोरात्रे इति वारणी इति वा। प्रत्यक्ते सिंहं सहनं प्रत्यासेवेते ॥ १५ ॥**

**आविष्ट्यो वर्धते** इति। **आविः** प्रकाशः। स कस्मात्। **आवेदनात्।** सर्वस्य प्रकाशनात्। तस्मात् **तत्यः** तस्य तनिता **आविष्ट्यः**। किलक्षणः।
5 **चारुः**–चरणशीलः अनवस्थितः। किं करोति। वर्धते। क। **आसु** क्रियासु प्रजासु वा प्रसवाय। कस्य। **जिह्मानां**–कुटिलचेतसामपि मनुष्याणाम् अवैषम्येण ऊर्ध्वमेव ज्वलति। कुटिलानामपीन्धनानामकुटिल ऊर्ध्वमेवेति केचित्। एवमेव **वर्धते।** **स्वयशाः**–**आत्मयशाः** परमनाश्रित्य यशस्वी। **उपस्थे**–**उपस्थाने** यत्रासावुपनतस्तिष्ठति **आविष्ट्यः**। योयमेवमादिगुणयुक्तः त्वष्टा तस्य **त्वष्टुः** अग्नेः **जाय-**
10 **मानात्** एव **उभे** द्वे अपि **बिभ्यतुः**। के पुनस्ते। **द्यावापृथिव्यौ इति**। यथायमतिमहान् वर्धते अवश्यमयमावां धक्ष्यतीति। **अहोरात्रे इति वा**। सकृदुपज्वलिते महत्यग्नावनुपशाम्यति अहोरात्रयोरर्थवत्त्वाभावः। तस्मात् ते अपि बिभ्यतुः अपि नामायमेवमतिप्रवृद्धः आवामन्यतरमनुच्छिद्यादिति। **अरणी इति वा**। अवश्यमयमावां जातो यदा तदा धक्ष्यतीति अतः अरणी अपि बिभ्यतुः। एवं बिभ्यत्यौ किं कुरुतः।
15 नान्या गतिरस्तीति **प्रतीची** नाम तं प्रत्यञ्चिते अभिमुखे **सिंहं सहनम्** अभिभव-

2. Bi. J. conclude the *second pâda* of the eighth adhyâya with प्रत्यासेवेते, and read after it इति अष्टमाध्यायस्य द्वितीयः पादः ॥ ८, २ ॥ 4. *d.* तस्मात् त्यप्। तस्य तनिता etc. 5. *a. d. m.* प्रजासु, *bi.* प्रज्ञासु (?). 10. *a d. m.* omit उभे; *a. d.* read बिभ्यतः for बिभ्यतुः. 10–11. *d.* यथायमिति महान् वर्धते. 13. *m.* अतिवृद्धः; *bi.* ms. (ख) reads आवामन्यतरमुच्छिन्द्यादिति, *a. d.* read आवामन्यतममुच्छिद्यादिति? *m.* आवामन्यतममुच्छिद्यात्. 14. *a. d.* read आजातो यदा तदा, *bi. j. m.* जातो यतो यदा तदा. 15. *m.* प्राची नाम तं प्रत्यञ्चिते; *a.* प्रतीचीनमेनं, *d.* प्रतीची तमेनं प्रत्य°.

1. **प्रत्यक्ते.**—The word प्रतीची of the *nigama* is explained as प्रत्यक्ते by Yâska. Durga, however, explains it by प्रत्यञ्चिते 'turned towards'. प्रत्यक्ते in classical Sanskrit means 'smeared' and this sense is not applicable here. Durga does not notice **प्रत्यक्ते** in his *vritti*.

4. तत्यः—Note the reading of *d*. For the termination त्यप्, see 'अव्ययात्त्यप्' Pâṇini iv. 2. 104.

11. **अहोरात्रे**—This should be अहोरात्रौ by the rule 'रात्राह्नाहाः पुंसि' Pâṇini ii. 4. 29.

नं **प्रतिजोषयेते–प्रत्यासेवेते** उपकारकत्वेन कथं नामायमावां न भस्मसात् कुर्यादिति । एवमयमेवाग्निरिह त्वष्टेति ॥ १५ ॥

**वनस्पतिर्व्याख्यातः । तस्यैषा भवति ॥ १६ ॥**

**वनस्पतिः** ( १२ ) अवसरप्राप्तः । स पुनरयमभिधेयतोऽभिधानतश्च **व्याख्यातः** 'एष हि वनानां पाता वा पालयिता वा' इति । **तस्य एषा** प्राधान्यस्तुतिः 5 **भवति** ॥ १६ ॥

**"उपाव सृज त्मन्यां समञ्जन्देवानां पाथं ऋतुथा हवींषि ।**
**वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ॥"**

**उपावसृजात्मनात्मानं समञ्जन् देवानामन्नमृतावृतौ हवींषि काले काले । वनस्पतिः शमिता देवो अग्निरित्येते त्रयः स्वदयन्तु हव्यं** 10 **मधुना च घृतेन च ।**

**तत्को वनस्पतिर्यूप इति कात्थक्योऽग्निरिति शाकपूणिस्तस्यैषापरा भवति ॥ १७ ॥**

---

1. *a. d.* उपकारत्वेन. 2. *bi. j.* conclude VIII. ii. 12 with त्वष्टेति, and read after this इति ऋज्वर्थायां निरुक्तवृत्तौ त्रयोदशाध्यायस्य ( अष्टमाध्यायस्य ) द्वितीयः पादः ॥ ८, २ ॥. 3. With वनस्पतिर्व्याख्यातः begins the *third pada*, तृतीयः पादः; VIII. iii. 1 ends with भवति. 5. *a. d. m.* omit प्राधान्यस्तुति . 7. The क, ख, ग mss. of Bi. read उपाव सृजत् त्मन्या; R. हवीँषि. 9. The mss. (क, ख, ग) of Bi. read उपावसृजात्मना त्मन्या समञ्जन्; R. हवीँषि. 13. Bi. J. conclude VIII. iii. 2 with अपरा भवति.

---

3. व्याख्यातः—See above, Nir. VIII. 3

4. 'वनस्पतिः'—Nigh. V. 2. 12

7–8. RS. X. 110. 10; AV. 5. 12. 10; VS. 29. 35

12. Durga does not read **अग्निरिति शाकपूणिः**, here, and his reading is preferable as the following stanza '**अञ्जन्ति त्वाम्**'—RS. III. 8. 1 is addressed to *Yūpa*, the sacrificial post, and not to *Agni*. See also BD. IV. 100.

**उपावसृज इति** । **उपा**श्लिष्य **अवसृज** एतत् पश्वाख्यं **पाथः** । अनाश्रित-विशेषः किमयमग्निर्वा यूपो वा इत्युच्यते । उत वा अन्य एव कश्चित् इति । उत्तरेर्धर्चे वनस्पतिशब्दः प्रथमासंबन्धात् परोक्षः, इह पुनरुपावसृजेति मध्यमपुरुषयोगात् प्रत्यक्षः कोप्यभिधीयत इति सुतरामनाश्रितविशेषः इति विचारास्पदमिति अतः परं विचार-
5 यिष्यति **तत् को वनस्पतिः** इति । **त्मन्या समञ्जन् आत्मना आत्मानम्** अस्य पशोः **समञ्जन्**–समभिव्यञ्जयन् विशिष्टेन संस्कारेण स्वाधिकारसंबन्धिना । **देवानाम्** एतत् **पाथः–अन्नम्** एतदमुनैव प्रकारेण **ऋतुथा** च **ऋतावृतौ काले काले** षण्मासादौ **हवींषि** चैतान्यन्यान्यपि आज्यप्रभृतीनि **उपावसृज** देवेभ्यो देहीति । किंच । **वनस्पतिः, शमिता, देवः अग्निः, इत्येते त्रयः** । त्रिग्रहणात्
10 देवशब्दोऽग्निविशेषणमिति दर्शयति । वनस्पतिश्च शमिता चाप्रत्यक्षदेवते एव, असंदिग्धश्च देवोऽग्निरित्येते त्रयः **स्वदन्तु–स्वदयन्तु** स्वादुतामापादयन्तु । **मधुना च**ोदकेन । प्रोक्षणाद्यभिप्रायम् । **घृतेन च**ैतदस्माभिः संस्कृतं पाथः इत्येतदाशास्महे ॥

**तत् को वनस्पतिः** इत्यादिविचारः । तत्र तावत् **यूपः इति कात्थक्यः** ।
15 कस्मात् । यस्माद् यद्यप्येतस्यामाप्रियामनाविष्कृतोऽग्नेर्विशेषः तथापीयम् **अपरा** यूपाञ्जनीया ऋक् या संनिपत्य यूपाञ्जने यूपमभिधानेन संस्करोति । तद्यथा ॥ १७ ॥

" **अ॒ञ्जन्ति॒ त्वाम॑ध्व॒रे दे॑व॒यन्तो॒ वन॑स्पते॒ मधु॑ना॒ दैव्ये॑न ।**
**यदू॒र्ध्वस्तिष्ठा॒ द्रवि॑णे॒ह ध॑त्ता॒द्यद्वा॒ क्षयो॑ मा॒तुर॒स्या उ॒पस्थे॑ ॥** "

1. *a. d. m.* उपाश्लिष्य for उपाश्लिष्य. 2. *a. d.* omit वा after अग्निः; *bi.* ms. ख omits वा after उत. 5. *a.* only omits आत्मना. 6. *bi.* ms. ख reads समञ्जन् अतिव्यञ्जयन् विशिष्टेन सम्बन्धिना. 7. *a. d.* read एतद्भागिनामुनैव for एतदमुनैव; *a. d. m.* omit च after ऋतुथा. 10. *a. d.* omit एव. 11. *m.* असंदिग्धदेवो अग्नि°; *a. d. m.* omit स्वदंतु; *a. d. m.* स्वादुतां, *j.* स्वाद्दुतां (?). 12. *a. d.* घृतेन तत् for घृतेन चेतद्. 14. *a. d. m.* इत्येवमादिविचारः for इत्यादिविचारः; *a. d.* read काथक्यः. 15. *bi. j. m.* omit यस्माद् before यद्यपि; *a. d.* read आप्रियां not before अनाविष्कृतो but after विशेषः; *a. d.* अग्निवि (*d.* विं) शेषः.

16. यूपमभिधानेन संस्करोति—See ÂŚr. Sû. 3. 1; AB. VI. 2.

17–18. RS. III. 8. 1; MS. 4. 13. 1: 199. 2; KS. 15. 12; AB. 2. 2. 1; TB. 3. 6. 1. 1; KB. 10. 2; ÂŚr. Sû. 3. 1. 8.

**अञ्जन्ति त्वामध्वरे देवान्कामयमाना वनस्पते मधुना दैव्येन च घृतेन च । यदूर्ध्वः स्थास्यसि । द्रविणानि च नो दास्यसि । यद्वा ते कृतः क्षयो मातुरस्या उपस्थ उपस्थाने ।**

**अग्निरिति शाकपूणिस्तस्यैषापरा भवति ॥ १८ ॥**

**अञ्जन्ति त्वाम्**–इति । विश्वामित्रस्यार्षम् । पुरोरुक् । '**देवेभ्यो वनस्पते**' 5
–इति च । हे यूप **अञ्जन्ति त्वां** म्रक्षयन्ति त्वाम् ऋत्विग्यजमानाः । क्व । एतस्मिन् **अध्वरे** यज्ञे । किमिच्छन्तः **देवयन्तः देवान्** यष्टुं **कामयमानाः** । केन अञ्जन्ति हे **वनस्पते** यूप । **मधुना दैव्येन** । संस्कृतेन **घृतेन** इत्यर्थः । देवानां यन्मधु । विज्ञायते हि

"देवानां मधु यद् घृतम्" 10

–इति । किमित्यञ्जन्ति । **यत् ऊर्ध्वः तिष्ठाः** । यस्मात् अक्तः त्वम् **ऊर्ध्वः स्थास्यसि** । अञ्जनादनन्तरमुच्छ्रयिष्यन्ति त्वाम् । यस्माच्च **ते क्षयः मातुः अस्याः** पृथिव्याः **उपस्थे** उपरि । **क्षयो** निवासः स्थैर्यार्थमवटः । तस्मादवश्यमूर्ध्वः **स्थास्यसि** । तथा स्थित्वा पशुधारणसमर्थः प्रधानक्रियापूर्वाङ्गं भावयित्वा तद्द्वारेण तत्फलानि **द्रविणानि च** अवश्यम् अस्मभ्यं **दास्यसि** इत्यतः समञ्जन्ति । एवमस्मिन् 15
समञ्जने यूपे वनस्पतिशब्दः प्रयुक्तः । तस्मात् यूपो वनस्पतिरिति ॥

---

1–2. Bi. J. दैव्येन घृतेन च, C. R. दैव्येन च घृतेन च यदूर्ध्व स्थास्यसि. 2. Bi. mss. (क, ख, ग) read धास्यसि for दास्यसि. 3. R. उपस्थ उपस्थाने; Bi. J. उपस्थे उपस्थाने. 3–4. Bi. mss. (क, ख, ग)—उपस्थानेऽग्निरिति. 4. Bi. J. conclude VIII. iii. 3 with अपरा भवति. 5. *d.* omits पुरोरुक्. 7. *d.* *m.* omit देवयन्त'. 12. *a.* *d.* यस्माच्चेत्क्षयः (?). 13. *d.* अवरः for अवटः. 14. *d.* °पूर्वाङ्गभावयितत्वात् तद्द्वारेण. 15. *m.* दास्याति for दास्यसि.

---

3. **उपस्थे**—Two mss. of Bi. (क, ख) do not read **उपस्थे**.

3. **उपस्थाने**—Yaska explains उपस्थे by उपस्थाने 'near'. But this sense will not do here. The यूप i. e., the sacrificial post, stands 'on the earth' and not 'near the earth'. Durga therefore explains उपस्थे and उपस्थाने by उपरि, see line 8, page 885;—**उपस्थे उपस्थाने** उपरि उत्तरवेद्याः.

5. देवेभ्यो वनस्पते—MS. 4. 13. 7; Nir. VIII. 19.

10. देवानां मधु यद् घृतम्—MS. 3. 9. 3.

**अग्निः इति शाकपूणिः**। कस्मात्। इहापि **उपावसृज**-इति अस्यानाविष्कृत-वनस्पतिशब्दार्थत्वाद् भवतु यूपपरः। परास्य हविर्वहनालिङ्गलिङ्गिता पुरोरुक यजतौ संनिपत्याग्नेर्वनस्पतिशब्देन अभिधायिका ऋग् भवति। तद्यथा--॥ १८॥

"देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम्।
5 प्रदक्षिणिद्रशनया नियूय ऋतस्य वक्षि पथिभी रजिष्ठैः॥"

**देवेभ्यो वनस्पते हवींषि, हिरण्यपर्ण ऋतपर्णापि वोपमार्थे स्याद्धिरण्यवर्णपर्णेति। प्रदिवस्ते अर्थं पुराणस्ते सोऽर्थो यं ते प्रब्रूमः। यज्ञस्य वह पथिभी रजिष्ठैर्ऋजुतमै रजस्वलतमैः। प्रपिष्ठतमैरिति वा। तस्यैषापरा भवति॥ १९॥**

10 **देवेभ्यो वनस्पते** इति। वसिष्ठस्यार्षम्। हे **वनस्पते** अग्ने **हिरण्यपर्ण** हिरण्योपमपर्णज्वलित **देवेभ्यः हवींषि वक्षि-वह**। कथम् इति। **प्रदक्षिणित्**-प्रदक्षिणं देवानां यो हविर्वहनधर्मः तेन पितृधर्मविपरीतेन। कथं वह। **रशनया नियूय**

2. *a. d.* °शब्दार्थत्वात्परो यूपपरः परास्य हविर्वहन etc., *m.* °शब्दार्थत्वाद् भवतु यूपपरोऽपरा अस्य हवि°, *bi. j.* °शब्दार्थत्वाद् भवतु परोक्षो यूपः, परम्परा अस्य हविर्वहन°. 4. R. हवींषि. 6. R. हवींषि; C. ऋतुपर्ण for ऋतपर्ण of all others. 8. The Bi. Mss. (ङ, च) and R. रजस्वलतमैस्तापिष्ठतमैरिति, Bi. mss. (क, ग) °तमैः प्रपिष्ठतमैरिति, Bi. J. as text. 9. Bi. J. conclude VIII. iii. 4 with भवति. 10. *a. d. m.* omit वसिष्ठस्यार्ष; *a. d.* omit हिरण्यपर्ण. 11 *a. d.* हिरण्योपमपर्णज्वलित, *m.* हिरण्योपमर्णज्वलित, *bi.* ms. (ख) does not read ज्वलित. 12. *a. d. m.* वह, *bi. j.* वहनं.

1. इहापि उपावसृज इति—The word इहापि is misplaced. It makes better sense when read immediately after the word शाकपूणिः, as अग्निरिति शाकपूणिः इहापि.

4-5. MS. 4. 13. 7: 208. 10; KS. 18. 21; TB. iii. 6. 11. 2.

6-7. Durga does not read the clause—**हिरण्यपर्ण ऋतपर्णापि वोपमार्थे स्याद्धिरण्यवर्णपर्णेति.**

7. Durga omits the sentence **पुराणस्ते सोऽर्थो यं ते प्रब्रूमः.**

9. Durga omits **वा.**

9. Durga reads **अथ एषा** in place of **तस्य एषा** (see page 883, l. 10).

–निबध्य सुनिपुणम् । यथा न किञ्चिदपि अत्र हविरनवेक्षितं धूम्रभूतेन प्रभ्रश्येत्तथा । अपि च **ऋतस्य–यज्ञस्य पथिभिः रजिष्ठैः** । य एव प्रसिद्धाः पन्थानो यज्ञस्य हविर्वहनाय देवान् प्रति । ऋजुभ्योऽपि **ऋजुतमैः** । यैः कालो नातिहीयेत । **रजस्वलतमैर्वा**–अत्यर्थमुदकवद्भिः । ते हि पथिकानां सुखाः । **प्रपिष्टतमैः इति** । सुरूपतमैः प्रहततमस्कैर्यैः असंमोहः स्यात् गच्छतस्तैः । न च पुनरविदिते कर्मणि त्वां विनियुज्महे । यतो ब्रूमः । **प्रदिवः ते अर्थम्** । चिरन्तनमेव **ते अर्थं** हविर्वहनाधिकारलक्षणं विद्मः । "अयं यो होता"–इत्येवमादिमन्त्रेभ्यः "देवा दधिरे हव्यवाहम्" –इति । अतो ब्रूमहे वहेति । एवमेतस्मिन् मन्त्रे हविर्वहनसंयोगाद् वनस्पतिशब्दस्याग्निरभिधेयः ॥

अथ **एषा** वनस्पतेः अग्नेः **अपरा** ऋक् **भवति** । सा पुनः किमर्थम् इति । प्रायोवृत्त्युपदर्शनार्थं बहुषु मन्त्रेष्वग्निर्वनस्पतिरिति ॥ १९ ॥

**"वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान् ।**
**वह देवत्रा दिधिषो हवींषि प्र च दातारममृतेषु वोचः ॥"**

---

1. *a. d.* अत्र, *bi. j.* तत्र; *a. d.* and the *bi.* ms. (ख) omit धूम्रभूतेन, *bi. j. m.* read it; *a. d. m.* प्रभ्रश्येत्, *bi. j.* प्रधस्येत्. 3. *d.* ऋतुभ्यो ऋतुतमैः for ऋजुभ्योऽपि ऋजुतमैः. 3–4. *d.* रजुस्वलतमैः. 4. *d.* प्रविष्टतमैः. 5. *a. d. m.* add वह after तैः. 7. *d.* अयं होतेत्येवमादिमंत्रेभ्यो. 8. *a. d.* हविर्वहनयोगात्. 10. *d. m.* add एषा again after अग्नेः; *a. d.* omit ऋक्. 10–11. *d. m.* प्रायोवृत्त्युपप्रदर्शनार्थं. 13. Bi. J. वहा देवत्रा, C. D. R. वह देवत्रा; D. दधिषो, C. दिधिषो; R. हवींषि.

---

7. "अयं यो होता.........देवा दधिरे हव्यवाहम्"—RS. X. 52. 3.

12–13. RS. X. 70. 10 (a); MS. 4. 13. 7: 209. 1–2; KS. 18. 21; TB. 3. 6. 12. 1; ĀŚr. Sû. 9. 5. 2 (a).

13. दिधिषो हवींषि—Yâska explains दिधिषो हवींषि as यज्ञे दातुर्हवींषि. His reading therefore must have been दिधिषोः, gen. sing. of दिधिषु 'the giver'. Durga also reads दिधिषोः, and not दिधिषो or दधिषो (MS.) as the *Saṃhitâs* do, and explains it as दिधिषोः दातुः यजमानस्य, 'of the giver, i. e., of the sacrificer'. दिधिषो in the stanza is however unaccented and can therefore be vocative sing. only of दिधिषु and refer to वनस्पति–अग्नि, and mean 'O, desirous of giving'. दिधिषः or दधिषः if at all would be a wrong reading.

**वनस्पते रशनया नियूय सुरूपतमया। वयुनानि विद्वान् प्रज्ञानानि प्रजानन् वह देवान् यज्ञे दातुर्हवींषि। प्रब्रूहि च दातारममृतेषु देवेषु॥**

**स्वाहाकृतयः। स्वाहेत्येतत् सु आहेति वा। स्वा वागाहेति वा। स्वं प्राहेति वा। स्वाहुतं हविर्जुहोतीति वा। तासामेषा भवति॥ २०॥**

5 **वनस्पते रशनया** इति। वनस्पतेरेव याज्या। हे **वनस्पते रशनया नियूय पिष्टतमया–सुरूपतमया** अत्यर्थं दृढया एवमादिगुणयुक्तया रशनया नियूय अप्रध्वंसनाय निबध्य **वयुनानि** स्वाधिकारयुक्तानि **प्रज्ञानानि** अस्मदुपकाराय **विद्वान्**–जानानः **वह** एतानि अस्मत्प्रत्तानि **हवींषि** अस्य **दिधिषोः–दातुः** यजमानस्य अभिमतफलप्राप्तये **देवत्रा–देवान्** प्रति। **प्र दातारम् अमृतेषु**

10 **वोचः** -प्रवोचः। कथयस्व एनं **दातारम् अमृतेषु–देवेषु** अमुना यजमानेन एतानि हवींषि प्रत्तानि। एवमग्निर्वनस्पतिः।

यत् पुनरेतदुक्तं यूपाञ्जनीयायां 'यूपे वनस्पतिशब्दः'–इति। अत्र ब्रूमः। अग्निरेवासौ यूपान्तर्गतो यूपात्मना वर्तमानो यूपाञ्जनीयायां वनस्पतिशब्देनोच्यते। तदुक्तम् 'एष हि वनानां पाता पालयिता वा'–इति। यस्मादन्तर्गतो वनानां वनानि

15 न दहति तस्मादेष वनस्पतिः। उक्तं च, 'योऽयमृबीसे पृथिव्यामग्निरन्तरोषधिवनस्पतिषु

---

2. R. हवींषि. 4. Bi. J. conclude VIII. iii. 5 with भवति. 5. *a. d. m.* omit नियूय. 8. *a. d.* अस्मत्प्रवृत्तानि, *m.* अस्मत्प्रदत्तानि, *bi. j.* अस्मत्प्रत्तानि 8–9. *m.* अस्य दिधिषो दातुर्यजमानस्य. 10. *a. d.* add प्रवोचः after वोचः, *bi. j.* do not have प्रवोचः; *d.* यजमानेनैतानि, *m.* यजमानेन, *j.* यजमाने एतानि. 13. *a.* वर्त्मात्मनो for वर्तमानो; *d.* वर्तमात्मनो? 14. *a. d.* add वा after पाता. 15. *d.* तस्मादेव for तस्मादेष; *a. d. m.* ऋबीसे, *bi.* ऋबीषे; *m.* औषधि for ओषधि.

---

2. **यज्ञे**—The mss. (क, ख, ग) of Bi. do not read **यज्ञे**. Durga also does not explain it.

5. वनस्पतेरेव याज्या—See MS. 4. 13. 7.

12. यूपे वनस्पतिशब्दः—Nir. VIII. 18; page 881, line 16.

14. एष हि वनानां etc.—Nir. VIII. 3

15. योऽयमृबीषे etc.—Nir. VI. 36

अप्सु तमुन्निन्यथुः सर्वगणं सर्वनामानम् '–इति । सोऽयमग्निरेवानेन वनस्पतिशब्देन यूपाभिधानेन वनस्पतिरभिधेय इत्यदोषः ।

अपरे पुनः **अञ्जन्ति त्वां** इति अधियज्ञात् पृथक्त्वेनाधिदैवतमुत्पाद्य शाकपूणि-मतेनाग्निपरत्वमेव वर्णयन्ति । यदाप्यधियज्ञे अस्य यज्ञाङ्गाभिवादः तदापि नाधिदैवतम-ग्निमाभिधातुमस्याः परिहीयते सामर्थ्यं मन्त्रार्थे इति । तत् कथम् । **अञ्जन्ति त्वाम॑ध्वरे** 5 **दे॒वयन्तः** । हे भगवन् अग्ने **अञ्जन्ति त्वाम्** आघाराद्याभिराहुतिभिः **अध्वरे**–यज्ञे **दे॒वयन्तः देवान् कामयमानाः** यस्मात् त्वम् **ऊर्ध्वः स्थास्यसि** ज्वलिष्यासि । यच्च ते **क्षयः मातुः**–वेद्याः **उपस्थे–उपस्थाने**–उपरि उत्तरवेद्याः **क्षयः**–निवासः कृतः तत्रोपज्वलितः **द्रविणानि**–धनानि यज्ञसिद्धौ यज्ञफलान्यस्माकमवश्यं **दास्यसि** इति अतस्त्वामाहुतिभिरञ्जन्ति । 10

कात्थक्यपक्षेऽपि '**दे॒वेभ्यो॑ वनस्पते,**' '**वन॑स्पते रश॒नया॑ नि॒यूय॑**'– इत्यनयोरर्थयोजना । हे **वनस्पते**–वानस्पत्य यूप त्वमुच्यसे **हिरण्यपर्ण ऋतपर्ण वह** एतानि **हवींषि** । अनुत्थिते त्वयि न एतानि उह्यन्त इति त्वमेवैषां वोढा इति प्रतीमहे । कथं च पुनर्वह । **प्रदक्षिणित्** । यथैतानि वोढव्यानि अविपर्यस्यन्ते तेन विधिना **रशनया** एतया त्रिवृता **नियूय**–परिवीय त्वमात्मानम् । **ऋतस्य–यज्ञस्य** 15 ये पन्थानः रजिष्ठाः । **प्रदिवः**–चिरंतन एवायमर्थस्त्वया हवींषि वोढव्यानीति । विज्ञायते च

"यूपेन वा आहुतयः स्वर्गं लोकं यन्ति"

–इति । **वन॑स्पते रश॒नया॑ नि॒यूय॑** । हे **वनस्पते**–वानस्पत्य यूप **रशनया पिष्टतमया–सुरूपतमया** त्रिवृता **नियूय**–परिवीय त्वमात्मानं **वह** एतानि **हवींषि** 20

1. *a. d.* सो for यो of *bi. j.* 3. *d. m.* त्वा for त्वां· 4. *a. d.* अग्निपरत्वमेव, *bi.* अग्निमेव; *d.* तथापि for तदापि· 5. *a. d.* मित्रसामर्थ्यं इति for सामर्थ्यं मंत्रार्थे इति. 6. *m.* आघाराज्याभि°. 7. *m.* ऊर्ध्वं स्थास्यासि· 9. *m.* यज्ञसिध्यै for यज्ञसिद्धौ of *bi. j.*; *m.* दास्याति for दास्यसि. 11. *a. d.* काथक्यपक्षेऽपि. 12. *a. d.* हतपर्णं for ऋतपर्णं. 13. *a. d.* समुच्छ्रिते for अनुत्थिते. 14–15. *m.* °स्यन्ते तेन विधिना, *bi.* अविपर्यस्यन्नेतेन विधिना. 16. *a d. m.* प्रदिवश्चिरतन एवायमर्थ.. 18. *d.* स्वर्गलोकं· 19. *a. d.* omit वनस्पते. 20. *d.* तृवृता for त्रिवृता of *bi. j.*

3. अञ्जन्ति त्वां etc.—See p. 880, ll. 17–18

11. दे॒वेभ्यो॑ वनस्पते—See p. 882, ll. 4–5.

18. यूपेन वा आहुतयः—MS. 4. 8. 8.

स्वाधिकारप्रयुक्तानि **प्रज्ञानानि प्रजानन् देवत्रा–देवान्** प्रति **दिधिषोः** हवि-**र्दातुः** अर्थसिद्धये । **प्रब्रूहि च** एनं **दातारम् अमृतेषु–देवेषु** इति ॥

**स्वाहाकृतयः** (१३) निर्वक्तव्याः । काः पुनस्ताः स्वाहाकृतयः । याः यागार्थमाहूय उत्तमे प्रयाजे स्वाहाकारेण संस्क्रियन्ते ताः स्वाहाकृतयः । ननु **सद्यो जातः** इत्याग्नेयो 5 मन्त्रः । सत्यमाग्नेयो मन्त्रः शौनकस्य । तथापि स्वाहाकृतयः समाम्नाताः । किं कारणम् । **सद्यो जातः** इत्यनुद्रुत्य अग्नेः स्तुतिमन्त्रे **स्वाहाकृतं हविरदन्तु देवाः** इति संप्रदानम् । तत्र देवताः संप्रदानमिति स्वाहाकृतयः समाम्नाताः नाग्निरिति ।

अथ स्वाहाकृतयः कस्मात् । स्वाहा स्वाहेत्यनुकीर्तनेनासामुत्तमस्य प्रयाजस्य प्रैष-संस्कारः क्रियत इति स्वाहाकृतयः । अथ **स्वाहा–इति एतत्** कस्मात् । **सु–**सुष्ठु 10 **आह इति वा** । यदेव संप्रदानदेवतायै

"किंचिदाज्यस्य"

–इत्यनेन मन्त्रेणाह

"तुभ्यमिदम्"

–इति तदेव **सु-आह**–शोभनमाह । एवमस्य **सुः** पूर्वपदम् **आह**–इत्युत्तरपदम् । 15 अथवा इदमन्यत् ब्राह्मणानुगतं निर्वचनम् ।

---

1. *a. d.* स्वाधिकारे प्रयुक्तानि यज्ञे यानि प्रजानन् देवत्रा च देवान् प्रतिदिधिषोः (*d.* षो) etc., *bi. j.* omit देवत्रा–देवान्. 1–2. *m.* दिधिषो हविर्दातुरर्थसिद्धये. 3. *d.* स्वाहाकृतयः वक्तव्याः for स्वाहा° निर्वक्तव्याः, *m.* स्वाहाकृतयो निर्वक्तव्यम्; *m.* omits याः. 5. *m.* omits सत्यमाग्नेयो मन्त्रः; *a. d.* omit मन्त्रः before शौनकस्य. 5–7. *m.* omits through mistake the passage from किं कारणम् to समाम्नाताः (l. 7 below). 6. *a. d.* स्तुतिमन्ते for स्तुतिमन्त्रे. 7. *a. d.* तत्र देवताः संप्रदानमिति, *bi. j.* तत्र देवतार्थ संप्रदानमिति. 9. *m.* omits सु and reads सुष्टु for सुष्ठु.

---

3. 'स्वाहाकृतयः'—Nigh. V. 2. 13.

4. उत्तमे प्रयाजे—The fifth *Prayája* is so called. See ÁŚr. Sû. 1. 5.

4. सद्यो जातः—RS. X. 110. 11. See below page 887, lines 12–13.

11. "किंचिदाज्यस्य"—The quotation is not traced

13. "तुभ्यमिदम्"—The quotation is not traced

**" स्वा वागाहेति वा "**

इति । विज्ञायते हि ।

" तं स्वा वागभ्यवदज्जुहुधीति तत् स्वाहाकारस्य जन्म "

इति । अत्र च स्वशब्दः पूर्वपदम् उत्तरपदं तथैव । अथ

**" स्वं प्राह इति वा "।** 5

को विशेषः पूर्वस्मात् । पूर्वपदस्य कारकान्यत्वम् । स्वा वागाहेति कर्तरि, स्वं प्राहेति कर्मणि । प्रपूर्वं चोत्तरपदं प्रकर्षद्योतनाय ।

**" स्वाहुतं हविर्जुहोति इति वा "।**

यदनेनैव हविर्जुहोतीति तदेव सुष्ठापाद्य यथाभिधानमग्नौ जुहोतीति हविःप्रधानोऽत्र निर्देशः । 10

**तासाम्** स्वाहाकृतीनाम् **एषा भवति—॥ २० ॥**

**" सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः ।**
**अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवाः ॥ "**

---

1. *a. d. m.* omit वा after आहेति. 1-2. *d. m.* omit वा इति ।. 3. *a. d.* तं स्वा वागवदज्जु°. 4-5. *d. m.* read वा before स्वं. 5. *a. d. m.* omit वा after प्राह इति. 6. *d.* पूर्वपदस्य for पूर्वपदेऽस्य of *bi. j. m.* 8. *a. d. m.* omit वा after जुहोति इति. 9. *a. d.* omit इति after अग्नौ जुहोति. 11. *a. d. m.* तासामेषा भवति स्वाहाकृतीनाम्.

---

1. " स्वा वागाहेति वा "—The quotation is not traced.

3. तं स्वा वागभ्यवदत्°—MS. 1. 8. 1; TB. 2. 1. 2; Cf. KS. 6. 1.

5. " स्वं प्राह इति वा "—The quotation is not traced.

8. " स्वाहुतं हविः जुहोति इति वा "—The quotation is not traced.

12-13. RS. X. 110. 11; AV. 5. 12. 11; VS. 29. 36; MS. 4. 13. 5: 205. 5; KS. 16. 20; TB. 3. 6. 3. 4.

**सद्यो जायमानो निरमिमीत यज्ञमग्निर्देवानामभवत्पुरोगामी । अस्य होतुः प्रदिश्यृतस्य वाच्यास्ये स्वाहाकृतं हविरदन्तु देवाः ।**

**इतीमा आप्रीदेवता अनुक्रान्ताः ।**

**अथ किंदेवताः प्रयाजानुयाजाः । आग्नेया इत्येके ॥ २१ ॥**

5 **सद्यो जातः** इति । योऽयमग्निः **सद्यः जातः—जायमानः** अनन्तरमेव **व्यमिमीत यज्ञं** निर्वर्तयति यज्ञम् । यश्च जातमात्र एव **अग्निः देवानाम् अभवत् पुरोगाः—पुरोगामी**—अग्रतोगामी प्राधान्येन । तस्य **अस्य होतुः**—देवानामाह्वातुः **प्रदिशि**—प्राच्यां दिशि **ऋतस्य**—गतस्य प्रणीतस्य उत्तरवेदिकत्वेन **वाचि—आस्ये** । वाचीत्यास्यमेवापेक्ष्य । **स्वाहाकृतं** स्वाहाकारवता मन्त्रेण प्रक्षिप्तं **हविः** एतदाज्यम् 10 **अदन्तु**—पिबन्तु **देवाः**—स्वाहाकृतयः इति ।

**इति**—करणोऽधिकारसमाप्त्यर्थः । प्रदर्शनार्थो वा । **इमाः**—एता एव एकादश **आप्रीदेवताः अनुक्रान्ताः** इध्माद्याः । ननु द्वादशानामनुकीर्तनम् । सत्यम् । अनुक्रान्ता द्वादश । तास्तु एकादश वनस्पत्यन्ताः यासामिह विचारः । न तु स्वाहाकृतिषु विचारोऽस्ति । तत्तद्देवतासंस्कारपरत्वात् उत्तमस्य प्रयाजस्य यजतौ एकादशग्रहणात् एकादश-

---

2–3. The Bi. mss. ङ, च and C. D. R. add इति यजन्ति after देवाः and before इतीमा. 4. Bi. J. conclude VIII. iii. 6 with इत्येके. 7. *a. d.* omit अस्य. 8. *d.* omits गतस्य; *d. m.* उत्तरवेदिकत्वेन, *bi.* उत्तरवेद्यादिकत्वेन. 9. *a. d. m.* स्वाहाकारवता मन्त्रेण, *bi.* स्वाहाकारबलात् मन्त्रेण. 10–11. *a. d. m.* स्वाहाकृतय इति, *bi.* स्वाहाकृतयः । इति इतिकरणो. 11. *a. d. m.* omit इमाः. 12–13. *m.* द्वादशानामासामनुकीर्तनं सत्यम् अनुक्रान्ता द्वादश तास्तु, *d.* द्वादश यासामनुकीर्तनसत्यमनुक्रांताना ता एकादश वनस्पत्यः, *bi. j.* सत्यम् । अनुक्रान्तानां तु एकादश वनस्पत्यन्ताः. 13. *a. d.* read after एकादश,—वनस्पत्यः । न तु स्वाहाकृतिषु विचारः. 14. *d. m.* तत्तद्देवतासंस्कारपदत्वात्; *a. d.* यजते for यजतौ.

---

2–3. **देवा इति यजन्ति । इतीमा**—The Bi. mss. ङ, च and C. D. R. add the words इति यजन्ति after देवाः; but we do not introduce them into the text as Durga does not read them.

4. **प्रयाजानुयाजाः**—Durga reads अथ किंदेवताः प्रयाजाः only. He does not also explain **अनुयाजाः**.

प्रयाजविषय एवोत्तरो विचार इत्याचार्याभिप्रायो गम्यते । ततः किम् । यद्यनुक्रान्तास्तान् प्रति विचारो वर्तिष्यते । ननु विचारितमेव ' यज्ञेध्म इति कात्थक्यः अग्निरिति शाकपूणिः ' इत्येवमादि । सत्यम् । विचारितमेतत् । स तु प्रत्येकमाप्रीदेवतापदेषु विचारः । अयं तु सामान्यप्रकरणगत आसामेव विचारोऽनिश्चितानां निश्चयावधारणार्थः । निश्चितेन हि व्यवस्थितेन विधिना भवितव्यम् । अधियज्ञे यजतौ देवताध्यानाङ्गभावश्रवणात् तदेतद्वि- 5 षयमनिश्चितम् ।

**अथ** इति । विचाराधिकारवाचिना अथशब्देन विचारमधिकृत्योपोद्धन्ति **अथ किं-देवताः प्रयाजाः** इति । का प्रयाजेषु देवता इति । प्रयाजा इति आश्रुतादिर्यजमानो-पस्थानान्तः क्रियाकलाप उच्यते । प्रयाजेषु हूयमानेष्विति प्रसिद्धत्वात् । कुतः संशयः । नानादेवता एव प्रयाजप्रवादाः । आप्रीणां वषट्कारेण संबन्धात् सर्वस्य चान्यस्य 10 समञ्जसो विशेषभावः । एवं सति विप्रतिपत्तिराचार्ययोः कात्थक्यशाकपूण्योः । तस्माद् व्यवस्थाप्यत इति ।

कथं नानादेवताः प्रयाजप्रवादाः इति । तत्र तावत् **आग्नेयाः इति एके** । कुतः ।

" आग्नेया वै प्रयाजा आग्नेया अनुयाजाः "

इति च ब्राह्मणम् । तत्र ये एतस्मिन्नर्थे सौचीकेनाग्निना विश्वैश्च देवैः परस्परसंवादे 15

---

1–2. *a. d.* omit तान् before प्रति. 2. *a. d.* काथक्यः. 3–4. *a. d.* अयं तु सामान्यप्रकरणगत आसामेव, *bi. m.* अयं तु सामान्यः प्रकरणगतश्चासामेव विचारः. 5. *d.* यजतै for यजतौ. 8. *a. d. m.* प्रयाजा', *bi. j.* प्रयाजः. 8–9. *a. d.* यजमानोपस्थानान्तः क्रियाकलाप उच्यते, *bi. j.* °स्थानान्तक्रिया°. 10. *a. d.* प्रयाजवादाः. 11. *d.* प्रतिपत्तिः for विप्रतिपत्तिः; *a. d.* काथक्य°. 11–12. *a.* only reads कस्माद् व्यवस्थाप्यत इति, *d. m.* व्यवस्थाप्यन्त इति, *bi.* व्यवस्थाप्यते इति. 13. *a. d.* प्रवादाः for प्रयाजप्रवादाः. 15. *a.* तस्मिन् for एतस्मिन्; *m.* परस्परं संवादे.

---

2. विचारितमेव यज्ञेध्म etc.—See above, Nir. VIII. 5.

8. आश्रुतादिः—Cf. 'ओ श्रावया' इत्यध्वर्युर्ब्रवीति । एतदाश्रावणम् । 'अस्तु श्रौषट्' इत्यग्नीध्रः । एतत् प्रत्याश्रावणम् । तदनन्तरं प्रयाजयाज्याः । ततः प्रयाजनाम्न्य आहुतयः । अन्ते यजमानकृतं ध्यानम् । Satyâṣâḍha Śr. Sû. 6. 8.

14. " आग्नेया वै प्रयाजा etc. "—The quotation is untraced.

दृष्टे ऋचौ । स हि किल सौचीकोऽग्निर्विश्वैर्देवैः सह संवदते । तमूचुः एहि नो हवींषि वह इति । स तानुवाच यज्ञे भागोऽस्तु इति । ते तं प्रत्यूचुः वृणीष्व इति । सोऽनयर्चा वव्रे ॥ २१ ॥

" प्रयाजान्मे अनुयाजांश्च केवलानूर्जस्वन्तं हविषो दत्त भागम् ।
5 घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवाः ॥"

" तव प्रयाजा अनुयाजाश्च केवल ऊर्जस्वन्तो हविषः सन्तु भागाः ।
तवाग्ने यज्ञो३ऽयमस्तु सर्वस्तुभ्यं नमन्तां प्रदिशश्चतस्रः ॥ "

" आग्नेया वै प्रयाजा आग्नेया अनुयाजाः । "
इति च ब्राह्मणम् । छन्दोदेवता इत्यपरम् ।
10 " छन्दांसि वै प्रयाजाश्छन्दांस्यनुयाजाः । "
इति च ब्राह्मणम् । ऋतुदेवता इत्यपरम् ।

1. *u. d. m.* समूदेते for संवदते. 2. *u. d. m.* यज्ञे भागो मेऽस्त्विति.

1. सौचीकोऽग्निः—For the story of *Sauchika-agni* cf.—' त्रयो वै पूर्वेऽग्नयः प्राधन्वन् हव्यं देवेभ्यो वहन्तः । वषट्कारः प्रावृश्चत् । अथ योऽयमिदानीं स भीषा अपाद्रवत् । ईद्दगु स आरिष्यतीति । तं देवा अपाशासुः । उप नः आवर्तस्व इति । सोऽब्रवीद् भागो मेऽस्त्विति । वृणीष्वेत्यब्रुवन् । सोऽब्रवीत् । त्रयो वै मे पूर्वे भ्रातरः प्राधन्वन् हव्यं देवेभ्यो वहन्त' । वषट्कारः प्रावृश्चत् । तेषां भागोऽस्त्विति । वृणीष्वेत्यब्रुवन् । सोऽब्रवीत् । यदेव किंच आहुतं बहिष्परिधि स्कंदेत् तदेव तेषां भागधेयमसदिति तेषां वै एतद्भागधेयम् । अथ उपावर्त्स्यामि इति । ते वै अन्वायन् ( MS. 3. 8. 6; ŚB. 1. 3. 6. 13–16 ); cf. also BD. VII. 61–74.

4–5. RS. X. 51. 8.

6–7. RS. X. 51. 9.

8. " आग्नेया वै प्रयाजा "—The quotation is not traced. Durga omits the passage **आग्नेया वै प्रयाजा आग्नेया अनुयाजाः । इति च ब्राह्मणम्.**

9–10. Durga does not repeat the sentences from **अपरम् । छन्दांसि वै प्रयाजाः**...to **इति च ब्राह्मणम्** ( page 891, line 6 ); nor does he comment upon them.

10. छन्दांसि वै etc.— Cf. ŚB. 1. 3. 2. 9.

"ऋतवो वै प्रयाजाः पशवोऽनुयाजाः ।"

इति च ब्राह्मणम् । प्राणदेवता इत्यपरम् ।

"प्राणा वै प्रयाजा अपाना अनुयाजाः ।"

इति च ब्राह्मणम् । आत्मदेवता इत्यपरम् ।

"आत्मा वै प्रयाजाः प्रजा अनुयाजाः ।" 5

इति च ब्राह्मणम् ।

आग्नेया इति तु स्थितिः । भक्तिमात्रमितरत् । किमर्थं पुनरिदमुच्यते । "यस्यै देवतायै हविर्गृहीतं स्यात् तां मनसा ध्यायेद्वषट्करिष्यन् ।" इति ह विज्ञायते ॥

तान्येतान्येकादशाप्रीसूक्तानि । तेषां वासिष्ठमात्रेयं वाध्र्यश्वं 10 गार्त्समदमिति नाराशंसवन्ति । मैधातिथं दैर्घतमसं प्रैषिकमित्युभयवन्ति । अतोऽन्यानि तनूनपात्वन्ति तनूनपात्वन्ति ॥ २२ ॥

---

1. C. D. R. and the B1. mss. ङ, च read as ऋतवो वै प्रयाजा ऋतवोऽनुयाजा इति च ब्राह्मणम् and add after ब्राह्मणम् and before प्राणदेवता,—पशुदेवता इत्यपरं पशवो वै प्रयाजाः पशवोऽनुयाजा इति च ब्राह्मणम्. B1. J. omit the passage from पशुदेवता...to ब्राह्मणम्. 3. C. D. R. and the B1. mss. ङ, च read प्राणा वै प्रयाजा· प्राणा वा अनुयाजा इति च ब्राह्मणम्· 4. C. D. R. and ङ, च read आत्मदेवता इत्यपरमात्मा वै प्रयाजा आत्मा वा अनुयाजा इति च ब्राह्मणम्. 5. The B1. ms. ख reads प्रजानुयाजा for प्रजा अनुयाजाः. 10. इतीमान्येकादश for तान्येतान्ये° of B1. J. 11. D. N. नराशंसवंति, C. as text. 12. R. reads तनूनपात्वन्ति only once. Here ends VIII. iii. 7. The third pâda of the eighth adhyâya also ends here.

---

1. ऋतवो वै प्रयाजाः—Cf. ŚB. 1. 3. 2. 8; KB. 3. 4; MS. 1. 4. 12.

1. पशवो अनुयाजाः—Cf. KB. 3. 4.

3. प्राणा वै प्रयाजाः—Cf. ŚB. 11. 2. 6. 27; KB. 7. 1: 10. 3; AB. 1. 11. 3: 17. 14.

5. आत्मा वै प्रयाजाः— Cf. TS. 6. 1. 5. 4; KS. 23. 9.

8. यस्यै देवतायै—AB. 11. 8. Cf. GB. 2. 3. 4; AB. 3. 8. 1.

12. तनूनपात्वन्ति Cf. BD. II. 154-7.

**प्रयाजान् मे अनुयाजांश्च**–इति। हे विश्वेदेवाः **प्रयाजान् मे**–मम **केवलान्**–अनन्यदेवतासंपृक्तान् अथवा निरवशेषान्। **ऊर्जस्वन्तं**–रसवन्तं सर्वस्य **हविषः** अवधार्य **दत्त भागं** यज्ञे। **घृतं च अपां** सारभूतं ताभ्य उत्पन्नं पिबेयमहं प्रथममाज्यभागे। **पुरुषं च ओषधीनाम्** ओषधिमयानां च हविषां मम पुरुषं–
5 पुरोडाशम्। एवं नित्यं मम भागः स्यात्। मम **अग्नेः** हे **देवाः दीर्घमायुः अस्तु**। यथा मम पूर्वे भ्रातरः हविर्वहन्तः वषट्कारप्रवृक्णाः मम्रुः नाहं तथा मृषीयेत्यभिप्रायः। त्रयः पूर्वेऽग्नयः प्राग्घव्यं वहन्तो देवेभ्यः तान् वषट्कारः प्रावृश्चतेति। एवमुक्तास्ते अनयोत्तरयर्चानुजज्ञिरे तस्य तं भागम्। **तव प्रयाजा अनुयाजाश्च केवल ऊर्जस्वन्तो हविषः सन्तु भागाः**। यथा त्वयोक्तम्। अपि च किं बहुना। **तवाग्ने**
10 **यज्ञोऽयमस्तु सर्वः**। त्वदधीन एवायं यज्ञः सर्वोऽस्तु। किंच। **तुभ्यं नमन्तां प्रदिशश्चतस्रः**। प्रदिशोऽन्तर्भूता दिक्ष्वेव। दिङ्निवासीनि भूतानि भोग्यत्वेन कल्पन्तामित्यर्थः। एवं तावदाग्नेयाः।

अथ नानादेवताः प्रवादा इति यदुक्तं तदनुप्रदर्श्यते। **छन्दोदेवता इति** एवमादि। तत् कोऽत्र निश्चयः। **आग्नेयाः इति तु स्थितिः**। तुशब्दोऽन्यप्रवादनिवृत्त्यर्थः। केन
15 विशेषहेतुना आग्नेयत्वमवध्रियते। ब्राह्मणं मन्त्रश्चोभयमाग्नेयत्वे। ब्राह्मणान्येव केवलान्यन्यदेवतात्वे। एतस्मात् विशेषहेतोरवधारयामः आग्नेयाः इति॥

अथ किमन्यदनृतमेवेति। **भक्तिमात्रमितरत्** छन्दोदेवता इत्येवमादि। तदुक्तं 'बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति' इति। **किमर्थं पुनरिदमुच्यते**।

1. *a. d. m.* omit मे. 2. *a. d. m.* अनन्यदेवसंपृक्तान्? 3. *a. d. m.* omit सारभूतं ताभ्य उत्पन्नं. 4. *d.* आज्यभागौ for आज्यभागे; *a. d. m.* हविषां, for हविषो of *bi. j.* 5. *a. d.* नित्यं भागः स्यात्. 6. *bi. j.* मत्पूर्वे, *a. d. m.* मम पूर्वे; *bi. j.* प्रवृक्णाः नाहं तथा मृषीष्टेत्याभिप्राय', *m.* °प्रवृक्णाः मम्रुः नाहं तथा मृषीयेत्यभिप्रायः, *a. d.* °प्रवृक्तो ममुहं तथा म्रिषीयेत्यभिप्रायः। 7. *a. d. m.* तत्र पूर्वेऽग्नयः प्राग्घव्यं देवेभ्यो वहंतो तान् वषट्कारः प्राकृतश्चेतति? (*d.* प्रवृतश्चतेति, *m.* प्रावृक्तेति, *bi. j.* प्रावृश्चतेति). 7–8. *a. d. m.* तेऽनयोत्तरयर्चा, *bi.* अनयोत्तरर्चा. 15. *m* आग्नेयत्वं मन्यते for आग्नेयत्वमव°; *m.* ब्राह्मणमंत्रश्च. 16. *a. d.* add इति before एतस्मात् and read अवादीधराम for अवधारयामः, *m.* अवधरामः. 17. *a. d.* किमन्यदनृतमेवेति, *m.* अनृतमेव भवति, *bi. j.* किमन्यदन्यतमम् इति; *m.* adds यत् before छन्दोदेवता. 18 *d.* omits इति after भवन्ति.

13. नानादेवताः प्रवादा इति यदुक्तं—See page 889, line 10.

17. तदुक्तं—See Nir. VII. 24.

कि विचारणे प्रयोजनम् इति । "**यस्यै देवतायै हविर्गृहीतं स्यात् तां मनसा ध्यायेत् वषट्करिष्यन्**" **इति ह विज्ञायते**। नानभिसंहितं हविर्देवतायै देवतामुपेयात् । एवमर्थः सर्वत्र विचारः । तथाहि दर्शितं 'यस्तु सूक्तं भजते यस्मै हविर्निरुप्यते' इति । मनसेति किमर्थम् । केन वान्येन ध्यायेत् इति । शृणु । सर्वेन्द्रियविषयप्रत्याहृतेन मनसा यथाश्रुतगृहीतभावितानां देवतानां नानात्वैकत्वत्रित्वेष्वात्मनो हृदये विज्ञानमयी- 5 मालिख्य प्रतिकृति लक्ष्यीकृत्यानन्यमनास्तत्कालमधीत्य याज्यां वषट्करिष्यंस्तदनुचिन्तनसंस्कारसन्तानैकरसेन मनसा हविष्याभिसंधाय देवतां ध्यायेत् इत्यस्य विशेषस्य द्योतनार्थप्राप्तस्यापि मनसो महणं मनसा ध्यायेदिति । ब्राह्मणं चैतदर्थमेवोक्तमाचार्येण । अत्र हि विशेषतः पुरुषार्थोऽवबद्ध इति । अतोऽन्यथा हि देवताचिन्तनशून्यं कर्म एतस्मिन् प्रधानकाले विकलमित्यफलमेव स्यात् । एष एव च ध्यानकालो यजमानस्य आहुति- 10 प्रक्षेपकालः । न तथान्येषामध्वर्युप्रभृतीनामाहुतिप्रक्षेपव्यापृतानाम् । लक्षणं हि होतेति ।

**तान्येतानि एकादश आप्रीसूक्तानि** अनुक्रान्तानि । दशधा दशतयीषु । तेषामेकादशं प्रैषिकमिति । इतीमानीत्युपप्रदर्शनार्थमितिकरणः । एष एव तेष्वपि निर्वचनविचारावधारणकल्पः । यस्तु तद्गतः कश्चित् विशेषः स उच्यते । **तेषां वासिष्ठम् आत्रेयम्** इत्येवमादि । वसिष्ठेन दृष्टं **वासिष्ठम्** । अत्रिणा दृष्टम् **आत्रेयम्** । 15

1. *m.* विचारेण. 2. *bi. j.* मनसेति नामभिः संहितं, *m.* नानभिसंहितं. 3. *a. d. m.* एवमर्थः, *bi. j.* एवमर्थश्च; *a. d.* निरुप्यते, *bi. j.* निरूप्यते. 5. *a. d. m.* देवतानां, *bi. j.* देवानां. 6–7. *m.* अनुचिन्तनं सन्तानैकरसेन. 8. *d.* omits मनसा after ग्रहण. 9. *a. d. m.* पुरुषार्थोऽवबद्ध इति, *bi. j.* पुरुषार्थो बबंध इति. 10. *a. d.* omit एव after एष. 10–11. *a. d.* आहुतिप्रक्षेपकालः, *bi. j. m.* आहुतिप्रक्षेपकाले. 11. *a. d. m.* न तथान्येषामध्वर्युप्रभृतीनां, *bi. j.* न तथाऽन्येषामप्यध्वर्यु° etc. 12. *a. d. m.* इतीमानि for तान्येतानि; *a. d.* omit दशधा. 13. *a. d.* omit इति after इतीमानि; *a. d.* उपप्रदर्शनार्थः इतिकरणः 14. *d.* omits सः before उच्यते.

1. यस्यै देवतायै—AB. XI. 8.

3. दर्शितम्—See Nir. VII. 11.

12. अनुक्रान्तानि—This should be वक्ष्यमाणानि as the eleven *Âprî* hymns are being dealt with in the sequel.

14. वासिष्ठम्—'जुषस्व नः समिधमग्ने अद्य' RS. VII. 2.

15. आत्रेयम्—'सुसमिद्धाय शोचिषे' RS. V. 5.

वध्र्यश्वेन दृष्टं **वाध्र्यश्वम्**। गृत्समदेन दृष्टं **गार्त्समदम्**। कः पुनरसौ विशेषः। **इति** एतानि **नाराशंसवन्ति**। अथ पुनः **मैधातिथं दैर्घतमसं प्रैषिकम् इति**। मेधातिथिना दृष्टं **मैधातिथम्**। दीर्घतमसा दृष्टं **दैर्घतमसम्**। प्रैष इति ग्रन्थः। तेषु यत् तत् **प्रैषिकम् इति** तदिहोपवर्णितम्। एतानि **उभयवन्ति**। **अतः अन्यानि** 5 यानि **चत्वारि** अवशिष्यन्ते तानि **तनूनपात्वन्ति**।

अत्र नाराशंसयाजिनो वसिष्ठादयः। तेभ्योऽन्ये तनूनपाद्याजिनः। तान्येतानि अमुना विभागेनावस्थितानि एकादश एकनिर्वचनावधारणानि।

अतोऽन्यानि दाशतयादाप्रीसूक्तवर्गात् सौत्रामण्यां त्रीणि, अग्न्यश्वमेधयोरेकैकम्। तत्र यानि सौत्रामण्यां तानि अनाग्नेयानीति न परिसंख्यातानि, प्रैषिकेऽननुक्रमणात् 10 तेषाम्। आग्निकाश्वमेधिके तु कर्मान्तरेऽपि विनियुज्येते, न केवलमाप्रीषु। इष्टकोपधाने आग्निकमुत्तमायां चितौ

---

1. *a. d. m.* omit इति. 3–4. *m.* omits through mistake the passage from मेधातिथिना दृष्टं...to प्रैषिकमिति, next line. 3. *a.* only reads प्रैषा इति for प्रैष इति. 4. *a.* omits एतानि. 5. *a.* only omits यानि. 6. *a. d. m.* read नराशंसयाजिनो, and तेभ्योन्येभ्योऽन्याजेन; *d.* omits एतानि after तानि. 9–10. *bi. j.* प्रैषिकेण तु क्रमणात् तेषाम्, *m.* प्रैषिकेऽननुक्रमणात्, *a. d.* प्रैषिक ( *d.* के ) मनुक्रमणे चैषा ( *d.* णत्वेषा )? 10. *d.* अग्निकश्वमविकेसुदनातरेपि विनियुज्येते ?

---

1. वाध्र्यश्वम्—' इमां मे अग्ने समिधं जुषस्वेळः ' RS. X. 70.

1. गार्त्समदम्—' समिद्धो अग्निर्निहितः पृथिव्याम् ' RS. II. 3.

3. मैधातिथं ( काण्वं )—' सुसमिद्धो न आ वह ' RS. I. 13.

3. दैर्घतमसम्—' समिद्धो अग्न आ वह ' RS. I. 142.

4. प्रैषिकं सूक्तं—This is the second *Praisa Sûkta* in the Kuntapâdhyâya of the Rigveda.

5. तनूनपात्वन्ति चत्वारि—( 1 ) अगस्तीनां ' समिद्धो अद्य राजसि ' RS. I. 188.
( 2 ) विश्वामित्राणां ' समित्समित्सुमनाः ' RS. III. 4.
( 3 ) कश्यपानां ' समिद्धो विश्वतस्पतिः ' RS. IX. 5.
( 4 ) भृगूणां ' समिद्धो अद्य मनुषो दुरोणे ' X. 110.

8. सौत्रामण्यां त्रीणि—MS. 3. 11. 1; 3. 11. 3; 3. 11. 11.

8. अग्न्यश्वमेधयोरेकैकम्—MS. 2. 12. 6; 3. 16. 2.

" समास्त्वाग्न ऋतवो वर्धयन्तु "

इति द्वादशाप्रीरप्येषु इति । हस्तग्रहणमाश्वमेधिकं यजमानस्य

" समिद्धो अञ्जन् कृदरं मतीनाम् "

इति आप्रीभिर्हस्तं गृह्णाति इति । अत आप्रीकार्ये प्रयोगव्यभिचारादाप्रीसूक्तवर्गमध्य-
पठिते अपि न परिसंख्याते आचार्येण । सौत्रामण्यां तु प्रथमस्य पशोर्या द्वितीया आप्री 5
तस्यामेकस्यामेव च नराशंसतनूनपातौ

" नराशंसः प्रति शूरो मिमानस्तनूनपात् प्रति यज्ञस्य धाम "

इति । तत्र नराशंसयाजिनां वसिष्ठप्रभृतीनां यागे निपातवत् तनूनपात्पदमनर्थकं पाद-
पूरणमात्रेणोपकारं मन्त्रे करोति । तथा तनूनपाद्याजिनां नराशंसपदम् । एष एव
अन्यत्राप्येवंविधे देवतापदे प्रयोगादन्यथाभाविनि देवतापदानां निपातकल्पः । तद्यथा । 10
अश्वहविषि अश्वप्रतिग्रहप्रायश्चित्ते " यदद्य सूर्य " इति सौर्यमित्रावरुणानां याज्यानुवाक्ये
तयोः मित्रार्यम्णोर्यानि लिङ्गानि तानि निपातवद्भवन्ति । यथा

" प्र चित्रमर्कं गृणते तुराय "

इति । अत्र संबोधनान्तमप्यग्निपदं नैपातिकं केवलमारुते हविषि । चातुर्मास्येषु वैश्वदेव-
प्रयोगे पुनस्तदेवार्थवत् 15

2. *m.* °रप्येयेष्विति. 7. *m.* नराशंसः प्रतिशंसोमिमान°. 8–9. *a. d.* °याजिनां नराशंसपदम् । एष एवान्यवत्तनूनपात्पदम (*d.* मन )र्थकं ? 10. *a. d.* देवतापद-निपातकल्पः. 11. *a. d.* 'यदद्य सूर्योति' सौर्यावरुणानां (*d.* ना ?) याज्यानुवाक्ये, *m.* यदद्य सूर्योति सौर्य°, *bi. j.* °ति सौर्यमित्रावरुणानां या°. 12. *a. d. m.* मित्रार्यम्णोः, *bi. j.* मित्रार्यम्णां; *d.* reads भवति for भवन्ति and after this यथा प्र चित्रमर्क; *m.* यथा, *bi. j.* तथा. 13. *m.* गृणाते, *bi. j.* गृणते. 14. *a. d. m.* केवलमारुते हविषि, *bi. j.* केवलं मारुते हविषि.

1. समास्त्वाग्न ऋतवो—MS. 2. 12. 5; VS. 27. 1; ŚB. 6. 2. 1. 21.
3. समिद्धो अञ्जन्—MS. 3. 16. 2; VS. 29. 1.
7. नराशंसः प्रति—MS. 3. 11. 1; VS. 20. 37.
11. प्रायश्चित्ते यदद्य सूर्य—MS. 2. 3. 3; KS. 12. 6; TS. 2. 3. 12.
11. याज्यानुवाक्ये—MS. 4. 12. 11; RS. VII. 60. 1.
13. प्र चित्रमर्क—RS. VI. 66. 9.
14. केवलमारुते हविषि—ÂŚ. Śr. Sû. III. 7.
15. अर्थवत् ÂŚ. Śr. Sû. II. 16.

"आग्निमारुतीं पृश्निमालभेत वृष्टिकामः"

इत्यत्र षड्चप्रयोगे । एष एव देवतापदविचारः ।

यस्मिन् पक्षे सर्वे आग्नेयाः प्रयाजाः **प्रयाजान् मे अनुयाजांश्च केवलान्** इति मन्त्रदर्शनात् तस्मिन् पक्षे 'तिस्रो देवीः'–इत्यत्र भारती द्युस्थाना, मध्य-
5 स्थाना सरस्वती, पृथिवीस्थाना इळा, इति च तद्देवतात्रयं दुःप्रतिसमाधानम् । स्थानान्तरापत्तिस्तुत्या चाग्निरेव एता देवता इति प्रतिसमाधानम् । सौत्रामण्यां तूत्तमे पशौ

"समिद्धो अग्निः समिधा सुसमिद्धो वरेण्यः"

इत्येता आप्रियः । तासु तनूनपादेकः

"तनूनपाच्छुचिव्रतः"

10 इति । नास्त्येव नराशंसः । तत्र नराशंसयाजिनां सौत्रामणीप्रयोगे कथं प्रयोगः । किं तनूनपाच्छुचिव्रत इत्येतदेव प्रयुज्यताम्, उतान्यतः कुतश्चिदाप्रीसूक्तादाह्रियतां नराशंस इति न्यायविदो मेधाविनः समनुगंस्यन्ते त्रयोदशस्य विशेषमिति ॥ २२ ॥

इति ऋज्वर्थायां निरुक्तवृत्तौ अष्टमस्य अध्यायस्य तृतीयः पादः ॥ ८, ३ ॥

इति जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ

15 त्रयोदशो(अष्टमो)ऽध्यायः समाप्तः ॥ ८ ॥

**द्रविणोदाः[१] कस्माद्[२] द्रविणोदा द्रविणसो[३] मेद्यन्तु ते[४]ऽथात आप्रियः समिद्धो[५] अद्य[६] तनूनपान्नराशंसस्याजुह्वानः[७] प्राचीनं[८] बर्हिर्व्यचस्वतीरा[९,१०,११] सुष्वयन्ती[१२] दैव्या होतारानोयज्ञं[१३] य इमे[१४] आविष्टयो[१५] वनस्पतिरुपाव[१६,१७] सृजाञ्जन्ति[१८] त्वा देवेभ्यो[१९] वनस्पते[२०] रशनया सद्यो[२१] जातः प्रयाजान्मे[२२]
20 द्वाविंशतिः ॥**

## इति निरुक्ते अष्टमो( उत्तरषट्के द्वितीयो )ऽध्यायः ॥ ८ ॥

2. *a. d.* इत्यत्र षड्चप्रयोगे, *m.* इत्यत्र षड्चः प्रयोगे, *bi. j.* इत्यत्र च प्रयोगे. 3 *a.* अस्मिन् for यस्मिन्. 5. *d.* इडा इति, *bi. j.* इळा इति; *a. d.* omit तत् after इति च. 8. *a. d.* तनूनपादेकः, *bi.* तनूनपादेवैकः. 10–11. *d.* किं तनूनपादेव प्रयुज्यताम्, *bi. j.* as text. 12. *a.* only reads समनुगम्यते विशेषमिति ?; *d.* reads after ॥ २२ ॥ इति निरुक्तवृत्तौ त्रयोदशाध्यायः समाप्तः.

1. आग्निमारुती—MS. 2. 5. 7.
3. प्रयाजान्मे—RS. X. 51. 8.
7. समिद्धो अग्निः—MS. 3. 11. 11; VS. 21. 12.
9. तनूनपात्—KS. 38. 10; VS. 21. 13.

# अथ नवमोऽध्यायः।



**अथ यानि पृथिव्यायतनानि सत्त्वानि स्तुतिं लभन्ते तान्यतोऽनुक्रमिष्यामः। तेषामश्वः प्रथमागामी भवति। अश्वो व्याख्यातस्तस्यैषा भवति ॥ १ ॥**

**अथ** इति विशेषाधिकारे। प्रकृतार्थादनन्तरमधिकरोति। **पृथिव्यायतनानि** 5 पृथिव्याश्रयाणि **सत्त्वानि** द्रव्याणि च तेषामप्यत्र विवक्षितत्वात्। **स्तुतिं लभन्ते** इति समाम्नातानि। **तानि अतः** परम् **अनुक्रमिष्यामः**। व्याख्यया इति शेषः। पूर्वस्मादाप्रीगणाद् विलक्षणोयमश्वादिगण इति पृथगधिकारवचनम्। पृथिव्यायतनत्वाविशेषात् सर्पलाङ्गलकुशुम्भकप्रभृतीनामप्यत्रैवान्तर्भावः। तान्यपि हि स्तुति लभन्ते, उपलक्षणं चेदमिति। तेषां युगपदभिधानासंभवात् क्रमोर्थादङ्गीकृतो भवति। सति च 10 क्रमे न मुख्यातिक्रमो न्याय्य इत्यतो ब्रवीति।

**तेषामश्वः** ( १ ) **प्रथमागामी भवति** इति। स पुनः किमर्थं प्रथमागामी। पुरुषानन्तरजन्मा इति हि विज्ञायते।

"तस्या आहुत्याः पुरुषोऽजायत। द्वितीयामजुहोत्। ततोऽश्वोऽजायत।"

2. D. reads हरिः ॐम्। before अथ. 4. Bi. J. conclude IX. i. 1 with भवति. 5. *a. d. m.* read अथ यानि पृथिव्यायतनानि सत्त्वानीत्येवमादि। अथ इति विशेषाधिकारे। *bi. j.* begin the *vrtti* with अथ इति विशेषाधिकारे only; *a. d.* add यानि before पृथिव्यायतनानि. 7. *a. d.* omit तानि before अतः; *d.* व्याख्यायेति for व्याख्ययेति of the text. 9. *bi. j.* °कुषुम्भक°, *a. d.* °कुशुम्भक°. 10. *d.* लक्षणं वेदमिति, *m.* लक्षणं चेदमिति, for उपलक्षणं चेदमिति of *bi. j.* and others. 11. *a. d.* क्रमेण मुख्यातिक्रमो न्याय्यः; *a. d.* omit through mistake from इत्यतो ब्रवीति to विज्ञायते ( line 13 below ). 12. *m.* किमर्थः, *bi. j.* किमर्थ. 13. *bi. j. m.* पुरुषानन्तरं जन्मा for पुरुषानन्तरजन्मा of *a. d.* 14. *a. d. m.* read द्वितीयामजुहोत् for द्वितीयां यत् जुहोत् of *bi. j.*

3. अश्वो व्याख्यातः—Nir. II. 27; cf. also Nir. I. 12.

12. ' अश्वः '—Nigh. V. 3. 1.

13–14. विज्ञायते। तस्या आहुत्याः—MS. 1. 8. 1.

विशिष्टे चाश्वमेधलक्षणे कर्मणि विशिष्टोस्याङ्गभावः इति । सः **अश्वः** च पुनरयं **व्याख्यातः** एव प्राक् । ' अश्नुते अध्वानं, महाशनो भवतीति वा । '–इत्यत्र ।

**तस्य एषा** प्राधान्यस्तुतिः अश्वस्तोमीये एव ॥ १ ॥

**" अश्वो वोळ्हा सुखं रथं हसनामुपमन्त्रिणः ।**
5 **शेपो रोमण्वन्तौ भेदौ वारिन्मण्डूक इच्छतीन्द्रायेन्दो परि स्रव ॥"**

**अश्वो वोळ्हा । सुखं वोळ्हा । रथं वोळ्हा । सुखमिति कल्याणनाम । कल्याणं पुण्यम् । सुहितं भवति । सुहितं गम्यतीति वा ।**

---

1–2. *a. d. m.* omit अश्वः, and *a. d.* read स च पुनरयं व्याख्यातः only, omitting एव प्राक्. 2. *a. d.* omit इत्यत्र. 4. Bi. J. अश्वो वोल्हा, C. and the Bi. ms. च, read अश्वो वोळ्हा. 5. R. इच्छति इन्द्रायेन्दो. 6. Bi. J. अश्वो वोल्हा सुखं वोल्हा रथं वोढा, D. R. and the Bi. ms. च read अश्वो वोढा सुखं वोढा रथं वोढा, C. अश्वो वोळ्हा सुखं वोळ्हा रथं वोळ्हा.

---

2. व्याख्यातः—Nir. II. 27; cf. also I. 12.

3. अश्वस्तोमीये—The '*aśva*', horse ( वाजिन् ) is praised in the *ṛk* quoted in Nir. IX. 3 ( मा नो मित्रो—RS. I. 162. 1 ) which shows that in the time of Durga IX. 3 was IX. 2 and immediately followed the first section.

4–5. RS. IX. 112. 4.

4. The whole of this section ( IX. 2 ) must be spurious. As Durga has no commentary on it, it seems that in his time it did not form a part of the text of Nirukta. It is, however, found in all the MSS. of the text and is also included in the list of sections given at the end of this *adhyāya*. Roth gives this section in a foot-note.

6. The three mss—क, ख, ग, of Bi. do not read **रथं वोळ्हा.**

7. Bi. mss—क, ख, ग, omit **सुहितं गम्यतीति वा हसैता वा पाता वा पालयिता वा शेपमृच्छतीति वारि वारयति;** and read as **सुहितं भवति मा नो व्याख्यातः** ( see page 899, lines 1–3 ).

7. सुखं सुहितं भवति—cf. ' सुहितं खेभ्यः ' Nir. III. 13 for the derivation of the word सुख.

7. गम्यतीति—गम्यति is incorrect. It should be गम्यते.

हसैता वा । पाता वा पालयिता वा । शेपमृच्छतीति । वारि वारयति ॥

मा नो व्याख्यातस्तस्यैषा भवति ॥ २ ॥

" मा नो॑ मि॒त्रो वरु॑णो अर्य॒मायुरिन्द्र॑ ऋभु॒क्षा म॒रुत॒: परि॑ ख्यन् ।
यद्वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्ते॑: प्रव॒क्ष्यामो॑ वि॒दथे॑ वी॒र्या॑णि ॥ "　　5

यद्वाजिनो देवैर्जातस्य सप्तेः सरणस्य प्रवक्ष्यामो यज्ञे विदथे वीर्याणि, मा नस्त्वं मित्रश्च वरुणश्चार्यमा चायुश्च वायुरयन इन्द्रश्चोरुक्षयण ऋभूणां राजेति वा मरुतश्च परिख्यन् ॥

शकुनिः शक्नोत्युन्नेतुमात्मानम् । शक्नोति नदितुमिति वा । शक्नोति तकितुमिति वा । सर्वतः शंकरोऽस्त्विति वा । शक्नोतेर्वा । तस्यैषा 10 भवति ॥ ३ ॥

**मा नो॑ मि॒त्रः**–इति । दीर्घतमस आर्षम् । अश्व एवाहूयते अनेन सूक्तेन । **यद् वा॒जिनः** इति । **यत्**–यानि **वा॒जिनः**–अस्याश्वस्य **दे॒वजा॑तस्य**–**देवै**र्जनितस्य वसुभिरादित्यात् ।

" सूरा॒दश्वं॑ वसवो॒ निर॑तष्ट "　　15

-इति । अग्नेर्वा प्रजापतिना " द्वितीयामजुहोत् ततोऽश्वोऽजायत "–इति । **सप्तेः**–

3. R. मानो, Bi. J. मा नो; Bi. J. conclude IX. i. 2 with भवति. 7. D. reads वायुश्च for चायुश्च. 8–9. C. D. परिख्यंञ्छकुनिः 11. Bi. J. conclude IX. i. 3 with भवति. 16. *a. d.* omit सप्तेः.

3. मा नो व्याख्यातः—Where is this explained ? मानः as such has no meaning here, and मा नः is not explained below, by Yâska.

4–5. RS. I. 162. 1; VS. 25. 24; TS. 4. 6. 8. 1: MS. 3. 16. 1: 181, 7; KSA 6. 4; ŚB 13. 5. 1. 18.

6. **जातस्य**—Durga reads जनितस्य for जातस्य, rightly.

6. विदथे—Some mss. do not have **विदथे.**

7. **त्वं**—Durga does not read त्वं, and the word is superfluous in the *bhâsya* too, as it refers to no one.

15. सूरादश्वं—RS. I. 163. 2.

16. द्वितीयामजुहोत्—MS. I. 8. 1.

**सरणस्य प्रवक्ष्यामः** प्रकर्षेण वक्ष्यामः । **विदथे** एतस्मिन् **यज्ञे** । **वीर्याणि**–गुणान् । किं तेषाम् । **मा नः** मास्माकं तान्युच्यमानानि **मित्रः वरुणः अर्यमा वायुः इन्द्रः मरुतः परिख्यन्**–आचक्षीरन् । किं तर्हि । अनुमन्यन्ताम् । **आयुः** अत्र **वायुः अयनः** वकारलोपेन । स कस्मात् । अयनात् । एति ह्यसौ विश्वम् । **इन्द्रः**
5 **ऋभुक्षाः** । स हि **उरुक्षयणः** उरावन्तरिक्षे क्षियति निवसति । अथवा क्षियति-रैश्वर्यार्थः । कस्य ईष्टे । **ऋभूणां** देवानां **राजेति** च तेषामीष्टे । एवम् ऋभुशब्दात् पूर्वपदं क्षियतेरैश्वर्यकर्मणः उत्तरपदम् ।

**शकुनिः** ( २ ) कस्मात् । स हि **शक्नोत्युन्नेतुमात्मानम्** । ऊर्ध्वं नेतुं लघुत्वात् । शकेः पूर्वपदं नयतेरुत्पूर्वस्योत्तरपदम् । **नदितुमिति वा** । अथवा नदते-
10 **स्तकतेर्वा** शब्दार्थगत्यर्थयोर्वोत्तरपदं विकल्पेन । अथ **वा सर्वतः शंकरः** अयम-स्माकम् **अस्त्विति** सर्वेण नित्यमाशासितव्यो भवति । एवं सति **शम्** इति सुखनाम पूर्वपदम् । करोतेरुत्तरपदम् । **शक्नोतेः** एव वैकस्मात् । किमसौ शक्नोति । यदस्य योग्यं शकितुम् ।

**तस्य एषा** प्राधान्यस्तुतिः **भवति** ॥ ३ ॥

15 " **कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरितेव नावम् ।**
**सुमङ्गलश्च शकुने भवासि मा त्वा काचिदभिभा विश्व्या विदत् ॥**"

**न्यक्रन्दीज्जन्म प्रब्रुवाणो यथास्य शब्दस्तथा नामेरयति वाचम् ईर-यितेव नावम् । सुमङ्गलश्च शकुने भव, कल्याणमङ्गलः । मङ्गलं गिरतेर्गृणात्यर्थे, गिरत्यनर्थानिति वा । अङ्गलमङ्गवत् । मज्जयति**

1. *d.* प्रकर्षेण प्रवक्ष्यामः. 3. *a. d.* read मा च परिचक्षीरन् for आचक्षीरन् ; *m.* मा चक्षीरन्. 5. *a.* only appears to read उरुक्षयमाणः, *d.* as text. 6. *d.* ऐश्वर्यार्थ for °र्थः; *a. d. m.* राजेति च तेषा°, *bi. j.* राजा इति वा च तेषा°. 8. *a.* only reads शाकुनिः ? ; *a. d.* omit आत्मानं after उन्नेतुं. 9. *a. d. m.* omit नदितुमिति वा. 10. *bi. j.* शब्दार्थगत्यर्थयोः पूर्वोत्तरपदं, *m.* as text. 12–13. *a. d. m.* read शक्नोतेरेव वैकस्मात् । कमसौ ( *d. m.* किम° ) शक्नोति यदस्य योग्यं शकितुं.

8. ' शकुनिः '—Nigh V. 3. 2.

15–16. RS. II. 42. 1. Cf. Bṛh. D. IV. 94.

17–18. **जन्म, ईरयति** ( line 17 ), **कल्याणमङ्गलः** ( line 18 )—Durga does not repeat these words in his *vṛtti*.

**पापकमिति नैरुक्ताः । मां गच्छत्विति वा । मा च त्वा काचिदभि-भूतिः सर्वतो विदत् ।**

**गृत्समदमर्थमभ्युत्थितं कपिञ्जलोऽभिववाशे । तदभिवादिन्येषर्ग् भवति ॥ ४ ॥**

**कनिक्रदज्जनुषम्**-इति । गृत्समदस्यार्षम् । शकुनिरुतश्रवणे जपे विनियोगः । 5
**कनिक्रदत्–न्यक्रन्दीत्** । पुनःपुनः भृशं वा क्रन्दसीति मध्यमपुरुषेण नुतिरुत्तरमर्ध-र्चमपेक्ष्य । **जनुषं प्रब्रुवाणः** आत्मनोऽभिजाति कथयन्निव **इयर्ति वाचम्** इयर्षि वाचम् । कथम् । **अरिता इव ईरयिता इव** । नाविक इव, पुनःपुनः **नावं** पारगम-नाय । यस्त्वमेवमीरयसि स त्वं **सुमङ्गलः च हे शकुने** प्रशस्तमङ्गलश्च अस्माकं **भव** । वयमपि च तुभ्यमित्याशास्महे । **मा त्वा काचित् अभिभा–अभिभूतिः**– 10
परोपद्रवः **विश्व्या**–सर्वप्रकारा–**सर्वतो विदत्**–विदत्विति । **यथास्य शब्दः तथा नामेरयति** । 'तादिदं शकुनिषु बहुलम्' इत्यत्रोक्तम् ।

**मङ्गलं** कस्मात् । **गिरतेः** धातोः **गृणात्यर्थे** वर्तमानस्य । स्तुत्यं हि तद् भवति । **गिरति अनर्थान् इति वा** । अस्यैव वा गिलनार्थस्य । किमिदं गिलति । उत्पद्यमान-मेवेदमनर्थान् गिलति भक्षयति वा । अथवा **अङ्गलम्** एतन्मकारोपजनेन मङ्गलम् । 15
कोर्थः । **अङ्गवत्** अङ्गैरवयवैः दधिमध्वक्षतादिभिः तद्वत् । रो मत्वर्थे । व्यत्ययश्च रलोः । अथवा मज्जयतेः मङ्गलम् । किं **मज्जयति** । **पापकम् इति नैरुक्ताः** । उत्पद्यमानमेवैतत् मङ्गलिनः पुरुषस्य **मज्जयति** नाशयति यदस्य किञ्चित् पातकं भवति । एवं मज्जयतेर्मङ्गलम् इति नैरुक्ताः विदुः । **मां गच्छतु इति वा** । गमेर्वा । सर्वः एतत् मन्यते मामेतद् गच्छत्विति । 20

1. C. D. read मा गच्छत्विति वा. 4. Bi. J. conclude IX. i. 4 with भवति. 6. *a. d.* read पुनः once only. 7. *d. m.* प्रकथयन्निव. 8. *m.* omits अरिता इव; *a. d.* read कथमीरयसि नाविक इव etc. 9. *d. m.* omit च before अस्माकं. 10. *d.* reads भूतिः for अभिभूतिः. 11. *a. m.* read विश्व्या; *bi. j.* विश्वा. 12. *a. m.* तथा नामेति, *d.* यथा शब्दस्तथा नमेति. 13. *d.* omits धातोः. 15. *a. d.* read अनर्थान्, *bi. j.* अनर्थात्; *a. d.* omit अथवा before अङ्गलम्. 16. *d.* मङ्गवत् for अङ्गवत्; *a. d.* omit रलोः after व्यत्ययश्च. 20. *a. d. m.* सर्वः for सः of *bi. j.*

1. **मा च त्वा**—Durga omits **च.**
5. विनियोगः—See Âśv. Gṛ. Sû. III. 10. 9.
12. उक्तम्—See Nir. III. 18.

**गृत्समदमर्थमभ्युत्थितम्** इति स्तुतिलाभकारणम् । स किल कंचिदर्थं सिसाधयिषुरभ्युत्तस्थौ । तमभ्युत्थितं **कपिञ्जलः** शकुनः **अभिववाशे** तत्सिद्धिमावेदयन् । यथा चैतदेवम् **तदभिवादिनी एषा ऋग् भवति** ॥ ४ ॥

"**भद्रं वद दक्षिणतो भद्रमुत्तरतो वद ।**
5 **भद्रं पुरस्तान्नो वद भद्रं पश्चात्कपिञ्जल ॥**"

**इति सा निगदव्याख्याता ।**

**गृत्समदो गृत्समदनः । गृत्स इति मेधाविनाम । गृणातेः स्तुतिकर्मणः ॥**

**मण्डूका मज्जूका मज्जनात् । मदतेर्वा मोदतिकर्मणो, मन्दतेर्वा तृप्ति-**
10 **कर्मणः । मण्डयतेरिति वैयाकरणाः । मण्ड एषामोक इति वा । मण्डो मदेर्वा मुदेर्वा । तेषामेषा भवति ॥ ५ ॥**

**भद्रं वद दक्षिणतः**—इति । इह शकुनिः किल कस्यांचिद् दिशि साधुर्भवति । कस्यांचिदसाधुः । स एष ब्रवीति । **दक्षिणतः उत्तरतः पश्चात् पुरस्तात्** च सर्वत एव त्वमस्माकं कपिञ्जल भद्रं वद इति ।

---

1. *d.* गृत्समदमथमभ्युत्थितं and °लाभकरणं; *d. m.* कंचिदर्थं for किंचिदर्थं of *bi. j.* 2. *d.* आवेदयत् for आवेदयन्. 5. *m.* कपिञ्जल for कपिञ्जलः of *bi. j.* 7. *m.* and the three mss. of Bi. (क, ख, ग) read गृत्समदो गृत्सो मदनो. 7–8. Bi. गृणाते स्तुतिकर्मणो, Bi. mss. क, ङ, च and all others read गृणातेः स्तुतिकर्मणो. 11. Bi. J. conclude IX. i. 5 with भवति· 12. *m.* adds इति सा निगदव्याख्याता after दक्षिणत इति. 14. *d. m.* कपिञ्जल, *bi. j.* °ञ्जलः.

---

4–5. RVKh. 3. 1.

6. **इति सा निगदव्याख्याता**—Not repeated by Durga.

7. **गृत्स इति मेधाविनाम गृणातेः स्तुतिकर्मणः**—Not repeated by Durga.

10. मण्डयतेरिति वैयाकरणाः—cf. 'शलिमण्डिभ्यामूकण्' Uṇâdi, 4. 42. Also cf. 'मडि भूषायाम्'—Dhâtup. 10. 54.

11. **मण्डो मदेर्वा मुदेर्वा**—This sentence is omitted by Durga.

**गृत्समदः गृत्समदनः** गृत्सश्चासौ मदनश्च गृत्समदनः । गृत्सः—मेधावी, मदनः—हर्षालुः ।

**मण्डूकाः** ( ३ ) इति एतत्पदं वक्तव्यम् । य एते **मण्डूकाः** एते **मज्जूकाः** । कस्मात् । **मज्जनात्** । नित्यमग्ना ह्येत उदके । **मदतेः वा** स्यात् **मोदतिकर्मणः** । नित्यप्रमुदिता हि ते । **मन्दतेः वा** स्यात् **तृप्तिकर्मणः** । नित्यतृप्ता हि ते 5 प्रचुरोदकत्वात् । **मण्डयतेः इति वैयाकरणाः** । ते हि भक्तिभिर्नानाचित्राभिः विधात्रा मण्डिता भवन्ति । **मण्ड एषाम् ओकः इति वा** । **मण्डे** उदके **एषाम् ओकः** निवासः **इति वा** मण्डूकाः ।

**तेषाम् एषा भवति** ॥ ५ ॥

" **संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः ।** 10
**वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः ॥** "

**संवत्सरं शिश्याना ब्राह्मणा व्रतचारिणोऽब्रुवाणाः । अपि वोपमार्थे स्याद् ब्राह्मणा इव व्रतचारिण इति । वाचं पर्जन्यप्रीतां प्रावादिषुर्मण्डूकाः ।**

**वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव । तं मण्डूका अन्वमोदन्त । स** 15 **मण्डूकाननुमोदमानान् दृष्ट्वा तुष्टाव । तदभिवादिन्येषर्ग् भवति** ॥ ६ ॥

**संवत्सरं शशयानाः**—इति । वासिष्ठस्यार्षम् । **संवत्सरं शयानाः**—**शिश्यानाः** निर्वाचः संवत्सरं सुप्ता इव स्थित्वा **ब्राह्मणाः ब्रुवाणाः** समर्थाः

1. *m.* गृत्सो मदनः. 4. *a. d.* मोदनकर्मणः. 12. The three mss. of Bi. (क, ख, ग) read शयानाः for शिश्यानाः and ऽब्रुवाणादपि for ऽब्रुवाणा अपि, C. °णो ब्रुवाणा अपि· 16. Bi. J. conclude IX. i. 6 with ऋग् भवति. 17. *m.* शयानाः for शशयानाः of *bi. j*; *a. d. m.* omit शयानाः and *a.* only reads सर्वाचः for निर्वाचः. 18. *d.* सुप्ता, *bi. j.* सुप्त्वा; *a. d. m.* read समर्थाः for सर्वथा of *bi. j.*

---

3. ' मण्डूकाः '—Nigh. V. 3. 3.

10-11. RS. VII. 103. 1; AV. 4. 15. 13; cf. Bṛh. D. VI. 27.

12. **व्रतचारिणोब्रुवाणाः**—This may be split up into व्रतचारिणो ब्रुवाणाः or into व्रतचारिणोऽब्रुवाणाः.

13. **पर्जन्यप्रीतां**—Not repeated by Durga.

सन्तो वक्तुं **व्रतचारिणः**-कृतवाक्संयमाः ततः प्रावृट्कालं प्राप्य अभिवृष्टाः **पर्जन्यजिन्विताम्** पर्जन्येन तर्पिताम् **वाचम् प्र मण्डूकाः अवादिषुः प्रावादिषुर्मण्डूकाः** । अथवा न युक्तो रूढिपरिबाधो ब्राह्मणशब्दस्येति लुप्तोपमः प्रकल्प्यते **ब्राह्मणा इव व्रतचारिणः इति** । यथा ब्राह्मणा उपाकृत्य प्रावृषि 5 पवित्रपाणयो मेखलिनो नियतकालाः तां वैदिकीं वाचं वदन्ति, एवं प्रावादिषुरिति ।

**वसिष्ठो वर्षकामः** इति स्तुतिलाभनिमित्तम् । स किल वर्षन्तं **पर्जन्यं तुष्टाव** । **तं मण्डूकाः अन्वमोदन्त** स्तुहि स्तुहि इति । **सः** तान् **मण्डूकान् अनुमोदमानान्** वाश्यमानान् **दृष्ट्वा** लब्धं वर्षनिमित्तमिति परितुष्टः तानेव **तुष्टाव** । यथा चैतदेवं **तदभिवादिनी एषा ऋग् भवति** ॥ ६ ॥

10 " **उप॒ प्र व॑द मण्डूकि व॒र्षमा व॑द ताढुरि ।
मध्ये॑ ह्र॒दस्य॑ प्लवस्व॑ वि॒गृह्य॑ च॒तुरः॑ प॒दः ॥** "

**इति सा निगदव्याख्याता ॥**

**अक्षाः । अश्नुवत एनानिति वा । अभ्यश्नुवत एभिरिति वा । तेषामेषा भवति ॥ ७ ॥**

15 **उप प्रवद**-इति । हे **मण्डूकि** मण्डूकानां मातः अथवा मण्डूकपते मण्डूकि मां **उप** गम्य **प्र**-प्रकर्षेण **वद** । कथं च प्रवद । **वर्षम् आ**-आभिमुख्येन

1. *a. d.* प्रावृट्कालं प्राप्य, *bi. j.* प्राविट्कालं प्राप्य. 2. *a. d. m.* omit पर्जन्यजिन्वितां. 3. *a. d.* रूढिपरिबाधो ब्राह्मणस्य शब्दस्य etc., *bi. j.* रूढिपरिवादो ब्राह्मणशब्दस्य. 4. *d.* प्रकलपते, *bi. j.* प्रकल्प्यते. 5. *a.* नित्यकालाभां, *d.* नियजतकालाभां, *bi. j.* नियतकालां तां, *m.* नियतकालाः तां. 6. *d.* सकल for स किल of *bi. j.* 7. *m.* ते मण्डूकाः; *a. d. m.* omit मंडूकान् after तान्. 8. *m.* वावश्यमानान्. 10. C. उप प्ल वद, D. उप प्ल वंत मण्डूकी, *m.* उप प्रवद मण्डूकी; *m.* cites the whole *rik*. 11. D. प्लवस्य निगृह्य चतुरः परः. 13. Two mss. of Bi. (क, ग) read अक्षा अश्नुवन्त्येतामिति and ms. ख reads अक्षा अश्नुवन्त्येनानिति. 14. Bi. J. conclude IX. i. 7 with भवति. 15. *d.* omits इति हे मण्डूकि. 16. *a. d. m.* मां उप गम्य प्रकर्षेण, *bi. j.* मा मां उप गम्य प्र प्रकर्षेण; *a. d. m.* omit आ.

2. पर्जन्यजिन्वितां = पर्जन्येन तर्पितां—cf. 'जिवि प्रीणने' Dhâtup. 1. 595.
10-11. RVKh. 16; AV. 4. 15. 14.
12. **इति सा निगदव्याख्याता**—Not repeated by Durga.

**वद् तादुरि**–तरणशीले । अथवा तावद्-उदरि । यावच्छरीरं तावदेवोदरं तस्याः । ततो वृष्टे देवे आप्लुते उदकेनैतास्मिन्नेकजलीभूते **मध्ये ह्रदस्य** उदकस्य बहुनः **प्लवस्य** उपरि **विगृह्य**–प्रसार्य **चतुरः पदः**–पादानित्यर्थः । पादशब्दस्य पदादेशः क्रियते ।

**अक्षाः** (४) इत्येवमादीनि लब्धस्तुतित्वात् पृथिव्यायतनवत्वसामान्यादिह वर्गे 5 समाम्नातानि । तेषां च यथासमाम्नानमेव **अक्षाः** प्रथमं निर्वक्तव्याः । कस्मात् । **अश्नुवत एनान् इति वा** । दीव्यन्तः कितवाः एतान् अक्षान् पाणिभिः **अश्नुवते** व्यापयन्ति । त एते अश्नोतेः कर्मणि कारके । अथवा **अभ्यश्नुवते** अभिपूर्वस्य तस्यैवाश्नोतेः करणे कारके । तर्हि कितवाः प्रतिकितवं धनम् अभ्यश्नुवते ।

**तेषाम् एषा भवति** स्तुतिः ॥ ७ ॥ 10

**" प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः ।**
**सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान् ॥ "**

**प्रवेपिणो मा महतो विभीदकस्य फलानि मादयन्ति । प्रवातेजाः प्रवणेजाः । इरिणे वर्तमानाः । इरिणं निर्ऋणम्, ऋणातेरपार्णं भवति ।**

3. *a. d.* प्रसार्य एतांश्चतुरः पदः । पादानित्यर्थः ।, *bi. j.* प्रसार्य चतुरः पदः पदानित्यर्थः, *m.* प्रसार्य एताश्चतुरः पदः पदानित्यर्थः; *d.* पादस्य for पादशब्दस्य. 5. *d. m.* पृथिव्यायतनवत्व°, *bi. j.* पृथिव्यायतनत्व°. 6. *d. m.* यथासमाम्नातमेव; *a. d. m.* add तें before कस्मात्. 7. *a. d. m.* एतान् for एनान्. 7-8. *a. d.* अभ्यश्नुवते for अश्नुवते.

3. पादशब्दस्य पदादेशः—' पादः पत् ' Pâṇini VI. 4. 130.

5. ' अक्षाः '—Nigh. V. 3. 4.

11-12. RS. X. 34. 1; R. Vidh. 3. 10. 1; Cf. Bṛh D. VII. 36.

14. **प्रवणेजाः**—The mss. (क, ख, ग) of Bi. read **प्रवतेजाः** for प्रवणेजाः of Bi. J. and R.; Durga reads both, प्रवणेजाः as well as प्रवतेजाः. Sâyaṇa has प्रवणेजाः only.

14. इरिणं निर्ऋणमृणातेः—The mss. (क, ख, ग) of Bi. read **इरिणं निरिणं निरिणातेः.**

14. ऋणातेः—Durga does not read **ऋणातेः.**

14. अपार्णं भवति—Durga has अपार्ण वा for **अपार्णं भवति** of the *bhâṣya.*

अपरता अस्मादोषधय इति वा। सोमस्येव मौजवतस्य भक्षः। मौजवतो मूजवति जातः। मूजवान् पर्वतो, मुञ्जवान्। मुञ्जो विमुच्यत इषीकया। इषीकेषतेर्गतिकर्मणः। इयमपीतरेषीकैतस्मादेव। विभीदको विभेदनात्। जागृविर्जागरणात्। मह्यमचच्छदत्। प्रशंसत्येनान् प्रथ-
5 मया, निन्दत्युत्तराभिः। ऋषेरक्षपरिद्यूनस्यैतदार्षं वेदयन्ते॥

ग्रावाणो हन्तेर्वा, गृणातेर्वा, गृह्णातेर्वा। तेषामेषा भवति॥ ८॥

**प्रावेपा मा**–इति। अक्षपुत्रस्य मौजवत आर्षम्। **प्रावेपाः–प्रवेपिणः**–प्रकर्षेण वेपनशीलस्य वृक्षस्य जाताः **बृहतः–महतः मा–माम् मादयन्ति। प्रवातेजाः**– प्रचुरवाते स्थाने काले वा जाताः प्रावृट्काले। पक्वानां वा प्रचुरवाते काले पतनाभि-
10 प्रायं जन्म। **विभीदकः** एक एव वा विशिष्यते यः **प्रवणे** उदकबहुले देशे **जातः** तस्य **फलानि** अक्षाः। **इरिणे वर्वृतानाः** निर्गतर्णे आस्फुरकस्थाने **वर्तमानाः**। न हि तत्र पुत्रपौत्रानुगमृणं भवति। **अपार्णं** वा। उपसर्गस्यान्यत्वमेव केवलम्। अथवा **अपार्णम्**–अपगतोदकम्। **अपरता अस्मात् ओषधयः इति वा**। कथं मादयन्ति। **सोमस्य इव** यथा सोमस्य **मौजवतस्य भक्षः** यजमानं

---

5. ख, a Bi. ms. reads °परिद्यूतस्यैतदार्ष. 6. Bi. mss. क, ग read गृह्णातिर्वा; Bi. J. complete IX. i. 8 after भवति. 8. *a. d. m.* omit बृहतः and मा, and add after मादयंति, हर्षयंति वा तर्पयंति वा. 9. *a. d. m.* omit वा after काले; *d.* पक्वानां वा ते काले पतनाभिप्रायं etc. 10. *a. d.* omit एक before एव; *m.* एवावशिष्यते for एक एव वा विशिष्यते, *a. d.* विशेष्यते ? ; *m.* प्रवरणे for प्रवणे. 11. *a.* निगत and *d.* निर्गत for निर्गतर्णे; *m.* and a ms. of R. आस्फारकस्थाने for आस्फुरकस्थाने of *bi. j.* 13. *a. d. m.* omit अस्मात् and add after इति वा।,—अपेत्य तस्मादन्यत्र ओषधय इति।, *bi. j.* as text. 14. *a. d.* omit after सोमस्य इव,—यथा सोमस्य.

---

1. The three Bi. mss. (क, ख, ग) do not have **सोमस्येव मौजवतस्य भक्षः।**

4–5. **प्रशंसति** etc.—Durga omits the passage, **प्रशंसत्येनान् प्रथमया निन्दत्युत्तराभिः। ऋषेरक्षपरिद्यूनस्यैतदार्षं वेदयन्ते।**

5. निन्दति—See RS. X. 34. 2–14.

मादयति हर्षयति तर्पयति तथा । **विभीदकः**-विभेत्ता कोष्ठयस्य, **जागृविः**-जागरण-कर्ता । यो जयति स हर्षेण जागर्ति योपि जीयते स दुःखेन जागर्ति । स एषः **विभीदकः** एवंप्रकारः **मह्यम् अचच्छान्-अचच्छदत्** । स्वेन फलशब्देन सर्वार्थेषु पुनःपुनः भृशं वा मनः छादयित्वा देवने एवैकस्मिन् मम मनः उत्साहयति ।

**मौजवतः** सोमः । स कस्मात् । **मूजवति जातः** । अथ **मूजवान्** कः । 5 **पर्वतः** । स कस्मात् मूजवान् । **मुञ्जवान्** मुञ्जैस्तद्वान् ।

अथ **मुञ्जः** कस्मात् । स हि **विमुच्यते इषीकया** ।

अथ **इषीका** कस्मात् । **इषतेः गतिकर्मणः** । सा हि निर्गता भवति मुञ्जात् । **इयमपीतरा इषीका एतस्मादेव** । या हलेषा अन्या वा । सापि हि निर्गता भवति । 10

**ग्रावाणः** ( ५ ) कस्मात् । **हन्तेः वा** । तदर्थोपपत्तेः । वर्णव्यापत्त्युपजनाभ्याम् । **गृणातेः वा** स्तुत्यर्थस्य । स्तूयन्ते हि ते । **गृह्णातेः वा** । गृह्यन्ते हि ते ।

**तेषाम् एषा** स्तुतिः **भवति** ॥ ८ ॥

**"प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः ।**
**यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः ॥"** 15

**प्रवदन्त्वेते । प्रवदाम वयम् । ग्रावभ्यो वाचं वदत वदद्भ्यः । यदद्रयः पर्वता अदरणीयाः सह सोममाशवः क्षिप्रकारिणः । श्लोकः शृणोतेर्, घोषो घुष्यतेः । सोमिनो यूयं स्थेति वा । सोमिनो गृहेष्विति वा ॥**

---

1. *m.* विभेक्ता कोष्ठस्य. 3. *a. d. m.* omit अच्छान्. 6. *d. m.* omit मूजवान् before मुञ्जवान्; *a.* only omits मुञ्जवान्. 7-8. *a. d.* read ईषिकया, ईषीका (*d.* एषीका) and ईषतेः for इषीकया, इषीका and इषते· (*m.* ईषतेः) respectively of *bi. j. m.* 8. *m.* ईषतेर्गतिकर्मणः. 11. *a. d. m.* वर्णव्यापत्त्युपजनाभ्यां, *bi. j.* व्यापत्त्यु°. 17. The Bi. mss. (क, ख, ग) read आदरणीयाः.

---

11. 'ग्रावाणः'—Nigh. V. 3. 5.

14-15. RS. X. 94. 1.

17. The Bi. mss. (क, ख, ग) read आदरणीयाः.

17. Durga omits क्षिप्रकारिणः, and श्लोकः शृणोतेर्घोषो घुष्यतेः ।

**येन नराः प्रशस्यन्ते स नाराशंसो मन्त्रः । तस्यैषा भवति ॥ ९ ॥**

'**प्रैते वदन्तु**–इति । अर्बुदस्येयमार्षम् । यस्मात् ते **अद्रयः अदरणीयाः अदरणार्हाः, पर्वताः**–पर्ववन्तः **साकम् आशवः सहभूताः सोमम**श्नीथ अभिषुणुथ । तं चाभिषुण्वन्तः **इन्द्राय श्लोकं** श्रवणीयं हृद्यं **घोषं** शब्दं **भरथ** 5 धारयथ निर्वर्तयथ । ये ते **यूयम**मुना प्रकारेण यस्मात् **सोमिनः** भवथ । अथवा **सोमिनः** सोमेन तद्वतो यजमानस्य **गृहेषु** एवं कुरुध्वे तस्मात् युष्मानाधिकृत्य ब्रवीमि । **प्रैते वदन्तु** युष्मदर्थं स्तुतीः उद्गातारः । **प्रवदाम** च **वयं** होतारः । अध्वर्यूनपि च ब्रूमहे । एभ्यः **ग्रावभ्यः वाचं वदद्भ्यः वदत** वाचं या वक्तव्यैतान् प्रति इति ॥

**नाराशंसः** ( ९ ) इति समाम्नातः । कः पुनरेष नराशंसः । **येन नराः प्रशस्यन्ते** 10 **स नाराशंसो मन्त्रः** । किमत्र मन्त्रः स्तूयते । न इत्युच्यते । लक्षणं मन्त्रः । नराः स्तूयन्ते । एवं तर्हि नराणामेव समाम्नानं प्राप्तमासीत् । न । तेषां सामान्यस्तुत्यभावात् राज्ञां च स्तुत्युपपत्तेः । तेषामपि च सामान्या स्तुतिर्नास्ति । अस्ति त्वैकैकश्येन केषांचित् । अतो भावयव्यं लक्षणीकृत्य नाराशंसो मन्त्र उदाह्रियते । **तस्य** नाराशंसस्य मन्त्रस्य उदाहरणम् । **तस्य** वा भावयव्यस्य प्राधान्यस्तुतिः **एषा** ऋक् **भवति** ॥ ९ ॥

---

1. Bi. J. conclude IX. i. 9 with भवति. 2. *a. d. m.* यस्मात् for अस्मात् of *bi. j.*; *d.* omits अदरणीयाः. 2–3. *m.* आदरणीयाः आदरणार्हाः. 3. *d.* omits पर्वताः. 4. *a. d.* read तं चाभि°, *bi. j. m.* ते तं चाभि°. 6. *a. d. m.* सोमिनः सोमेन तद्वतो, *bi. j.* सोमिनः तद्वतो. 7. *a. d.* read प्रैते for प्रेते of *bi. j.*; *a. d.* omit च after प्रवदाम. 8. *a. d. m.* read वाचं या वक्तव्यैतान्प्रतीति, *bi. j.* वाचं यावत्कमेताम् प्रतीति, *m.* प्रति for प्रतीति. 9. *m.* नाराशंस इति समाम्नातः, *bi. j.* नराशंसः इति समाम्नातः. 10. *bi.* नराशंसो मन्त्रः, *j.* नाराशंसो मन्त्रः; *d. m.* मन्त्रः नराः स्तूयन्ते. 12. *a. d. m.* अस्ति त्वैकैकश्येन केषांचित्; *bi. j.* अस्ति त्वेकैकशो न केषांचित् । ; *d. m.* यतो for अतो. 13. *a. d.* नराशंसः, *bi. j.* नाराशंस'; *a. d. m.* नराशंसस्य.

---

2–3. Some mss. ( *m.* ) of Durgavritti read आदरणीयाः आदरणार्हाः for अदरणियाः अदरणार्हाः; the latter, however, is the general reading.

9. 'नाराशंसः'—Nigh. V. 3. 6. The *nighaṇṭus* read नाराशंसः and not नराशंसः. The latter is the wrong reading.

"अमन्दान् स्तोमान् प्र भरे मनीषा सिन्धावधि क्षियतो भाव्यस्य ।
यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः ॥"

अमन्दान् स्तोमान् । अबालिशाननल्पान् वा । बालो बलवर्ती, भर्तव्यो भवति । अम्बास्मा अलं भवतीति वा । अम्बास्मै बलं भवतीति वा । बलो वा प्रतिषेधव्यवहितः । प्रभरे मनीषया मनस ईषया स्तुत्या 5 प्रज्ञया वा । सिन्धावधिनिवसतो भावयव्यस्य राज्ञो यो मे सहस्रं निरमिमीत सवान् । अतूर्तो राजा । अतूर्ण इति वा । अत्वरमाण इति वा । प्रशंसामिच्छमानः ॥ १० ॥

**अमन्दान् स्तोमान्—इति ।** दानपरितुष्टः कक्षीवान् ब्रवीति । **अमन्दान्—अबालिशान्—अनल्पान् वा** अबालिशयोग्यान् **प्रभरे**—प्रहरे—उच्चारये **मनीषा**— 10 **स्तुत्या—प्रज्ञया वा** । कस्य । **भाव्यस्य भावयव्यस्य** । भावेनैवासावार्जवेनैव सर्वार्थान् यवयति मिश्रयति अनुतिष्ठतीति भावयव्यः । क **निवसतः । सिन्धौ**

---

3. Bi. mss. (क, ख, ग) read बलभर्ता. 8. Bi. J. complete IX. i. 10 after इच्छमानः and then read इति नवमाध्यायस्य प्रथमः पादः. 9. *d.* दानपरितुष्टावः for °तुष्टः ? 10. *a. d.* omit प्रहरे. 11. *a. d. m.* omit भाव्यस्य; *bi. j.* भावनेनैवासावर्जवेनैव, *d.* as text. 12. *a. d. m.* अनुतिष्ठतीति, *bi. j.* अनुतिष्ठयतीति.

---

1–2. RS. I. 126. 1; *Cf.* Bṛh. D. III. 155.

3–5. The passage बालो बलवर्ती । भर्तव्यो भवति । अम्बास्मा अलं भवतीति वा । अम्बास्मै बलं भवतीति वा । बलो वा प्रतिषेधव्यवहितः is not explained by Durga and seems to be an interpolation. It attempts the etymological explanation of a word which neither occurs in the *ṛk* quoted above, nor in the text of Yaska. So the whole passage is irrelevant and a later addition.

3. The Bi. mss. (क, ख, ग) read बलभर्ता.

5. मनीषया मनस ईषया—These words of the *bhāṣya* are not noticed by Durga.

6. Durga omits राज्ञः.

**अधिक्षियतः** । यः किमकरोत् । **यो मे सहस्रं**–बहून् **सवान्**–यज्ञान् **अमिमीत–निरमिमीत** निर्मितवान् । बहूनां यज्ञानां यागोपकरणं दत्तवान् । **अतूर्तः–अतूर्णः** अचपलः अत्वरमाणः । क्रमेण **यो निरमिमीत सहस्रं मे** मम **सवान्** । **श्रवः–प्रशंसाम् इच्छमानः अमन्दान् स्तोमान्** तस्मै भावयव्याय राज्ञे **प्रभरे** अह-
5 मिति ॥ १० ॥

**यज्ञसंयोगाद् राजा स्तुतिं लभेत । राजसंयोगाद् युद्धोपकरणानि । तेषां रथः प्रथमागामी भवति । रथो रंहतेर्गतिकर्मणः । स्थिरतेर्वा स्याद् विपरीतस्य । रममाणोऽस्मिंस्तिष्ठतीति वा । रपतेर्वा, रसतेर्वा । तस्यैषा भवति ॥ ११ ॥**

10 **यज्ञसंयोगाद्राजा स्तुतिं लभेत**–इति एवमादि । तदेतत् पूर्वप्रकृतस्यैव भावयव्यस्य स्तुतिलाभनिमित्तमेव मन्त्रगतमनूद्यते । यस्मात् सहस्रं सवान् निरमिमीत तस्मात् प्रभर इति केचित् मन्यन्ते । अपरे पुनः युद्धोपकरणानामुत्तरेषां सामान्यमेतत् स्तुतिलाभनिमित्तमिति वर्णयन्ति । तत् कथम् इति । अश्वमेधे हि

"जीमूतस्येव भवति प्रतीकम्"

---

1. *a. d. m.* add निवसतः after अधिक्षियतः; *a. d. m.* omit अमिमीत. 2. *a. d.* omit यज्ञानां; *m.* omits अतूर्णः. 3. *m.* omits मे; *a. d.* omit श्रवः. 5. *bi. j.* conclude IX. i. 10 with अहमिति ॥ १० ॥ and read after this इति नवमाध्यायस्य प्रथमः पादः ॥. With यज्ञसंयोगात् begins the second pâda (द्वितियः पादः) of the ninth adhyâya (IX. ii. 1). 7. R. °कर्मण स्थिरतेर्वा. 9. With भवति ends IX. ii. 1. 10. *a. d.* तत्पूर्वकृतस्यैव, *bi. j.* तदेतत् पूर्वप्रकृत°. 12. *a.* किंचिन्मन्यते ?

---

7. रंहतेर्गतिकर्मणः—*Cf.* 'रहि गतौ' Dhâtup. 1. 733.

7. स्थिरतेः—The Dhâtup. does not give '*sthir*' as a root.

8. रपतेः—*Cf.* 'रप व्यक्तायां वाचि' Dhâtup. 1. 402.

8. रसतेः—*Cf.* 'रस शब्दे' Dhâtup. 1. 714.

8. Durga does not notice the passage **रममाणोऽस्मिंस्तिष्ठतीति वा रपतेर्वा रसतेर्वा** in his commentary.

8. Bi. mss. (क, ख, ग) do not read **रसतेर्वा**.

14. RS. VI. 75. 1.

इत्यनेन सर्वयुद्धोपकरणोपेतं रथमधिरूढः, संनद्धकवचः राजा स्तूयते । स कस्मा-
दित्युपोद्घत्योच्यते । **यज्ञसंयोगाद् राजा स्तुतिं लभेत** । स तावद् यज्ञसंयोगात्
स्तुति लभते ।

अथ पुनर्युद्धोपकरणानि किमिति स्तुतिं लभन्ते इति । **राजसंयोगात् युद्धोपकर-
णानि** । युद्धाय उपक्रियन्ते इति **युद्धोपकरणानि** । युद्धे वा उपकुर्वन्तीति **युद्धोप-** 5
**करणानि** । स एष हि व्यापी स्तुतिसंक्रमन्याय आचार्येणोपदर्शितः । तद्यथा । युद्धो-
पकरणानि राजसंयोगात् स्तुतिं लभन्ते । तस्य तानि अङ्गानीति तत्संबन्धात् स्तूयन्ते ।
राजापि यज्ञसंयोगात् यज्ञोऽपि देवतासंबन्धात् देवता अप्यात्मसंबन्धात् । सोऽयमेवात्मै-
वाङ्गप्रत्यङ्गभावेनावस्थितः सर्वावस्थातः स्तूयत इत्यात्मस्तुतिरेवेयं सर्वा । तदुक्तम् ।

" स्थाने स्थाने स्तुतिः सर्वा स्थानाधिपतिभागिनी । 10
आत्मप्रतिष्ठा बोद्धव्या तथोपकरणस्तुतिः ॥ "

इति । एष स्तुतिसंक्रमन्यायः सर्वत्रोपसंधेयः ॥

**तेषां रथः ( ७ ) प्रथमागामी भवति** । स कस्मात् । तदाधारत्वादितरेषां
युद्धोपकरणानाम् । **रथः** कस्मात् । '**रंहतेः गतिकर्मणः**। तस्य हि तदर्थै-
वोत्पत्तिः । **स्थिरतेः वा स्याद् विपरीतस्य** । स्थिरः सन् रथ इत्युक्तः । तत्र 15
हि स्थिरः सुप्रतिष्ठितो योद्धा भवति, न तथा अश्वादिषु । **तस्य एषा भवति**
स्तुतिः—॥ ११ ॥

---

1. *d.* सन्नद्धः कवचो राजा ? 2. *m.* उपोद्धृत्य; *a.* लभते, *d.* लभन्ते for लभेत. 3. *d.* लभन्ते for लभते ? 4. *m.* स्तुति लभते. 5. *m.* omits युद्धाय उपक्रियन्ते इति युद्धोपकरणानि. 6. *a.* only omits हि after एष; *a. d. m.* read उपप्रदर्शितः. 8. *a. d. m.* and the *bi.* ms. ख have देवतासंबन्धात्, *bi.* देवसंयोगात्. 8–9. *m.* सोयमेवमात्मैवाङ्ग°, *bi. j.* सोऽयमेवात्मैवाङ्ग°. 9. *a. d. m.* and the *bi.* ms. ख read सर्वावस्थः for सर्वावस्थातः. 9–10. *bi. j.* इत्यात्मस्तुतिः सर्वस्थानाधिपतिभागिनी, *a. d. m.* and the *bi.* ms. ख, as text. 13. *a. d. m.* omit स before कस्मात्.

---

1. स्तूयते—See MS. 3. 16. 3.
10–11. " स्थाने स्थाने etc. "—The quotation is not traced.
13. ' रथः '—Nigh. V. 3. 7.

" वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ।
गोभिः संनद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ॥ "

वनस्पते दृढाङ्गो हि भवास्मत्सखा प्रतरणः सुवीरः कल्याणवीरः । गोभिः संनद्धो असि, वीळयस्वेति संस्तम्भस्व । आस्थाता ते जयतु 5 जेतव्यानि ॥

दुन्दुभिरिति शब्दानुकरणम् । द्रुमो भिन्न इति वा । दुन्दुभ्यतेर्वा स्याच्छब्दकर्मणः । तस्यैषा भवति ॥ १२ ॥

वनस्पते वीड्वङ्गः–इति । गर्गस्यार्षम् । हे वनस्पते–वानस्पत्य रथ त्वमुच्यसे । वीड्वङ्गः–दृढाङ्गः भूयाः भव । ततश्च अस्मत्सखा–अस्मन्मित्रं प्रतरणः–
10 प्रतारणः संग्रामाणां पारं नेता । सुवीरः–कल्याणवीरः अविक्लवानवखण्डिताधिष्ठाता भव । किंच कृतप्रतीकारस्त्वमस्माभिः गोभिः संनद्धः असि समन्ततो नद्धो बद्धो गव्येन चर्मणा श्लेष्मणा च । स त्वं कृतप्रतीकारमात्मानं मत्वा तेन हेतुना सुतरामात्मानं वीळयस्व–संस्तभ्नुहि । संस्तब्धे च त्वय्यवस्थितः आस्थाता ते अधिष्ठाता तव योद्धा यानि तेन जेत्वानि–जेतव्यानि आत्मनोऽभीप्सितानि तानि सर्वाणि जयतु ॥

15 दुन्दुभिः ( ८ ) इति अस्य योऽभिधेयः तस्य शब्दानुकरणम् आत्मनो नामधेयप्रतिलम्भनिमित्तम् । यथैवासावभिहन्यमानः शब्दं करोति दुन्दुभिरिति तदेव तस्य

2. Bi. J. वीलयस्व. 4. C. संनद्धोसि; Bi. J. वीलयस्वेति, C. वीळयस्वेति. 7. Bi. mss. (क, ख, ग) read स्याद्वधकर्मणः; Bi. J. conclude IX. ii. 2 with भवति. 9. *a. d. m.* omit भूयाः; *a. d. m.* अस्मन्मित्रं, *bi. j.* अस्मन्मित्रः. 10. *d. m.* omit प्रतारणः. 11. *a. d.* असि संबंधः ?, *m.* आसि संनद्धः, *bi. j.* संनद्धः आसि. 12. *d.* adds मा before तेन. 13. *bi. j. m.* वीलयस्व; *m.* संस्तब्धेनत्व°, *bi. j.* सस्तब्धे च त्व°. 14. *a. d. m.* omit जेत्वानि. 16. Bi. ms. (क) reads शब्दालंकरोति.

1–2. RS. VI. 47. 26; AV. 6. 125. 1; VS. 29. 52.

4. वीळयस्व इति—Durga does not read the superfluous इति.

4. संस्तम्भस्व—Durga reads संस्तभ्नुहि for संस्तम्भस्व.

6–7. Durga does not read दुन्दुभ्यतेर्वा स्यात् शब्दकर्मणः or वधकर्मणः. The *Dhâtupâtha* also does not give '*dundubh*' as a root.

7. Bi. mss. (क, ख, ग) read वधकर्मणः for शब्दकर्मणः.

15. 'दुन्दुभिः'—Nigh. V. 3. 8.

नाम। **द्रुमो भिन्न इति वा**। द्रुमशब्दात् पूर्वपदं भित्तेरुत्तरपदम्। तत्संभवो ह्यसौ द्रुमैकदेशो निष्कुषितश्चर्मणा पिनद्धः।

**तस्य एषा भवति ॥ १२ ॥**

**"उप॑ श्वासय पृथि॒वीमु॒त द्यां पु॑रु॒त्रा ते॑ मनुतां॒ विष्ठि॑तं॒ जग॑त्।
स दु॑न्दुभे स॒जूरिन्द्रे॑ण दे॒वैर्दू॒राद्दवी॑यो॒ अप॑ सेध॒ शत्रू॑न्॥"** 5

**उपश्वासय पृथिवीं च दिवं च। बहुधा ते घोषं मन्यतां विष्ठितं स्थावरं जङ्गमं च यत्। स दुन्दुभे सहजोषण इन्द्रेण च देवैश्च दूराद् दूरतरमपसेध शत्रून्॥**

**इषुधिः। इषूणां निधानम्। तस्यैषा भवति ॥ १३ ॥**

**उप॑ श्वासय पृथि॒वीम्**–इति। अत आरभ्य सर्वा एता युद्धोपकरणा ऋचः। 10 भारद्वाजस्यार्षम्। हे **दुन्दुभे उपश्वासय**–उपशब्दय आपूरय शब्देन एतां **पृथिवीं** कृत्स्नाम्। **उत द्याम्**। अपि चैकस्यापि सतस्तव **पुरुत्रा**–बहुत्वे वर्तमानस्य **मनुतां–मन्यतां घोषं** यच्चेदं **विष्ठितं स्थावरं** यच्चेदं **जगत्–जङ्गमं च**। यस्यैवं तव सामर्थ्यं द्यावापृथिव्यावापूरयितुं **स** त्वं **दुन्दुभे सजूः–सहजोषणः** सहप्रीतिः **इन्द्रेण च** अन्यैः **च देवैः, दूरात्–दवीयः–दूरतरम् अपसेध**– 15 अपकालय अपुनरागमनाय **शत्रून्** अस्मच्छत्रून् इत्येतदाशास्महे त्वत्तः॥

**इषुधिः** (९) **इषूणां निधानं** तूणः। तस्मिन्निषवो निधीयन्ते। **तस्य एषा भवति** ॥ १३ ॥

1. *a. m.* read भिदेः for भित्तेः; Bi. ms. (ख) reads तत्सतत्वोऽसौ. 2. *d.* द्रुमैकदेशोष्कुषितश्चर्मणा etc.? *bi. j.* द्रुमैकदेशानिष्कुषित°. 9. Bi. J. conclude IX. ii. 3 with भवति. 11. *a. d.* add च after एतां. 13. *a. d. m.* यच्चेदं विष्ठितं जंगमं यच्चेदं स्थावरं यच्च (*d. m.* च for यच्च) यस्यैवं etc.; *m.* omits जङ्गमं. 15. *a. d. m.* omit दवीयः. 16. *m.* अपगमय for अपकालय; *a. d. m.* omit शत्रून् before अस्मत्; *a. d.* omit त्वत्तः. 17. *m.* तूर्णः.

4–5. RS. VI. 47. 29; AV. 6. 126. 1; VS. 29. 55; TS. 4. 6. 6. 6; MS. 3. 16. 3: 187, 8–9; KSA. 6, 1; AG. 3. 12. 17.

6. **बहुधा**—Durga does not repeat this word.

17. 'इषुधिः'—Nigh. V. 3. 9.

"बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्यं।
इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥"

बहूनां पिता, बहुरस्य पुत्र इतीषूनभिप्रेत्य । प्रस्मयत इवापाव्रियमाणः । शब्दानुकरणं वा । सङ्काः सचतेः, संपूर्वाद्वा किरतेः । पृष्ठे
5 निनद्धो जयति प्रसूत इति व्याख्यातम् ॥

हस्तघ्नो हस्ते हन्यते । तस्यैषा भवति ॥ १४ ॥

**बह्वीनां पिता**–इति । योयमिषुधिः **बह्वीनां**–बहूनाम् इषूणां **पिता**–पाता रक्षिता तदर्थत्वात् । यस्य चेषुधेः **बहुः** इषुकलापः **पुत्रः**–पुरुणो बहुनः पापात् त्राता। तदर्थं ह्यसौ रक्ष्यत इत्येवं व्युत्पाद्यम् । यश्चायं **चिश्चाकृणोति प्रस्मयत इव अपाव्रि-**
10 **यमाणः** । प्रकर्षेण स्मयत इव उद्घाट्यमानः चित्रपुङ्खत्वात्। अथवा। हसतीव शोभया पुङ्खदीप्त्या । अस्मिन् पक्षे **चिश्चाति**रपठितोपि धातुः कल्प्यत इति । विकारपक्षेषु

3. Bi. mss. (क, ख, ग) read बह्वीनां for बहूनां. 3–4. C. reads प्रस्मयत इति वापाव्रियमाणः, two mss. of Bi. (क, ख) read प्रस्मयत इति वावध्रीयमाणः, Bi. ms. (ग) reads प्रस्मयत इवावध्रियमाणः. 6. C. reads हस्तो हन्यते for हस्ते हन्यते, *d.* as text; Bi. J. conclude IX. ii. 4 with भवति. 7. *a. d. m.* omit पिता before पाता. 8. *a.* पुत्रः पुरुणो बहुनः पाता त्राता, *d.* पुत्रः पुरुणो बहुनः पापात् त्राता, *m.* पुत्रः पुरुत्राणो बहुनः पापात् त्राता, *bi. j.* पुत्रः पुरुणो बहुनः त्राता. 9. *d. m.* रक्ष्यते for रक्षते of *bi.*; *m.* चिश्चा यश्चायं चिश्चायं कृणोति. 9–10. *a. d.* अपाध्रियमाणः, *bi.* अपव्रियमाणः, *m.* अपाव्रियमाणः. 11. *a. d.* अस्मिन् पक्षेर्थे, *m.* अस्मिन्नर्थे.

1–2. RS. VI. 75. 5; VS. 29. 42; TS. 4. 6. 6. 2; MS. 3. 16. 3: 186. 1–2; KSA. 6. 1; ApŚ. 20. 16. 8.

1. **समनावगत्य**—Yâska does not explain this.

3. Bi. mss. (क, ख, ग) read **बह्वीनां** for बहूनां. Durga has बहूनां.

3. **इतीषूनभिप्रेत्य**—Durga does not notice these words.

4. सङ्काः—*Cf.* Nigh. II. 17. 14 (संग्रामनामानि).

4. **सङ्काः सचतेः, संपूर्वाद्वा किरतेः**—Durga takes no notice of these etymologies of the word सङ्काः.

5. **इति व्याख्यातम्**—Durga does not explain this. The word व्याख्यातं here means स्पष्टम् i. e. not requiring explanation.

तदर्थान्यधातूपादानम् इत्याचार्यपरिभाषा । अथ **वा शब्दानुकरणम्** । चिश्चिदित्येवं शब्दं करोति । कदा । **समना** संग्राममम**वगत्य** प्राप्य । स एष **इषुधिः सङ्काः**– संकटान्, संपृक्तान् वा संग्रामान् **पृतनाः च सर्वाः** याः स्पर्धमानैः इषव एव केवलमभिलक्ष्य क्षिप्यन्ते पताकार्थं, तानेवंविधान् संग्रामान् **पृष्ठे** रथस्य मनुष्यस्य वा **निनद्धः जयति प्रसूतः** क्षिप्तो धनुष्मता । इत्येतदाशास्महे ॥ 5

**हस्तघ्नः** ( १० ) कलापी, पट्टकः, गोधा इति च यमाहुः । स कस्मात् । **हस्ते** ह्यवस्थितोऽसौ ज्यया **हन्यते । तस्य एषा भवति** ॥ १४ ॥

**" अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ।**
**हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमांसं परि पातु विश्वतः ॥"**

**अहिरिव भोगैः परिवेष्टयति बाहुं, ज्याया वधात् परित्रायमाणो** 10
**हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन् । पुमान् पुरुमना भवति, पुंसतेर्वा ॥**

**अभीशवो व्याख्याताः । तेषामेषा भवति ॥ १५ ॥**

**अहिरिव भोगैः**–इति । योयम् **अहिरिव भोगैः** सर्प इव कुटिलभावैः सर्पग्राहकस्य बाहुं सर्पेणेव **पर्येति–परिवेष्टयति बाहुं** धनुष्मतः पुरुषस्य । **ज्याया हेतिं परिबाधमानः । ज्याया वधात्** ज्याघातात् बाहुं सर्वत**स्त्रायमाणः** तदर्थत्वात् 15 तस्य । सोयमेवंधर्मा **हस्तघ्नः पुमान्** इव **पुरुमना** इव कश्चिदासः प्रज्ञानबहुलः **पुमांसम्** एतं धनुष्मन्तं **परिपातु विश्वतः** सर्वप्रकारं सर्वतः पातु इत्येतदाशास्महे ।

3. *d.* reads संकयन् for संकटान्; *a. d.* read संसक्तान् for संपृक्तान् वा, *d.* संसक्ता संग्रामात्पृतनाश्च सर्वा. 4. *d.* omits पताकार्थम् and reads तानैवंविधात्संग्रामात्पृष्ठे etc. 5. *a. d.* read निबद्धः for निनद्धः of *bi. j.* 6. *a.* ms. (क) of *bi.* reads कालापीपट्टकः. 12. Bi. J. conclude IX. ii. 5 with भवति. 14. *a.* सपर्येति for सर्पेणेव पर्येति, *d. m.* omit सर्पेणेव and read बाहुं पर्येति. 15. *a. d.* omit ज्याघाताद्बाहुं. 16. *a. d.* प्रज्ञाबहुलः.

6. 'हस्तघ्नः'—Nigh. V. 3. 10.

8–9. RS. VI. 75. 14; VS. 29. 51.

9, 11. Durga does not repeat in his *vritti* विश्वा वयुनानि विद्वान्—the words of the *rik*, and their explanation **सर्वाणि प्रज्ञानानि प्रजानन्** as given by Yâska.

11. पुंसतेः—*Cf.* 'पुंस अभिवर्धने' Dhâtup. 10. 104.

स्त्रियमपेक्ष्याल्पमनस्कां पुरुषे बहुतरं मनः । **पुंसतेः वा** पुरुषार्थस्य । पौंस्यमिति बलनाम भवति ॥

**अभीशवः** (११) इति वक्तव्यम् । ते पुनरमी **व्याख्याताः** अभिधानतोभिधेयतश्च । **अभीषवोऽभ्यश्नुवते** इति । **तेषाम् एषा भवति**—॥ १५ ॥

5 **"रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः ।**
**अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः ॥"**

**रथे तिष्ठन्नयति वाजिनः पुरस्तात् सतो, यत्र यत्र कामयते सुषारथिः कल्याणसारथिः । अभीशूनां महिमानं पूजयामि । मनः पश्चात् सन्तोऽनुयच्छन्ति रश्मयः ॥**

10 **धनुर्धन्वतेर्गतिकर्मणो, वधकर्मणो वा । धन्वन्त्यस्मादिषवः । तस्यैषा भवति ॥ १६ ॥**

**रथे तिष्ठन्नयति वाजिनः**–इति । यदेतत् **रथे तिष्ठन्** वर्तमानः **सुषारथिः**–**कल्याणसारथिः** सुशिक्षितोपि सारथिः नेता रथस्य **वाजिनः पुरः–पुरस्तात्** अग्रतः **सतः** रथयुक्तान् रथस्य नीडे **पश्चात्** सन् उपविष्टस्तिष्ठन् । क्व । **यत्र**
15 **यत्र कामयते** । यत्र यत्रेच्छति योद्धा तत्र तत्र **नयति** । तदेतत् किं सारथेर्माहाभाग्यम् । न इत्युच्यते । अनभीशुको हि सारथिः किं कुर्यात् सुशिक्षितोपि । एवम् **अभीशूनाम्** एतं **महिमानं** माहाभाग्यं **पनायत पूजयामि** । यत् **मनः** अश्वानामतिप्रवृद्ध-

1. *m.* अमनस्कां, *bi. j.* अल्पमनस्कां; *a. d.* पौरुषार्थस्य. 2. *d. m.* add यस्य before बलनाम. 4. *a. d. m.* अभीशवोऽभ्यश्नुवते, *bi. j.* अभीषवोऽभ्यश्नुवते. 8–9. The Bi. mss. (क, ख, ग) read पूजयत for पूजयामि, and पश्चात्सतो for पश्चात्सन्तो. 11. Bi. J. conclude IX. ii. 6 with भवति. 13. *a. d. m.* read कल्याणः for कल्याणसारथिः; *a. d. m.* omit पुरः. 14. *a. d.* सन्नुपविष्टः, *m.* सन् उपविष्टस्तिष्ठन्, *bi. j.* सन् उपतिष्ठंस्तिष्ठन्. 14–15. *m.* यत्र कामयते. 15. *d.* यत्र तत्र for तत्र तत्र. 16. *a. d. m.* निरभीशुकः for अनभीशुको of *bi. j.* 17. *m.* महाभाग्यं.

3. 'अभिशवः'—Nigh. V. 3. 11.

3. व्याख्याताः—See Nir. III. 9.

5–6. RS. VI. 75. 6; VS. 29. 43.

8–9. **पूजयत मनः पश्चात्सतो** is the reading of the Bi. mss. (क, ख, ग).

10. **धन्वन्त्यस्मादिषवः**—Durga does not read these words.

जवानामपि तेषु अश्वेषु उपनिबद्धाः **रश्मयः** प्रगृहीताः सारथिना **पश्चात् सन्तः** मनः **अनुयच्छन्ति** उपरमयन्तीत्यर्थः । संबोध्याभावात् पनायतेत्यस्य पूजयामीति पुरुषवचनव्यत्ययः ॥

**धनुः** (१२) **धन्वतेः** गत्यर्थस्य । तद्बलेन हीषवो गच्छन्ति । **वधकर्मणो वा ।** शत्रुवधाय हि तदुत्पद्यते । **तस्य एषा भवति**—॥ १६ ॥ 5

**" धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम ।**
**धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥"**

**इति सा निगदव्याख्याता । समदः समदो वात्तेः, संमदो वा मदतेः ॥**

**ज्या जयतेर्वा, जिनातेर्वा, प्रजावयतीषूनिति वा । तस्या एषा** 10 **भवति ॥ १७ ॥**

**धन्वना गाः**–इति । ताः **गाः** तावत् **धन्वना** धनुषा वयम् अरिभ्यः **जयेम ।** अपि च **आजिम् ।** इतरेतरस्पर्धया यत्र लक्ष्यवेधायैव केवलमिषवः क्षिप्यन्ते वैतर्क्येण प्रतापार्थं वा तम् **आजिम्**–आजवनं धनुषैव वयं **जयेम** । अपि च याः **तीव्राः**–दारुणाः **समदः**–संग्रामाः, अनेकशस्त्रसंपातसंकटाः, अनेकवीरपुरुषाकीर्णाः 15 ताः अपि वयं **जयेम धन्वना**–धनुषैव । अपि च किं बहुना समासत एव ब्रूमः । **धनुः शत्रोः अपकामं कृणोति ।** यत्र यत्र शत्रुरस्मान् जेतुकामः स्यात्

1. *a. d. m.* तेषु for येषु of *bi. j.*; *a. d.* omit रश्मयः and read गृहीताः for प्रगृहीताः. 1–2. *a. d. m.* पश्चात् सन्तः मनः अनु°, *bi. j.* पश्चात् सन्तः अनु°. 5. *d.* omits हि; *bi. m.* तदुपपद्यते. 11. Bi. J. conclude IX. ii. 7 with भवति. 12. *a. d. m.* read ताः गास्तावत् ध° for ताः गाः ध° of *bi. j.*; the *bi.* ms. (ख) reads अपरेभ्यः for अरिभ्यः. 13. *m.* आजिः for आजिम्; *a. d.* इतरस्य स्पर्धया; *m.* लक्ष्वेधाय. 13–14. *d.* वैतर्कोण. 14. *m.* आजवंतं; *a. d. m.* add वयं before जयेम; *a. d. m.* read या अपि तीव्राः for अपि च याः तीव्राः. 16. *a. d. m.* omit धन्वना.

4. ' धनुः '—Nigh. V. 3. 12.

6–7. RS. VI. 75. 2; VS. 29. 39; TS. 4. 6. 6. 1; MS. 3. 16. 3: 185, 12–13; KSA. 6. 1.

10. Durga does not read the words—प्रजावयतीषूनिति वा.

ततस्ततोऽपगतकाममस्मत्तो धनुः करोतु। अपगतकामे च तस्मिन् शत्रौ वयं **धन्वना**-धनुषैवैताः **सर्वाः** दिशः **प्रदिशः** च **जयेम** इत्येतदाशास्महे।

**समदः समदो वा संमदो वा।** संपूर्वस्य **अत्तेः** भक्षणार्थस्य। भक्षत इव हि तत्र परस्परतः। **मदतेर्वा** हर्षणार्थस्य द्वितीयम्। **संमदो** वेति संहृष्टास्तत्र हि
5 परस्परतो युध्यन्ते॥

**ज्या** (१३) इति वक्तव्यम्। सा पुनरियं **जयतेर्वा जिनातेर्वा**। धात्वन्यत्वमर्थै-कत्वम्। तद्बलेन हि जीयते। स पुनरेष धनुर्गुणः। **तस्या एषा भवति**॥ १७॥

**"वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना।**
**योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इयं समने पारयन्ती॥"**

10 **वक्ष्यन्तीवागच्छति कर्णं प्रियमिव सखायमिषुं परिष्वजमाना। योषेव शिङ्क्ते शब्दं करोति वितताधि धनुषि ज्येयं, समने संग्रामे पारयन्ती पारं नयन्ती।**

**इषुरिषतेर्गतिकर्मणो, वधकर्मणो वा। तस्यैषा भवति॥ १८॥**

**वक्ष्यन्तीव**-इति। येयं योषिदिव काचित् कस्मैचिदिष्टाय पुरुषाय किंचिद् रहस्यं
15 **वक्ष्यन्ती इव** कथयिष्यन्तीव ज्या धनुष्मता पुरुषेण इषुं चिक्षिप्सता सव्येन दक्षिणेन वा पाणिना कृष्यमाणा सव्यं दक्षिणं वा **कर्णं प्रत्या गनीगन्ति आगच्छति।**

---

1. *d.* reads करोति for करोतु. 2. *a. d. m.* omit धन्वना. 3. *a. d.* omit संमदो वा; *a. d. m.* भक्षार्थस्य; *bi. j.* भक्षित इव for भक्षत इव of all others. 4. *d.* समदो वेति. 5. *m.* युध्यन्ति. 6. *d.* omits जिनातेर्वा. 13. C. D. R. इषतेर्, Bi. J. ईषतेर्; Bi. J. conclude IX. ii. 8 with तस्यैषा भवति. 15. *a. d.* omit इव after वक्ष्यन्ती. 16. *bi. j.* कर्णं प्रत्याकृष्यते। धनुष्मता तथा मध्यम् आत्मनो निनीय इषुं गनीगन्ति etc.; *a. d. m.* and the *bi.* ms. ख as text.

---

6. 'ज्या'—Nigh. V. 3. 13. Cf. Dhātup. 9. 27 'ज्या वयोहानौ'.

8-9. RS. VI. 75. 3; VS. 29. 40.

11-12. The three mss. (क, ख, ग) of Bi. do not read **शिङ्क्ते** ( line 11 ), and **पारं नयन्ती** ( line 12 ).

13. C. D. R. and the Bi. mss. क have the reading **इषुरिषतेः**. The Bi. mss. क, ख, ग do not read **वधकर्मणो वा**.

कथमिति। **प्रियं सखायं परिषस्वजाना**। **प्रियम्**–इष्टं काचित् कंचित् **सखायं** समानख्यानम् उपजातप्रीति स्त्री पुरुषमिव **इषुं परिष्वजमाना**। संप्रत्यर्थ एव **सस्वजाने**त्यभ्यासोऽनर्थकः, अर्थविशेषाभावात्। यथा हि सा कर्णं प्रत्याकृष्यते धनुष्मता तथा मध्यमात्मनो निनीय इषुं, परिष्वजत इव। किमेतावदेव। न इत्युच्यते। या च इयं **योषा इव शिंक्ते** योषिदिव विदग्धा काचित् कामिना पुरुषेण आत्मानं 5 प्रत्याकृष्यमाणोपजायमानपरितोषा कामिनः पुरुषस्य हर्षमुत्पादयन्ती **शिङ्क्ते** सुकुमारमव्यक्तशब्दं **करोति**। **वितताधिधन्वन् धनुषि** अध्यारोपिता **सा इयम्** अस्माकमेवमादिगुणयुक्ता **ज्या समने–संग्रामे पारयन्ती** अस्तु। **पारम्**–अन्तं **नयन्ती** अस्तु शत्रूणाम् इत्येतदाशास्महे॥

**इषुः** (१४) इति एतत् **इषतेः गतिकर्मणः**। तदर्थमेवासावुत्पाद्यते, **वधार्थस्य** 10 **वा**। तदर्थमेव ह्यसौ गच्छति। **तस्य एषा भवति**—॥ १८॥

"**सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः संनद्धा पतति प्रसूता।**
**यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन्॥**"

**सुपर्णं वस्त इति वाजानभिप्रेत्य। मृगमयोऽस्या दन्तो, मृगयतेर्वा। गोभिः संनद्धा पतति प्रसूतेति व्याख्यातम्। यत्र नराः संद्रवन्ति च** 15 **विद्रवन्ति च तत्रास्मभ्यमिषवः शर्म यच्छन्तु शरणं संग्रामेषु॥**

**अश्वाजनीं कशेत्याहुः। कशा प्रकाशयति भयमश्वाय। कृष्यतेर्वा-**

---

1–2. *a.* only adds कंचित् before सखायं. 2–3. *d. m.* read संप्रत्यर्थ एव, *bi. j.* संप्रीत्यर्थ एव. 3. *d. m.* omit अनर्थकः. 7. *a. d.* अभ्यारोपिता. 8. *a. d. m.* omit समने संग्रामे. 9. *m.* omits इति before एतदाशास्महे. 10. *m.* इषतेः, *bi. j.* ईषतेः; *a. d. m.* उत्पाद्यते, *bi. j.* उत्पद्यते.

---

10. 'इषुः'—Nigh. V. 3. 14.

12–13. RS. VI. 75. 11; VS. 29. 48.

14. Durga does not read **इति वाजान् अभिप्रेत्य** and **मृगयतेर्वा.** He, however, explains them.

15. व्याख्यातं—See Nir. II. 5; Durga does not read **इति व्याख्यातम्.**

16. Durga reads **संग्रामे** for संग्रामेषु of the *bhâṣya.*

**णूभावात् । वाक् पुनः प्रकाशयत्यर्थान् । खशया । क्रोशतेर्वा । अश्व-कशाया एषा भवति ॥ १९ ॥**

**सुपर्णं वस्ते**–इति । य एते **सुपर्णं वस्ते**–वसते गार्ध्रं, **वाजा इषवः** । येषां च एतेषां **मृगः–मृगमयः दन्तः**, यदि मार्गाणि फलानि । अमार्गेषु तु व्यधनस्वभावात् 5 मार्गयन्तीव किं नु तद् वेद्धव्यं स्यात् यदहं विद्धेयमिति । ये चेमे **गोभिः संनद्धाः** गव्येन स्नाव्ना श्लेष्मणा च समन्ततो नद्धाः **पतन्ति**–गच्छन्ति धनुष्मता **प्रसूताः** क्षिप्ताः । त एवमादिगुणयुक्ताः **इषवः यत्र**–यस्मिन् **संग्रामे नरः–नराः** मनुष्याः **संद्रवन्ति**–संगच्छन्ति **च विद्रवन्ति च** पुनर्विगच्छन्ति **तत्र अस्मभ्यं शर्म–शरणं** सुखं जयनिमित्तं **यंसन्–यच्छन्तु**–ददतु इत्येतदाशास्महे ॥

10 **अश्वाजनी** (१५) इति एतत् पदम् । तां पुनरेतां **कशा इत्याहुः** । अश्वाजनीत्ये-तत् न निर्वक्तव्यं प्रत्यक्षवृत्तित्वादस्य । अथ **कशा** कस्मात् । सा हि **प्रकाशयति**–प्रख्यापयति **भयम् अश्वाय** । **कृष्यतेः वा अणूभावात्** । अपकृष्टा हि सा भवति चर्मणोऽण्वी । **वाक्** अपि कशा इत्युच्यते । सा **पुनः प्रकाशयत्यर्थान्** इति । अथवा **खशया** । वाक् खे मुखाकाशे शेते इति । **क्रोशतेः वा** शब्दार्थस्य ।

15 या **त्वश्वकशा** तस्याः **एषा भवति**—॥ १९ ॥

---

2. Bi. J. conclude IX. ii. 9 with एषा भवति. 3. *m.* वसते गार्ध्रं वाजा इषवः, *bi. j.* वसतेऽङ्गार्द्धं वाजान् इषवः ।. 4. *a. d. m.* omit मृगः; *a. d. m.* read तु for वा of *bi. j.*; *d.* reads व्यधनस्वभावात्, *bi. j. m.* व्यथनस्व°. 5. *d. m.* मार्गयतीव; *m.* adds यद् before वेद्धव्यं; *a. d.* विध्येयमिति, *m.* यद्वेद्धव्य-मिति, *bi. j.* यदहं विद्धेयमिति. 6. *a. d.* पतंति, *bi.* पतति. 7. *a. d.* omit नरः. 8. *a. d.* read गच्छन्ति for संगच्छन्ति of *bi. j.* 9. *a. d. m.* omit यंसन्. 14. *a. d.* omit अथवा. 15. *a. d.* add स्तुतये after भवति.

---

1. **खशया**—Durga's reading seems to be खशया वा. Cf. अथवा **खशया,** line 14, below.

10. 'अश्वाजनी'—Nigh. V. 3. 15.

11. प्रकाशयति—Cf. Dhâtup. 1. 648.

12. कृष्यतेः—Cf. Dhâtup. 1. 1015.

14. क्रोशतेः—Cf. Dhâtup. 1. 881.

"आ जङ्घन्ति सान्वेषां जघनाँ उप जिघ्नते ।
अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥"

आघ्नन्ति सानून्येषां सरणानि सक्थीनि । सक्थिः सचतेरासक्तोऽस्मिन् कायः । जघनानि चोपघ्नति । जघनं जङ्घन्यतेः । अश्वाजनि प्रचेतसः प्रवृद्धचेतसोऽश्वान् समत्सु समरणेषु संग्रामेषु चोदय ॥ 5

उलूखलम् उरुकरं वोर्ध्वखं वोर्करं वा ।
"उरु मे कुर्वित्यब्रवीत्तदुलूखलमभवत् ।"
"उरुकरं चैतत्तदुलूखलमित्याचक्षते परोक्षेण ॥"
इति च ब्राह्मणम् । तस्यैषा भवति ॥ २० ॥

आजङ्घन्ति सान्वेषाम्–इति । आजङ्घन्ति इति शतरि संबोधनम् । हे अश्वा- 10

---

3. C. D. and the three Bi. mss. (क, ख, ग) read आघ्नति for आघ्नन्ति, and सक्थि सचतेः; Bi. J. and others read सक्थिः सचतेः 6–7. C. D. and the Bi. mss. ङ, च read उरुकरं वोर्करं वोर्ध्वखं वोरु मे. 8. C. and the Bi. mss. ङ, च read चैतदुलूखल°. 9. Bi. J. conclude IX. ii. 10 with भवति.

---

1–2. RS. VI. 75. 13; VS. 29. 50; TS. 4. 6. 6. 5; MS. 3. 16. 3: 137. 6–7; KSA. 6. 1.

3–4. Durga does not repeat आघ्नन्ति (v. l. आघ्नति) and उपघ्नति of the *bhâṣya*. He however reads उपाजिघ्नति for उपघ्नति. C. D. and the क, ख, ग mss. of Bi. read आघ्नति and सक्थि सचतेः. The reading सक्थिः is grammatically incorrect.

5. The three mss. of Bi. (क, ख, ग) do not read प्रचेतसः.

6. ऊर्करं वा—C. D. and Durga read ऊर्करं वा before ऊर्ध्वखं वा.

7, 8. The quotations are not traced; cf. "उरु मे करदिति तदुरुकरम् । उरुकरं ह वै तदुलूखलमित्याचक्षते परोक्षम् ।"—ŚB. VII. 5. 1. 22.

10. आजङ्घन्ति इति शतरि संबोधनम्.—आजङ्घन्ति, so also उपजिघ्नते (next page, line 2) are forms of the present tense, third person *singular*, of the Rigvedic root घन्, to strike. They are not vocatives as Yâska and Durga understand them, nor are they the forms of the plural, as Sâyaṇa takes them. Sâyaṇa's readings of Yâska's *bhâṣya* are आघ्नन्ति and उपघ्नन्ति.

**जनि आजङ्घन्ति सानु-सानूनि एषां सरणानि** समुच्छ्रितानि **सक्थीनि** कटिप्रदेशान् **जघनान् उपजिघ्नते । जघनानि** स्फिग्देशाः तांश्च हे **अश्वाजनि** उपजिघ्नति । इदमपि शतर्येव । रथ्यानां हि कटिप्रदेशमश्वाजन्यभिहन्ति पस्त्यानां स्फिग्देशान् । हे **अश्वाजनि** या त्वमेवमभिहंसि सा त्वमेतान् **अश्वान् प्रचेतसः**-
5 प्रकृष्टचेतसः गमनं प्रति समुत्सुकान् **समत्सु-समरणेषु-संग्रामेषु** तथा **चोदय** यथा जयेयम् इत्येतदाशास्महे ॥

**सानूनि-सक्थीनि** । तानि पुनः **सरणानि** । तद्बलेन हि सरन्ति सर्तारः । **सक्थिः** कस्मात् । **सचतेः** । किमास्मिन् सक्तम् । **आसक्तोऽस्मिन् कायः** कृत्स्नं शरीरम् । **जघनं** कस्मात् । तद्धि **जंघन्यते** भृशं हन्यते कशया ॥

10 **उलूखलम्** (१६) इति एतत्पदम् । तत् कस्मात् । तद्धि उरुकरत्वात् **उरुकरं**, बह्वन्नं करोति । उरुशब्दात् पूर्वपदं करोतेरुत्तरपदम् । **ऊर्करं वा** । **ऊर्क्**शब्दात् पूर्वपदं करोतेरेवोत्तरपदम् । ऊर्जं एव हि करणार्थं तदुत्पद्यते । **ऊर्ध्वखं वा** । ऊर्ध्वशब्दात् पूर्वपदं खशब्दादुत्तरपदम् । ऊर्ध्वमेव हि तस्य खातं भवति । अथवा

**"उरु मे कुरु इत्यब्रवीत् । तदुलूखलमभवत् ।"**

15 तत् किल क्रियमाणम् उरु मे खं कुर्वित्यब्रवीदिव तथागुणयुक्तत्वात् तस्य । **ब्राह्मणमपि च भवति ।**

**"उरुकरं वैतत्तदुलूखलमित्याचक्षते परोक्षेण ॥"**

1. *m.* omits सानु; *a. d.* omit सानूनि. 2. *d.* कटिप्रदेशात्; *a. d.* omit जघनान् उपजिघ्नते. 3. *a. d.* उपजिघ्नन्ति; *d.* omits हि. 3–4. *a. d. m.* पृष्ठयानां स्फिग्देशं, *bh. j.* पस्त्यानां स्फिग्देशान्. 5. *a. d.* प्रवृद्धचेतसः, *bh. j.* प्रकृष्टचेतसः; *m.* omits संग्रामेषु. 8. *m.* सक्थि कस्मात्. 9. *a. d. m.* omit जंघन्यते. 10–11. *a. d.* तद्धि उरुकरं वा । उरुकरं बह्वन्नं करोति; *d.* उरकर for उरुकरं?. 11. *a. d.* ऊर्करं वा. 12. *a. d.* omit करोतेरेवोत्तरपदम्, *m.* reads करोतेर्वोत्तरपदम्. 16. *a. d. m.* add तदुलूखलमभवत् । before ब्राह्मणमपि, *bh. j.* do not read it. 17. *d.* उरकरं for उरुकरं ?, *m.* उरूकरं; *a. d. m.* वैतदुलूखल°; *m.* °ते परोक्षेण, *bh. j.* °तेऽपरोक्षेण.

5. प्रकृष्टचेतसः—*bh. j.* and some other mss. of Durga read प्रकृष्टचेतसः for **प्रवृद्धचेतसः** which is the reading of Yâska.

10. 'उलूखलम्'—Nigh. V. 3. 16.

14. "उरु मे etc."—*Cf.* ŚB. VII. 5. 1. 22.

17. "उरुकरं वै etc."—*cf.* ŚB. VII. 5. 1. 22.

उरु करोतीत्युरुकरमेतत् प्रत्यक्षमव्यवहितगुणाभिधानम् । तत् पुनरेतत् रलोर्व्यत्ययेन व्यवहितगुणमुच्यते **उलूखलमिति** ।

**तस्य एषा** स्तुतिः **भवति**—॥ २० ॥

> "**यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे ।**
> **इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥"** 5

**इति सा निगदव्याख्याता ॥ २१ ॥**

**यच्चिद्धि त्वं गृहे गृहे**—इति । शुनःशेपस्यार्षम् । "आयजी वाजसातमा"—इति च । सोमाभिषवे विनियोगः । अभिमन्त्र्य चोपधीयते अग्निचयने । हे **उलूखलक युज्यसे** । **यद्यपि त्वम्** अन्नसंस्कारार्थं **गृहे गृहे युज्यसे** तथापि त्वम् **इह** एव अस्मद्गृहे **द्युमत्तमं** दीप्तिमत्तमं गंभीरम् अन्नैर्बहुभिः संस्क्रियमाणैः शब्दं **वद** । कथम् । 10 **जयतामिव दुन्दुभिः** । ये हि जयन्ति तेषामेतदेव जयस्य पूर्वरूपं भवति गंभीरस्वरो दुन्दुभिः । ये पुनर्जीयन्ते तेषां रुक्षस्वर इति ॥ २१ ॥

**वृषभः प्रजां वर्षतीति वातिबृहति रेत इति वा । तद्वृषकर्मा वर्षणाद्वृषभः । तस्यैषा भवति ॥ २२ ॥**

**वृषभः** (१७) कस्मात् । स हि **प्रजां वर्षति** । प्रजोत्पत्तिकारणं रेतः सिञ्चति 15

---

1. *a. d. m.* and the *bi.* ms. ख read गुणाभिधानम्, *bi. j.* गुणविधानम्. 6. Bi. J. conclude IX. ii. 11 with निगदव्याख्याता, and read after it ॥ ११ ॥ **इति नवमाध्यायस्य द्वितीयः पादः**. 9. *a. d.* omit one गृहे. 10. *d. m.* दीप्तिमन्तं गंभीरं. 11. *d.* गंभीरस्वनो for °स्वरो. 12. *m.* रूक्षस्वर; *a. d.* conclude here *the second pâda*, इति नवमाध्यायस्य द्वितीयः पादः ।. 13. The *third pâda* begins with **वृषभः प्रजां**. Bi. mss. (क, ख) read वातिबृहती. 14. Bi. J. conclude IX. iii. 1 with भवति. 15. *a. d.* ह for हि.

---

4-5. RS. I. 28. 5; AB. VII. 17; Cf. Brh. D. III. 101.

7. "आयजी etc."—RS. I. 28. 7; *cf.* Nir. IX. 36.

8. विनियोगः—See Ait. Br. 33. 5.

15. 'वृषभः'—Nigh. V. 3. 17.

योनौ। **अतिबृहति रेतः इति वा।** रेतः सेक्तुमतिशयेनासावात्मानमुद्यच्छति। **तद्वृषकर्मा वर्षणात् वृषभः।** तेनाश्ववृषकर्मणा रेतोवर्षलक्षणेन गौरप्यतिशयेन यो युक्तोऽसावपि वृषणात् रेतोवर्षणाद्धेतोः भकारमुपजनीकृत्वा वृषभ इत्युच्यते।

**तस्य** गोवृषभस्य **एषा** स्तुतिः **भवति**—॥ २२ ॥

5 **"न्यक्रन्दयन्नुपयन्त एनममेहयन् वृषभं मध्य आजेः।**
**तेन सूभर्वं शतवत् सहस्रं गवां मुद्गलः प्रधने जिगाय॥"**

**न्यक्रन्दयन्नुपयन्त एनमिति व्याख्यातम्। अमेहयन् वृषभं मध्य आजेराजयनस्याजवनस्येति वा। तेन तं सूभर्वं राजानम्। भर्वतिरत्तिकर्मा। तद्वा सूभर्वं सहस्रं गवां मुद्गलः प्रधने जिगाय। प्रधन इति 10 संग्रामनाम, प्रकीर्णान्यस्मिन् धनानि भवन्ति।**

**द्रुघणः, द्रुममयो घनः। तत्रेतिहासमाचक्षते। मुद्गलो भार्म्यश्व ऋषिर्वृषभं च द्रुघणं च युक्त्वा संग्रामे व्यवहृत्याजिं जिगाय। तदभिवादिन्येषर्ग् भवति॥ २३॥**

2. *a. d.* तेनाश्ववृषकर्मणा रेतोवर्षणेन गौरप्यतिशयेन etc., *Bi. j. m.* तेनास्य वृषकर्मणा रेतोवर्षलक्षणेन. 3. *d.* वृषणाद्धेतोर्वर्षणाद्धेतोः etc., *m.* वर्षणात् for वृषणात्. 4. *a. d. m.* omit भवति. 7–8. The mss. क, ख, ग of Bi. read मध्य आजयनस्या°. 11. R. and the Bi. mss. ङ, च read द्रुममयो घणः. 13. Bi. J. conclude IX. iii. 2 with ऋग् भवति.

1. अतिबृहति—*Cf.* 'बृहू उद्यमने'। 'बृहू' इति अन्ये। Dhâtup. 6. 66.

3. वृषणात्—Durga reads वृषणात् for **वर्षणात्.**

5–6. RS. X. 102. 5.

8. The mss. क, ख, ग of Bi. omit **आजेः.**

8. **आजयनस्याजवनस्येति वा**—Not explained by Durga.

8. The three mss. क, ख, ग of Bi. do not read **तं.**

8–9. Durga omits **भर्वतिरत्तिकर्मा.** For the root *cf.* 'भर्व हिंसायाम्' Dhâtup. 1. 582.

9–10. **प्रधन इति संग्रामनाम प्रकीर्णान्यस्मिन्धनानि भवन्ति**—Not explained by Durga.

12. **वृषभं च** and **संग्रामे व्यवहृत्य**—Not explained by Durga.

**न्यक्रन्दयन्नुपयन्त एनम्–इति** । एवं तावत् **व्याख्यातं** प्रतिपदम् । एकवाक्यतया तु मन्त्रस्य व्याख्येयमिति । मन्त्रदृग् ब्रवीति । यत् वृषभकेणाजैषीस्त्वमेनं राजानमिति तत्र मे शृणुत । यम् **एनम् आजेः**–शरपथस्य संग्रामस्य **मध्ये** वर्तमानं **वृषभं न्यक्रन्दयन् उपयन्त** उपयन्ति न्यक्रन्दयन्तः एनं हे जनाः फुत्कारवन्तं कारयतेति, उपयन्ति उपगच्छन्ति परिवृण्वन्ति । **अमेहयन्** मेहयन्तश्च तं मुहूर्तं स्थीयतां यावदयं सकृन्मूत्रं करोति ततो न ह्यसुखं भविष्यतीति । स हि गोमिनाम् आजिसृतां स्वभावः । **तेन** अमुना वृषभेण **सूभर्वं** सुभगं शोभनभोगं **राजानम्** । **तद्वा** सुभगं सुयवसदेशं समृद्धं **शतवत्** शतैस्तद्वत्संख्याकं **सहस्रं गवां** दशशतानि । यद्वा असंख्यं बहु । किम् इति । **मुद्गलः** अहं **प्रधने–संग्रामे** धनं प्रति स्पर्धया विजिगीष्वोरावयोः प्रवृत्तयोर्वाहिकायां **जिगाय** जितवानिति ॥

**द्रुघणः** (१८) इति एतत् पदम् । स पुनरेषः **द्रुममयो घनः** द्रुप्रकृतिः । तत्प्रकृतिवचने मयट् । द्रुशब्दात् पूर्वपदं घनशब्दादुत्तरपदम् । मुद्गरोऽभिधेयः ।

**तत्रेतिहासमाचक्षते** इति । स्तुतिलाभनिमित्तमुभयोरप्येकमेव वृषभद्रुघणयोः । **भार्म्यश्व ऋषिरि**त्येवमादि । स किल द्वितीयगोरभावात् राज्ञा सह प्रतिस्पर्धमानः ऐश्वर्यादन्वादिश्य **द्रुघणं वृषभेण** सह **युक्त्वा** राज्ञा सह **आजिं** ससर्प । स च तं **जिगाय** जितवान् । यथा चैतदेवं तस्यार्थस्य **अभिवादिनी एषा ऋग् भवति**—॥ २३ ॥

---

2–3. *a. d. m.* यद् ब्रध्वे केनाजैषीस्त्वमेतं राजानमिति, *bi. j.* as text. 3. *a. d. m.* एतं for एनं; *a. d. m.* omit सग्रामस्य. 4. *a. d. m.* omit उपयन्त; *a. d. m.* न्यक्रंदयंत ?. 4–5. *a. d. m.* read हे जनाः युक्ता रयन्त (*d.* omits these words) युक्ता रयन्तेति उपयन्ति, *bi. j.* हे जनाः फुत्कारवन्तं कारयतेति उपयन्ति. 5. *bi. j.* अमेहयन् मेहयन्तश्च, *a. d.* omit अमेहयन् and read अमेहयन्तश्च for मेह°. 6. *m.* शकृन्मूत्रं; *a. d. m.* ततो लघु सुखं भविष्यतीति, *bi. j.* ततो न ह्यसुखं भविष्य°. 7. *d.* आजिसृतां, *bi. j.* माजिसृतां; *a.* सूर्भवं, *d.* as text; *d.* सुतगं for सुभगं; *d.* adds वा after राजानम्. 8. *d. m.* सुयवसदेशसमृद्धं; *m.* शतैस्तद्वत्संख्यासहस्रं. 9. *a. d.* read प्रधाने for प्रधने and omit संग्रामे. 11. *a.* दुमयो घनः, *d. m.* द्रुमयो घनः, *bi. j.* द्रुममयो घनः. 14. *m.* मुद्गलो भार्म्यश्च ऋषिरि° and *a. d.* मुद्गलोर्भाम्यश्च etc.; *a. d. m.* द्वितीयस्य गोः. 15. *d.* ऐश्वर्य दत्वादिस्य द्रु°; *d.* युक्ता for युक्त्वा.

---

11. ‘द्रुघणः’—Nigh. V. 3. 18.

12. मयट्—See Pâṇinî, V. 4. 21.

" इमं तं पंश्य वृषभस्य युञ्जं काष्ठाया मध्ये द्रुघणं शयानम् ।
येन जिगाय शतवत् सहस्रं गवां मुद्गलः पृतनाज्येषु ॥ "

इमं तं पश्य वृषभस्य सहयुजं काष्ठाया मध्ये द्रुघणं शयानम् । येन जिगाय शतवत् सहस्रं गवां मुद्गलः पृतनाज्येषु । पृतनाज्यमिति 5 संग्रामनाम । पृतनानाम् अजनाद्वा, जयनाद्वा । मुद्गलो मुद्गवान्, मुद्गगिलो वा, मदनं गिलतीति वा, मदंगिलो वा, मुदंगिलो वा । भार्म्यश्वो भृम्यश्वस्य पुत्रः । भृम्यश्वो भृमयोऽस्याश्वा, अश्वभरणाद्वा ॥

पितुः इत्यन्ननाम । पातेर्वा, पिबतेर्वा, प्यायतेर्वा । तस्यैषा भवति ॥ २४ ॥

10 **इमं तं पंश्य वृषभस्य**–इति । जितायामाजौ अवसिताजिसरणमाज्यन्त एवापविद्धमुद्गरो मुद्गलः केनचित् पृष्टः । केन सह युक्तः वृषभेणेमं राजानमजैषीरिति । स तमुपदिशन्नेव द्रुघणमाज्यन्ते तस्मिन्नपविद्धमसावज्ञमिव कुत्सयन् राजानमनयर्चा तस्मै प्रत्याचचक्षे, इमं तं पश्य येनाजैषमिति । **वृषभस्य युञ्जम् सहयुजम्** । क्व वर्तमानम् । **काष्ठायाः** आज्यन्तस्य **मध्ये द्रुघणं शयानम्** अपविद्धम् । **येन 15 जिगाय शतवत्सहस्रम्** इति व्याख्यातम् ।

**पृतनाज्यम् इति संग्रामनाम** । तत् कस्मात् । **पृतनानाम् अजनाद्वा** । **पृतनाः** मनुष्याः, ते यस्मिन्नजन्ति गच्छन्ति । **पृतना**शब्दात् पूर्वपदम् अजतेरुत्तरपदम् । **जयनाद्वा** । तत्रोत्तरपदे विकल्पयन्ति । ते हि तत्र जयन्ति ।

4. Bi. mss. (क, ख, ग) read पृतनाज्य इति. 9. Bi. J. conclude IX. iii. 3 with भवति. 10. *a. d.* °माद्यन्त° for °माज्यन्त°. 11. *a. d. m.* °पविद्धमुद्गरो, *bi. j.* °पविद्धं मुद्गरो; *a. d. m.* युक्त्वा for युक्तः. 12. *a. d.* °माद्यन्ते for °माज्यन्ते; *a. d.* कुत्सन् for कुत्सयन्. 13. *a. d.* प्रत्याचचक्षे for प्रत्याचक्षे of *bi. j.*, *m.* प्रत्याचक्षते; *a. d. m.* omit युञ्जम्. 14. *a. d.* काष्ठायां for काष्ठायाः. 17. *a. d. m.* अजतेः for अञ्जतेः of *bi.*

1–2. RS. X. 102. 9; *Cf.* BD. VIII. 11.

5–6. The three mss. (क, ख, ग) of Bi. do not read **वा** after **मुद्गगिलो.**

8. **पितुरित्यन्ननाम**—*Cf.* ŚB. 1. 9. 2. 20; AB. 1. 13,—" अन्नं वै पितुः".

14. काष्ठायाः आज्यन्तस्य—Cf. 'आज्यन्तोऽपि काष्ठोच्यते'—Nir. II. 15.

**मुद्गलः मुद्गवान्** । लो मत्वर्थे । अथ **वा मुद्गगिलः**–मुद्गभोजनप्रायः । मुद्ग-शब्दात् पूर्वपदं गिलशब्दात् उत्तरपदम् । **मदनं गिलति इति वा** । मदनः कामः, तमसौ गिलति वशीकरोति । जितेन्द्रिय इत्यर्थः । मदनशब्दात् पूर्वपदं गिलतिशब्दात् उत्तरपदम् । **मदंगिलो वा** । मद उद्रेकः, तमसौ गिलति । उपशान्त इत्यर्थः । **मुदंगिलो वा** । हर्षमसौ गिलति, निवृत्त इत्यर्थः ।  5

**भार्म्यश्वः भृम्यश्वस्य पुत्रः । भृम्यश्वः** पुनः **भृमयोऽस्याश्वाः** अनवस्थायिनः । **अश्वभरणात् वा** बिभर्ति वासावश्वान् ॥

**पितुः** (१९) **इति** एतत् वक्तव्यम् । तत् पुनरेतत् **अन्ननाम** । तत् कस्मात् । **पातेर्वा** रक्षणार्थस्य । **पिबतेर्वा** पानार्थस्य । **तस्य एषा भवति** ॥ २४ ॥

"पितुं नु स्तोषं महो धर्माणं तविषीम् ।  10

यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥"

**तं पितुं स्तौमि महतो धारयितारं बलस्य । तविषीति बलनाम, तवतेर्वा वृद्धिकर्मणः । यस्य त्रित ओजसा बलेन । त्रितस्त्रिस्थान इन्द्रो वृत्रं विपर्वाणं व्यर्दयति ॥**

**नद्यो व्याख्याताः । तासामेषा भवति ॥ २५ ॥**  15

---

1–2. *a. d.* मुद्गशब्दः पूर्वपदं गिलशब्द उत्तरपदं. 3–4. मदनशब्दः पूर्वपदं गिलतिशब्द उत्तरपदम्. 4. *a. d.* add मुदंगिलो वा, after मदंगिलो वा. 13. The three mss. of Bi. (क, ख, ग) read तवतेर्वृद्धिकर्मणो, Bi. J. C. and R. have तवतेर्वा वृद्धिकर्मणो; Bi. mss. क, ख, ग read त्रितो व्योजसा for त्रित ओजसा of Bi. J. and others. 15. Bi. J. conclude IX. iii. 4 with भवति.

---

8. 'पितुः'—Nigh. V. 3. 19.

10–11. RS. I. 187. 1; VS. 34. 7.

12. तविषी—Nigh. II. 9. 10.

13. **तवतेर्वा वृद्धिकर्मणः**—The Bi. mss. क, ख, ग read **तवतेर्वृद्धिकर्मणः** only. The वा in the other reading is redundant as only one etymology is given. Durga in his *vṛtti* does not notice any of these readings.

15. नद्यो व्याख्याताः—Nir. II. 24.

**पितुं नु स्तोषम्**—इति । अगस्त्यस्यार्षम् । **यस्य** पितोः **ओजसा बलेन** बलाधिपतिरपि **इन्द्रः त्रितः त्रिस्थानः** त्रिषु स्थानेष्वप्रतिहतप्रभावः **वृत्रं** मेघं **विपर्वं विगतपर्वाणं** विगतसन्धिबन्धनं कृत्वा **वि अर्दयत्** विविधम् **अर्दयति** अपुनरावृत्तये **तं पितुम्** अन्नमहं **तविषीं** ताविषीसंज्ञकस्य **महः महतः बलस्य** 5 **धर्माणं धारयितारं स्तोषं स्तौमि** । को हि नाम न तत् स्तूयात् यस्माद्दते त्रिलोकाधिपतिरपीन्द्रः किंचिदप्यशक्तः कर्तुमित्यभिप्रायः । **तविषीति बलनाम** 'तु वृद्धौ' इत्यस्य । तद्धि सर्ववस्तुभ्यो ज्यायः ॥

**नद्यः** (२०) अवसरप्राप्ताः । ताः पुनरेताः **व्याख्याताः** । 'नदना भवन्ति शब्दवत्यः' इति । **तासाम् एषा भवति** ॥ २५ ॥

10 **"इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।**
**असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥"**

**इमं मे गङ्गे यमुने सरस्वति शुतुद्रि परुष्णि स्तोममासेवध्वम् । असिक्न्या च सह मरुद्वृधे, वितस्तया चार्जीकीय आशृणुहि सुषोमया चेति समस्तार्थः ।**

15 **अथैकपदनिरुक्तम् । गङ्गा गमनात् । यमुना प्रयुवती गच्छतीति वा, प्रवियुतं गच्छतीति वा । सरस्वती । सर इत्युदकनाम । सर्तेस्तद्वती ।**

2. *a. d. m.* omit त्रितः. 4. *a. d.* अहमन्नं; *a. d.* omit तविषीं and महः. 5. *a. d. m.* omit स्तोषं; *a. d.* तन् न स्तूयात्. 6. *a. d.* प्रकर्तुं. 7. *m.* तद्धि सर्ववसुभ्यो ज्यायः.

7. तु वृद्धौ इत्यस्य—*Cf.* "तविः सौत्रः धातुः वृद्ध्यर्थः । तवेः टिषन् प्रत्ययः"—*Devarâja* on Nigh. II. 9. 10 (तविषी). The *Dhâtupâtha* does not give the root 'तु', although the *Siddhânta-Kaumudî* has it.

8. 'नद्यः'—Nigh. V. 3. 20.

10–11. RS. X. 75. 5; TA. 10. 1. 13; Mahân. Up. 5. 4.

10. **परुष्ण्या**—If this is one word as Durga understands it परुष्ण्या सह p. 929, l. 12 ), it is the instrumental singular of परुष्णी. *Cf.* असिक्न्या, वितस्तया, सुषोमया. The *padapâtha*, however, splits it into परुष्णि आ. Our reading of Yâska's Nirukta is also **परुष्णि**, voc. sg.

शुतुद्री, शुद्राविणी, क्षिप्रद्राविण्याशु तुन्नेव द्रवतीति वा। इरावतीं परुष्णीत्याहुः, पर्ववती भास्वती कुटिलगामिनी ।

असिक्न्यशुक्लासिता। सितमिति वर्णनाम, तत्प्रतिषेधोऽसितम् । मरुद्वृधाः सर्वा नद्यो, मरुत एना वर्धयन्ति। वितस्ताविदग्धा। विवृद्धा महाकूला। 5

आर्जीकीयां विपाडित्याहुर्ऋजीकप्रभवा वर्जुगामिनी वा। विपाड्विपाटनाद्वा। विपाशनाद्वा। विप्रापणाद्वा। पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य मुमूर्षतः। तस्माद्विपाडुच्यते, पूर्वमासीदुरुंजिरा। सुषोमा सिन्धुर्यदेनामभिप्रसुवन्ति नद्यः। सिन्धुः स्यन्दनात् ॥

आप आप्नोतेः। तासामेषा भवति ॥ २६ ॥ 10

इमं मे गङ्गे यमुने–इति। हे मरुद्वृधे गङ्गे यमुने सरस्वति शुतुद्रि यूयम् इमं मे मम स्तोमं सचत आसेवध्वं परुष्ण्या सह। मरुद्वृधे आर्जीकीये त्वमपि असिक्न्या वितस्तया सुषोमया च सह आशृणुहि

---

4. The Bi. mss. (क, ख, ग) read मरुद्वृधः. 6. C. D. विपाळित्याहुर्ऋजूकप्रभवा, R. विपाडित्याहुर्ऋजूकप्रभवा, Bi. mss. क, ख, ग read विपालित्याहुर्ऋजीकप्रभवा. 8. C. D. °विपाळुच्यते, R. °विपाडुच्यते, Bi. mss. क, ख, ग read °विपालुच्यते. 10. Bi. J. conclude IX. iii. 5 with भवति. 12. *a. d.* omit मे and सचत. 13. *d.* सुखोमया for सुषोमया.

---

2. **भास्वती**—The three mss. of Bi. क, ख, ग do not read भास्वती, after पर्ववती. Durga also does not read it. The river is *Kuṭila-gâminî*, winding, and that is the sense the word 'parvavatî' has got here. '*Bhâsvatî*' means 'shining' and this sense is not so appropriate in the context.

4. **मरुद्वृधाः**—The Bi. mss. क, ख, ग read **मरुद्वृधः**, which cannot be the nom. plu. of मरुद्वृधा and is therefore grammatically faulty.

12–13. मरुद्वृधे आर्जीकीये—Durga takes *Marudvṛidhâ* to be the same river as the Ârjîkîyâ, but the two are evidently different.

आभिमुख्येन स्थित्वा शृणुहि **इति समस्तार्थः** । एवं सर्वत्र पूर्वं समस्तार्थो वक्तव्य इत्युपप्रदर्शनार्थम् ।

**अथैकपदनिरुक्तम् । गङ्गा, गमनात्** । सा हि विशिष्टं स्थानं गच्छति । गमयति वा प्राणिनो विशिष्टं स्थानमिति गङ्गा । **यमुना, प्रयुवती गच्छति** । प्रकर्षेण मिश्र-
5 यन्त्यन्याभिः नदीभिः स्वान्युदकानि गच्छति । **प्रवियुतं गच्छतीति वा ।** स्तिमितमिव तरङ्गैर्गच्छति । **सरस्वती । सर इत्युदकनाम । तत् कस्मात् । सर्तेः** 'सृ गतौ' इत्यस्य । तेन सरसा विशिष्टेन **तद्वती** । विज्ञायते हि राजसूये सारस्वतीनामपामभिषेकार्थवादः ।

"वरुणस्य वा अभिषिच्यमानस्येन्द्रियं वीर्यमपाक्रमत् तत् त्रेधाभवत् भृगुस्तृतीयम-
10 भवच्छ्रायन्तीयं सरस्वती तृतीयं प्राविशत्" इति ।

**शुतुद्री शुद्राविणी क्षिप्रद्राविणी । शु** इति क्षिप्रनाम । अथ **वा आशु क्षिप्रमसौ तुन्नेव** विद्धेव केनचित् **द्रवति** । आकारलोपः पूर्वपदे । **इरावतीं परुष्णीत्याहुः** । येयमिरावतीति लोके प्रसिद्धा तामिमामेतस्मिन् मन्त्रे मन्त्रार्थविदः परुष्णीत्याहुः । सा कस्मात् । **पर्ववती** । किमुक्तं भवति । **कुटिलगामिनी** इति ।
15 तदस्याः पर्ववत्वं यानि कुटिलानि तानि पर्वाणीव तस्याः तैस्तद्वतीति । **असिक्नी** कस्मात् । सा हि **अशुक्ला असिता** । कथम् । **सितमिति वर्णनाम** । स च पुनः शुक्ल इति प्रसिद्धो लोके । सितासितौ यद् वृष्णौ इति बलदेववासुदेवावधिकृत्योक्तम् । **तत्प्रतिषेधः** तस्य शुक्लस्य प्रतिषेधः **असितम्** कृष्णमित्यर्थः । तस्मात् कृष्णोदका असिक्नी । **मरुद्वृधाः सर्वाः नद्यः । मरुतः एनाः वर्धयन्ति** वर्षेण ।
20 तस्मात् प्रत्येकं नद्यभिधानमनुषज्यते विशेषणत्वेन हे मरुद्वृधे गङ्गे यमुने इत्यादि ।

---

4. *a. d.* प्रगच्छति for गच्छति of *bi. j.* 4–5 *d.* मिश्रयन्ती, *bi. j.* मिश्रयती. 9. *a. d.* अपाक्रामत्, *bi. j.* अपाक्रमत्; *d.* त्रैधा. 10. *a. d. m.* add तृतीयं before सरस्वती as also after it. 11–12. *a.* only omits from क्षिप्रनाम to द्रवति. 15. *a. d. m.* read पर्ववत्व for पर्वत्वं of *bi. j.* 16. *a. d. m.* omit च before पुनः. 18. *a. d. m.* omit तत्प्रतिषेधः. 20. *d.* adds हे मरुद्वृधे again before यमुने.

---

4. यमुना प्रयुवती गच्छति—Durga does not read **इति वा** after **प्रयुवती गच्छति** as in Nirukta text. See page 928, line 15.

7. 'सृ गतौ'—Dhâtup. I. 960; 3. 17.

9–10. वरुणस्य वा अभि°—MS. 4. 3. 9.

**वितस्ता अविदग्धा ।**

"वैदेहको नामाग्निः । स किल नदीः अन्याः निर्ददाह, न ताम्"

इति सामिधेनीब्राह्मणे विज्ञायते । अथवा । **विवृद्धा महाकूला** विस्तीर्णा । **आर्जी-कीयां** लोके **विपाडित्याहुः** । सा कस्मात् । **ऋजीकप्रभवा** ऋजीको नाम पर्वतः तस्मात् प्रभवतीति तद्वितेन । अथ **वा ऋजुगामिनी** सती आर्जीकीया । **विपाट्** 5 **विपाटनाद् वा** । विपाटयत्यसौ भूमिमतिवेगवत्त्वात् गच्छन्तीति । **विपाशनाद् वा** । किमस्यां व्यपाश्यन्त । **पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य मुमूर्षतः** । वसिष्ठः किल ममज्जास्यां मुमूर्षुः पुत्रमरणशोकार्तः पाशैरात्मानं बद्ध्वा । तस्य किल ते पाशा अस्यां **व्यपाश्यन्त** व्यमुच्यन्त उदकेन । ततः प्रभृति विपाट् अभवत् । **पूर्वम् आसीत् उरुंजिरा** नाम सा, उरुजलेत्यर्थः । **विप्रापणाद् वा** उदकानां 10 विपाट् । **सुषोमा सिन्धुः** । सा कस्मात् । **यत् एनाम् अभिप्रसुवन्ति** अभि-गच्छन्ति अन्याः प्रभूताः **नद्यः** । **सिन्धुः** कस्मात् । **स्यन्दनात्** । सा ह्यविच्छेदेन विशेषतः स्यन्दत इति ॥

**आपः** (२१) इति एतत् पदम् । ताः पुनरेताः **आप्नोतेः** । सर्वमाभिराप्यमिति । **तासाम् एषा भवति** ॥ २६ ॥ 15

---

2. *d.* वैदेहको. 3. *bh. j.* महाकुला. 4. *d.* विपाळित्याहुः; *d.* ऋजको नाम पर्वतः. 6. *d.* अतिवेगत्वात्. 7. *a.* व्यपास्यन्त, *d.* विपाश्यन्त; *d.* मुहूर्षतः for मुमूर्षतः. 9. *a. d.* read व्यपास्यन्त, and add सा before विपाट्. 10. *d.* उरंजिरा नाम ? 11. *d.* सुखोमा for सुषोमा of *bh. j.* 14. *a. d.* read आप्त for आप्य.

---

1. वितस्ता—*Cf.* 'तसु उपक्षये' Dhâtup. 4. 106.

3. विज्ञायते—See ŚB. I. iv. 3. 10–11 for the story of the *Vaide-haka agni*.

11. सुषोमा—The writer of the ms. D, *d*, appears to be a Yajur-vedî as he substitutes ख for ष in सुषोमा and also in other places.

14. 'आपः'—Nigh. V. 3. 21.

14. आप आप्नोतेः—Cf. "यदाप्नोत्तस्मादापः" ŚB. VI. i. 1. 9.

" आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महे रणाय चक्षसे ॥ "

आपो हि स्थ सुखभुवस्ता नोऽन्नाय धत्त । महते च नो रणाय रमणीयाय च दर्शनाय ॥

5 ओषधय ओषद्धयन्तीति वौषत्येना धयन्तीति वा । दोषं धयन्तीति वा । तासामेषा भवति ॥ २७ ॥

आपो हि ष्ठा इति । सिन्धुद्वीपस्यार्षम् । हे **आपः**–आपयित्र्यः **स्थ मयोभुवः** मयोभावयित्र्यश्च **सुखभुवः**–सुखभावयित्र्यः याः **ताः** यूयं **नः** अस्मान् **ऊर्जे**–**अन्नाय** यथा वयमन्नं लप्स्याम भोजनाय च नः **दधातन**–धारयत–अनुगृह्णीध्वम् ।
10 किंच । **महे रणाय महते च नो रणाय–रमणीयाय चक्षसे–दर्शनाय ।** श्रुतिस्मृत्युदितसम्यग्दर्शना भूत्वा अन्नप्रयोगे यथा वर्तेमहि तथा जुषध्वं यूयम् इत्येतदाशास्महे ॥

**ओषधयः** (२२) इति एतत् पदम् । ताः पुनः एताः **ओषद् धयन्ति** । यत् किंचिदोषत् शरीरे दहद् रोगजातं भवति क्षयादि तदेता अत्ताः सत्यो धयन्ति पिबन्ति
15 नाशयन्ति । तदेवम् ओषतेः पूर्वपदं धयतेरुत्तरपदं कर्तरि कारके । **ओषति एना धयन्ति इति वा ।** ओषति कस्मिंश्चिदुदरादावङ्गे एना धयन्ति पिबन्ति प्राणिनो

---

3. C. D. आपो हि स्थ सुखभुव°, Bi. J. आपो हि स्थः सुखभुव°. 5. The mss. of Bi. (क, ख, ग) read ओषं धयन्तीति वोपत्येना. 6. Bi. J. conclude IX. iii. 6 with भवति. 8. *a. d. m.* omit च सुखभुवः; *a. d. m.* omit नः and read अस्मान् for अस्माकं of *bi. j.* 9. *a. d. m.* omit नः; *m.* adds तथा before दधातन and reads अनुगृह्णीध्वम्, *bi. j.* अनुगृह्णीध्वम्? 13. *d.* ओषधयन्ति for ओषद् धयन्ति of *bi. j.* 14. *d.* आत्ताः for अत्ताः. 15. *a. d.* एवं for तदेवं. 16. *a. m.* omit ओषति etc. to कारके (p. 933, l. 1); *d.* उषति कस्मिंश्चित् for ओषति कस्मिंश्चित्.

---

1–2. RS. X. 9. 1; AV. 1. 5. 1; SV. 2. 1187; VS. 11. 50, 36. 14.

3. धत्त—Durga does not repeat धत्त in his commentary.

4. The Bi. mss. (क, ख, ग) do not read the superfluous च after रमणीयाय.

13. 'ओषधयः'—Nigh. V. 3. 22.

दाहोपशमनाय, तावेव धातू कर्मणि कारके । **दोषं धयन्तीति वा** । यः कश्चिदुपजायते दोषो वातादिकृतः शरीरे, तमेता धयन्ति । इति दोषशब्दात्पूर्वपदं धयतेरेवोत्तरपदं कर्तर्येव कारके । **तासाम्** ओषधीनाम् **एषा** ऋक् **भवति** ॥ २७ ॥

**"या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।**
**मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥"** 5

**या ओषधयः पूर्वा जाता देवेभ्यस्त्रीणि युगानि पुरा । मन्ये नु तद्ब-भ्रूणामहम् । बभ्रुवर्णानां हरणानां भरणानामिति वा । शतं धामानि सप्त च । धामानि त्रयाणि भवन्ति, स्थानानि नामानि जन्मानीति । जन्मान्यत्राभिप्रेतानि । सप्त शतं पुरुषस्य मर्मणां, तेष्वेना दधतीति वा ॥**

**रात्रिर्व्याख्याता । तस्या एषा भवति ॥ २८ ॥** 10

**या ओषधीः पूर्वा जाताः** इति । ओषधिसूक्ते प्रथमैव । अग्निचयने क्षेत्रमनेन मन्त्रेण ग्राम्यारण्याभिरुप्यते । **याः** एताः **ओषधयः पूर्वाः** प्रथमाः **जाताः** । कुतः । **देवेभ्यः** । न तावद् देवा उत्पद्यन्ते । अथैता एव पूर्वमुत्पद्यन्ते । कियति काले । **त्रियुगं पुरा** । कलिद्वापरत्रेताभ्यः पूर्वम् आदिकल्पे आद्ये कृतयुगे । देवानामपि ह्यन्नमनपेक्ष्य

1. *d.* कर्मकारके; *a.* ओषशेषं धयन्तीति, *d.* दोषयन्तीति वा for दोषं धयन्तीति वा. 3. *a. d. m.* omit ऋक्. 7. The Bi. mss. (क, ख, ग) read भरणानां हरणानामिति वा. 7–8. Bi. mss. ङ, च, C. D. and R. read शतं धामानि सप्त चेति. 9. Bi. mss. क, ख, ग read स्थानान्यत्राभिप्रेतानि for जन्मान्यत्राभिप्रेतानि. 10. Bi. J. conclude IX. iii. 7 with भवति. 12. *a. d.* add ओषधिभिः before उप्यते; *a. d.* read उप्यते for ऊप्यते of *bi.*; *a. d. m.* प्रथमजाताः for प्रथमाः जाताः of *bi. j.*

4–5. RS. X. 97. 1; VS. 12. 75.

6. तत्—Durga does not notice **तत्** before बभ्रूणां.

8. सप्त च—The mss. ङ, च of Bi. add **इति**, after सप्त च. Bi. J. omit it.

8. त्रयाणि—This should be rather त्रीणि as the number and not the combination is meant.

10. रात्रिर्व्याख्याता—Nir. II. 18.

12. उप्यते—See MS. 2. 7. 13.

जीवनहेतुस्थितिर्नास्तीति पूर्वमन्नमुत्पद्यते पश्चाद् देवा इति । किं तासाम् इति । **मनै नु बभ्रूणामहं शतं धामानि सप्त च** । तासाम् **अहं बभ्रूणां बभ्रुवर्णानाम्** । ओषधयः स्वभावतः सर्वा एव पच्यमाना बभ्रुवर्णाः कपिला. संपद्यन्ते । **मनै** जाने । **शतं धामानि सप्त च** । सप्ताधिकं शतमहं तासां यथावज्जाने ।

5 अथवा बभ्रूणामिति वर्णव्यापत्त्या **हरणानाम्** इति । ता हि क्षुदादि हरन्ति । **भरणानाम् इति वा** । भर्त्र्यस्ताः सर्वस्य भूतग्रामस्य वा । ओषधयः प्रथमा जाताः **देवेभ्यस्त्रीणि युगानि पुरा मन्ये** तद् बभ्रूणामहं बभ्रुवर्णानां हरणानामिति वा । **शतं धामानि सप्त च** व्याख्यातमेतत् । **धामानि त्रयाणि भवन्ति,— स्थानानि, नामानि, जन्मानि** इति । इह तु **जन्मानि अभिप्रेतानि** ।

10 सप्तशतम् ओषधिजातयः एतस्मिन् मन्त्रे अभिप्रेताः । अथवा **सप्तशतं पुरुषस्य मर्मणां, तेषु एना दधाति इति वा** । अस्मिन् पक्षे धामानि स्थानानि ।

**रात्रिः** (२३) इति एतत् पदम् । तत् पुनरभिधानतोऽभिधेयतश्च व्याख्यात 'रातेर्दानकर्मणः' इति । **तस्याः एषा** स्तुतिः **भवति** ॥ २८ ॥

" आ रात्रि पार्थिवं रजः पितुरप्रायि धामभिः ।

15 दिवः सदांसि बृहती वि तिष्ठस आ त्वेषं वर्तते तमः ॥"

**आपूपुरस्त्वं रात्रि पार्थिवं रजः, स्थानैर्मध्यमस्य । दिवः सदांसि । बृहती महती । वितिष्ठस आवर्तते त्वेषं तमो रजः ॥**

**अरण्यान्यरण्यस्य पत्नी । अरण्यमपार्णं ग्रामात् । अरमणं भवतीति वा । तस्या एषा भवति ॥ २९ ॥**

20 **आ रात्रि पार्थिवं रजः** इति । कुशिकस्यार्षं रात्र्या वा । हे **रात्रि** या **त्वम् आपूपुरः पार्थिवं रजः** । पृथिवीलोकम् आपूरयसि । किं केवलमेतदेव । न इत्युच्यते ।

6–8. *a. d. m.* omit from ओषधयः etc. to व्याख्यातमेतत् and then read स्थानानि नामानि जन्मानि धामानि त्रयाणि भवन्ति । इह तु etc. 9. *m.* omits इति after जन्मानि. 12. *m.* तत्पुनरेतदभिधानतो. 13. *a. d.* omit स्तुतिः. 14. D. पितुरः प्रायु धामभिः ? 19. Bi. J. conclude IX. iii. 8 with भवति. 21. *a. d.* omit इति after न.

12. 'रात्रिः'—Nigh. V. 3. 23.

12. व्याख्यातम्—Nir. II. 18.

14–15. Rig. Khailika Sûkta, 25, AV. 19. 47. 1; VS. 34. 32.

**पितुः धामभिः । मध्यमस्य स्थानैः** सह । सहान्तरिक्षेण । तदपि ह्यापूर्यते तमसा । किमेतावदेव । न इत्युच्यते । किं तर्हि । **दिवः** द्युलोकस्यापि यानि **सदांसि** सदनानि । येषु हि द्युलोकवासिनः सदनेषु स्थानेषु सीदन्ति, तान्यपि । **बृहती महती** यस्मात् त्वं तस्माद् दूरेऽपि वर्तमाना **वितिष्ठसे** । विष्टभ्य तिष्ठसि । न केवलं विष्टभ्यैव तिष्ठसि । कि तर्हि । आपूर्य द्युलोकमपि तत्पूरणातिशिष्टं **तमः त्वेषं** महत् पुनरिममेव लोकं प्रति **आवर्तते** यस्याः तव सा त्वमस्माकं सर्वदा शिवा भव इत्येतदाशास्महे ॥ 5

**अरण्यानी** (२४) इति एतत्पदम् । सा पुनः **अरण्यस्य पत्नी** पालयित्री देवता । अथ अरण्यं कस्मात् । **अरण्यम् अपार्णं ग्रामात्** । तद्धि ग्रामादपार्णमपगतं भवति । 'ऋ गतौ' इत्यस्य । **अरमणं भवति इति वा** । रमेः प्रतिषेधपूर्वस्य । न ह्यरण्ये रतिर्भवति । **तस्याः एषा भवति** स्तुतिः ॥ २९ ॥ 10

**"अरण्यान्यरण्यान्यसौ या प्रेव नश्यसि ।**
**कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दतीँ३ ॥"**

**अरण्यानीत्येनामामन्त्रयते । यासावरण्यानि वनानि पराचीव नश्यसि । कथं ग्रामं न पृच्छसि । न त्वा भीर्विन्दतीवेति । इवः परिभयार्थे वा ॥** 15

**श्रद्धा श्रद्धानात् । तस्या एषा भवति ॥ ३० ॥**

---

1. *a. d.* सह्यन्तरिक्षेण ? for सहान्त° of *bi. j.*; *a. d.* read आपूर्यते तमसा, *bi. m.* आपूर्यसे त°. 3. *a. d.* omit हि, and स्थानेषु. 4. *bi. j.* विष्टभ्य तिष्ठसि, *m.* वि° तिष्ठति. 5. *a. d.* आयूर्य for आपूर्य. 6. *a.* concludes section 29 after आशास्महे. 8. *a. d.* omit अरण्यं अपार्णं ग्रामात्. 9–10. *m.* omits from 'ऋ गतौ' इत्यस्य to भवति स्तुतिः (the end of section 29). 9. *d.* अरमणः for अरमणं. 10. *m.* omits भवति after रतिः; *a. d. m.* omit स्तुतिः; *bi. j.* conclude section 29 and IX. iii. 8 with भवति स्तुतिः. 16. Bi. J. conclude IX. iii. 9 with भवति.

---

7. 'अरण्यानी'—Nigh. V. 3. 24. See also Pâṇini 4. 1. 49.
9. 'ऋ गतौ'—Dhâtup. 1. 961; 3. 16.
11–12. RS. X. 146. 1.

**अरण्यान्यरण्यानि** इति । ऐरम्मदस्य देवमुनेरार्षम् । संबुद्धावेकवचनं पूर्वं, द्वितीयाबहुवचनमुत्तरम् । उत्पन्नदिङ्मोहो मन्त्रदृग् अरण्ये भीतोऽरण्याधिदेवतामरण्यानी ब्रवीति । अहं तावदेतस्मिन्नरण्ये निरमणे भीतः । कथं त्वं न बिभेषि इति भीषयमाण **इव** । हे **अरण्यानि** कथं त्वम् **अरण्यानि वनानि** प्रति केवलं **प्रेव पराचीव**
5 पराङ्मुखीव अनावर्तमाना **नश्यसि** । **असौ** असाविति दृश्यमाना इव । यतो ब्रवीमि । **कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दती ईं** । अथ **वा इवः परिभयार्थे** । न त्वमीषदपि बिभेषीति परिः ईषदर्थः । तद्यथा । परिमधुरं, पर्याप्तमिति ॥

**श्रद्धा** (२५) इति एतत्पदम् । अत्र **श्रत्** इति सत्यनाम पूर्वपदम् । तत् सत्यमस्यां धीयत इति श्रद्धा । धर्मार्थकाममोक्षेषु अविपर्ययेणैवमेतादिति या बुद्धिरुत्पद्यते
10 तदधिदेवता भावाख्या श्रद्धेत्युच्यते । सा पुनः आग्नेयं सर्वं प्रकाशमिति अग्निरेव । **तस्या एषा भवति** स्तुतिः ॥ ३० ॥

**"श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः ।**
**श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ॥"**

**श्रद्धयाग्निः साधु समिध्यते । श्रद्धया हविः साधु हूयते । श्रद्धां**
15 **भगस्य भागधेयस्य मूर्धनि प्रधानाङ्गे वचनेनावेदयामः ॥**

**पृथिवी व्याख्याता । तस्या एषा भवति ॥ ३१ ॥**

---

1. *a. d.* omit ऐरंमदस्य and *a.* only reads देवसुनेः for देवमुनेः. 3. *d.* reads अहं तावदेतस्मिन्नरमणे भीतः. 4. *a. d. m.* त्वं कथं, *bi. j.* कथं त्वं; *a. d. m.* अरण्यान्येव वनानि; *d.* प्रैव for प्रेव, and पराच्येव for पराचीव of *bi. j.* 5. *a. m.* पराङ्मुखैवानावर्तमाना नश्यसि (*d.* नश्यासि). 6. *a. d. m.* कथा ग्रामं न पृच्छासि । कथ किमिति ग्रामं न पृच्छसि न त्वा भीर्मामिव विन्दत्यथवा इवः; *bi. j.* कथा ग्रामं etc. as text. 7. *a. d.* read पर्यन्तमिति for पर्याप्तमिति and here *a.* concludes sect. 30. 11. *a. d. m.* omit स्तुतिः; *bi. j.* conclude section 30 and IX. iii. 9 with भवति स्तुतिः. 16. Bi. J. conclude IX. iii. 10 with भवति.

---

8. 'श्रद्धा'—Nigh. V. 3. 25.
12-13. RS. X. 151. 1.

**श्रद्धयाग्निः समिध्यते** इति । श्रद्धायाः कामायन्या आर्षम् । य एव **अग्निः श्रद्धया** उपेतः श्रद्धयैवास्तिक्यबुद्धिमालम्ब्य **समिध्यते** कर्मणि स एव **साधु** शोभनं समिध्यते । इतरो हि समिद्धोऽप्यसमिद्ध एव, अश्रद्धासमिद्धाग्निकर्मणः फलाभावात् । एवमेव **श्रद्धया हूयते हविः** । यदेव **श्रद्धया** हूयते **हविः** तदेव **साधु हूयते** अन्यस्याफलत्वात् । उक्तं च । 'नाश्रद्दधानाय हविर्जुषन्ति देवाः'—इति । एवं चेत् 5
**श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि । भगस्य भागधेयस्य** धर्मस्य **मूर्धनि प्रधानाङ्गे** । मूर्धा शिरः । प्रधानमिदमङ्गं धर्मस्य या श्रद्धा । तदभावे धर्माभावात् । अपि च । **वचसा** एव **वचनेन** एव मन्त्रगतेन 'अश्रद्धामनृते दध्याच्छ्रद्धां सत्ये प्रजापतिः'—इत्यनेनैव तदुद्धाव्य शिरः प्रकाशम् **वेदयामसि आवेदयामः** आघोषयामो नाश्रद्दधानस्य धर्म इति ॥ 10

**पृथिवी** (२६) **व्याख्याता** । 'अथ वै दर्शनेन पृथुः' इत्यत्र । **तस्या एषा भवति** ॥ ३१ ॥

**"स्योना पृथिवि भवानृक्षरा निवेशनी ।**
**यच्छा नः शर्म सप्रथः ॥"**

---

1. *m.* श्रद्धायाः कामायिन्या. 2. *d.* श्रद्धैवास्तिक्यबुद्धिमालंब्य for श्रद्धयैवास्तिक्य° of *bu. j.* 3-4. *m.* omits from अश्रद्धासमिद्धाग्निकर्मणः to यदेव. 7. *a. d. m.* omit प्रधानाङ्गे. 8. *a. d.* omit वचनेनैव. 9. *a. d.* इत्यनेनैतद्धाव्य, *m.* इत्यनेनैतदुद्धाव्य; *a.* reads एतद्धाव्य for तदुद्धाव्य?; *a. d. m.* omit वेदयामसि. 10. *a.* concludes sec. 31 with धर्म इति. 11. *a. d.* अपि for अथ. 12. *bu. j.* conclude section 31 and IX. iii. 10 with भवति.

---

5. उक्तं च—The quotation is not traced.

8-9. अश्रद्धामनृते etc.—The quotation is not traced.

11. 'पृथिवी'—Nigh. V. 3. 26.

11. पृथिवी व्याख्याता—Nir. I. 13, 11.

13-14. RS. I. 22. 15; AV. 18. 2. 19; VS. 35. 21; MS. 4. 12. 2: 180, 16-17; KS. 38. 13; TA. 10 1. 10; ApŚ. 16. 17. 17; SMB. 2. 2. 7.

**सुखा नः पृथिवि भवानृक्षरा निवेशनी । ऋक्षरः कण्टक ऋच्छतेः । कण्टकः कन्तपो वा, कृन्ततेर्वा, कण्टतेर्वा स्याद्गतिकर्मणः । उद्गततमो भवति । यच्छ नः शर्म । यच्छन्तु शरणं सर्वतः पृथु ॥**

**अप्वा व्याख्याता । तस्या एषा भवति ॥ ३२ ॥**

5 **स्योना पृथिवि भव** इति । मेधातिथेरार्षम् । हिरण्यनाशप्रायश्चित्तेष्ट्यां भौमस्यैककपालस्य पुरोऽनुवाक्या । हे **पृथिवि स्योना–सुखा** त्वमस्माकं **भव** । कथम् । **अनृक्षरा निवेशनी** । **अनृक्षरा**–निष्कण्टका **निवेशनी**–निवासयोग्या । निविष्टानां चास्माकं **यच्छ**–देहि **शर्म**–सुखं **सप्रथः–सर्वतः पृथु**–विस्तीर्णमिति ।

**ऋक्षरः–कण्टकः ऋच्छतेः । कण्टकः कंतपः वा, कृन्ततेः वा,**
10 **कण्टतेः वा स्यात् गतिकर्मणः । उद्गततमो भवति ।** कमहं तापयामीति एवमर्थमुद्गतः कण्टकः । कण्टतेर्वा । स ह्युद्गततमो भवति वृक्षात् ॥

**अप्वा** (२७) **व्याख्याता ।** 'यदेनया विद्धोऽपवीयते व्याधिर्वा भय वा' इत्यत्र व्याख्या । **तस्या एषा भवति** ॥ ३२ ॥

**" अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।**
15 **अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥"**

---

2. The mss. (क, ख, ग) of Bi. read उद्गततरो. 3. Only the Mss. क, ख, ग of Bi. read यच्छन्तु. 4. Bi. J. conclude IX. iii. 11 with भवति. 6. *a. d.* द्यावापृथिवि for पृथिवि. 7. *a. d.* omit अनृक्षरा निवेशनी. 8. *a. d. m.* omit सप्रथः; *a. d. m.* add सर्वतः again before विस्तीर्ण. 9–10. *a. d.* read ऋक्षतेः for ऋच्छतेः and omit from कण्टकः etc. to भवति. 11. *a.* only reads simply कंटतेर्वा भयं वेत्यत्र तस्या एषा भवति । and concludes sect. 32, here. 12. *d. m.* add अप्वा before यदेनया; *d.* यदेतया, *bi. j.* यदेनया. 13. *m.* व्याख्याता for व्याख्या, *d.* omits व्याख्या; *bi. j.* conclude section 32 and IX. iii. 11 with भवति.

---

2. उद्गततमो—The mss. (क, ख, ग) of Bi. read उद्गततरो.

3. Mss. (others than क, ख, ग) of Bi. and R. do not read यच्छन्तु. Durga also omits it.

6. पुरोऽनुवाक्या—See MS. 2. 2. 7.

12. 'अप्वा'—Nigh. V. 3. 27.

12. अप्वा व्याख्याता—Nir. VI. 12.

14–15. RS. X. 103. 12; SV. 2. 1211; VS. 17. 44; AV. 3. 2. 5.

**अमीषां चित्तानि प्रज्ञानानि प्रतिलोभयमाना गृहाणाङ्गान्यप्वे । परेहि । अभिप्रेहि । निर्दहैषां हृदयानि शोकैः अन्धेनामित्रास्तमसा संसेव्यन्ताम् ।**

**अग्नाय्यग्नेः पत्नी । तस्या एषा भवति ॥ ३३ ॥**

**अमीषां चित्तम्** इति । अप्रतिरथस्यार्षम् । हे **अप्वे अमीषाम्** अस्मच्छत्रूणां 5
**चित्तम्-चित्तानि**-मनांसि **प्रतिलोभयन्ती प्रतिलोभयमाना** प्रत्येकं लोभयन्ती **गृहाण अङ्गानि** । सर्वगात्राणि आविश । त्वयैते आविष्टसर्वगात्राः साध्वसिनः उत्पन्नवेपथवः संमूढाः अप्रतिपक्षाः सन्तु । **परेहि**-परागच्छ एतान् । अपि च । यावच्च प्रत्यवस्थितास्तावदेकैकं क्षिप्रम् **अभिप्रेहि** । अभिप्रगम्य च **निर्दह एषां हृत्-हृदयानि सुशोकैः** । त्वया एते निर्दग्धहृदयाः **अमित्राः** अस्मदमित्राः **अन्धेन** 10
**तमसा सचन्ताम्-संसेव्यन्ताम्** इत्येतदाशास्महे ॥

**अग्नायी** (२८) **अग्नेः पत्नी । तस्या एषा भवति** ॥ ३३ ॥

" **इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये ।**
**अग्नायीं सोमपीतये ॥** "

**इति सा निगदव्याख्याता ॥ ३४ ॥**　　15

4. Bi. J. conclude IX. iii. 12 with भवति. 5-6. *a. d. m.* omit चित्तं after शत्रूणां. 6. *a d. m.* omit प्रतिलोभयमाना, *m.* alone adds प्रत्येकं लोभयमाना after प्रत्येकं लोभयन्ती. 9. *bi. j.* अभिप्रगत्य for अभिप्रगम्य of *a. d.*; *a. d. m.* omit हृत्. 10. *a. d. m.* शोकैः for सुशोकैः of *bi. j.*; *a. d. m.* omit अमित्राः before अस्मद्. 11. *a. d.* omit सचन्ताम्. 15. Bi. J. conclude IX. iii. 13 with निगदव्याख्याता ॥ १३ (३४) ॥ Here ends the *third pâda* of the ninth adhyâya—**इति नवमाध्यायस्य तृतीयः पादः ॥ ९, ३ ॥**

1. The three mss. of Bi. (क, ख, ग) do not read **प्रज्ञानानि.** Durga also does not explain it.

2. **हृदयानि शोकैः**—Some mss. of Durga read **हृदयानि सुशोकैः,** others as हृदयानि शोकैः.

12. ' अग्नायी '—Nigh. V. 3. 28; Pâṇini 4. 1. 37.

13-14 RS. I. 22. 12.

**इहेन्द्राणीमुपह्वये** इति। **इति सा निगदव्याख्याता। इह** कर्मणि **अग्नायीम् उपह्वये सोमपीतये**–सोमपानाय, आत्मनश्च **स्वस्तये। इन्द्राणीम्।** अपि च। **वरुणानीम्।** असाधारण्येन। इन्द्राणीं च वरुणानीं च अग्नायीं च इह कर्मणि उपह्वये सोमपानाय स्वस्तये च इत्येवं सति **तस्या एषा भवति** इति भाष्यकार-
5 वचनं नोपपद्यते। सोमपानसंबन्धात् मध्यमा इति चेत् नैतत्। अग्निरपि हि सोमपान-संबन्धे उक्तः—"सोमं पिब मन्दसानो गणश्रिभिः" इति, तस्मादुपपद्यत इति ॥३४॥

**अथातोऽष्टौ द्वन्द्वानि। उलूखलमुसले। उलूखलं व्याख्यातम्। मुसलं मुहुः सरम्। तयोरेषा भवति ॥ ३५ ॥**

**अथातोऽष्टौ द्वन्द्वानि** इति। अश्वादेः पूर्वस्माद् वर्गात् विलक्षणोऽयमपरो
10 द्वन्द्ववर्ग इति पृथगधिकारवचनम्। **अथातः**शब्दावुक्तार्थौ। **अष्टा**विति निर्देशतोऽपि सिद्धेऽष्टत्वे नियमार्थमष्टग्रहणम्। उषासानक्ता, दैव्या होतारा, इति द्वन्द्वदर्शनात्

1–3. *m.* reads as इहेन्द्राणीम् अपि च वरुणानीम् *i.e.* omits from इन्द्राणीमुपह्वये इति to स्वस्तये. 1. *a. d.* omit इति सा निगदव्याख्याता. 2. *a. d.* omit सोमपीतये. 3. *d.* reads वरुणानीमसाधारण्येनेन्द्राणीं च etc. 2–3. *bi. j.* end the para with अपि च वरुणानीम्। 4–5. *a. d.* भाष्यवचनं for भाष्यकारवचनं of *bi. j.* 5. *d.* omits हि; *m.* अग्नेरपि for अग्निरपि of *bi.* 6. *a. d. m.* conclude as **चतुर्दशस्य तृतीयः पादः**, *bi. j.* as इति ऋज्वर्थायां निरुक्तवृत्तौ चतुर्दशाध्यायस्य (नवमाध्यायस्य) तृतीयः पादः ॥ ९, ३ ॥ 7. Bi. J. begin the चतुर्थः पादः the *fourth pâda* of the ninth adhyâya, with अथातो; MSS. क, ख, ग of Bi. read °द्वन्द्वान्युलूखलं व्याख्यातम्. 8. Bi. J. conclude IX. iv. 1 with भवति. 10. *d.* °शब्दौ व्यक्तार्थौ. 10–11. *a.* °सिद्धेष्टत्वे नियमार्थ°, *a. d. m.* अष्टाविति निर्देशतोपि सिद्धेऽष्टत्वे नियमार्थमष्टग्रहणं, *bi. j.* अष्टावित्यनिर्देशतोऽपि सिद्धेऽष्टत्वनियमार्थ°, *m.* °द्धेऽष्टत्वनियमार्थ°.

6. उक्तः—Nir. VIII. 2.

7. 'उलूखलमुसले'—Nigh. V. 3. 29.

7. The mss. क, ख, ग of Bi. omit उलूखलमुसले and read on as °**द्वन्द्वानि। उलूखलं व्याख्यातम्।**

7. उलूखलं व्याख्यातम्—Nir. IX. 20.

10. उक्तार्थौ—See Nir. VII. 1.

अयुक्तमिति चेत् न । तयोराप्रीत्वसामान्येन तत्र प्रथमं समाम्नातत्वात् । इह च पुनः समाम्नाने द्विरुक्ततादोषप्रसङ्गः । मित्रावरुणादीनामपि द्वन्द्वसामान्यादिह प्रसङ्गः इति चेत् न । तेषां पृथगपि स्तुत्युपपत्तेः । एवं सति उलूखलमुसलयोः द्यावापृथिव्योश्चेह समाम्नानस्याप्रसङ्गः । केवलयोः स्तुत्युपपत्तेः । न । मुसलस्य दिवश्च पृथक्स्तुत्यभावात् । मित्रावरुणादीनां तु सर्वेषां पृथक् स्तुतयः सन्ति । तस्मादसमाम्नानम् । अश्विनोरिह 5 द्वन्द्वसामान्यात् समाम्नानं प्राप्तमिति चेत् । न । उषःप्रभृतीनामुषसः कालमध्ये । तेषां च समाम्नानेनेहातिसंकरप्रसङ्गात् । शुनासीरयोः स्थानान्यत्वात् इहासमाम्नानम् इति चेत् न । द्वन्द्वसामान्यात् पृथिव्यर्थत्वाच्च संभोगाभिप्रायेण च तत्स्तुतेः । "तेनेमामुपसिञ्चतम्" इति । द्यावापृथिव्योः प्रथमं समाम्नानं देवताभावादिह प्राप्तमिति चेत् । न । दिवः पृथिव्यायतनत्वाभावात् द्वन्द्वप्रसङ्गेन चेह दिवः समाम्नानात् । द्यावापृथिव्यौ, शुनासीरौ इति 10 देवता अपेक्ष्य द्वन्द्वमध्ये प्रथमागामित्वस्यावचनम् । उलूखलमुसलयोर्द्रव्यत्वात् प्रथमं समाम्नानम् । तयोः पृथिव्यायतनस्य निरुपचारप्रसिद्धेः । प्रचुरत्वाच्च । द्वन्द्वयोः तयोः **उलूखलं व्याख्यातम्** उरुकरम् इत्येवमादिना । **मुसलं मुहुः सरम्** । मुसलं कस्मात् । तद्धि मुहुर्मुहुः सरति व्रीह्यादिषु । **तयोः एषा भवति** स्तुतिः ॥ ३५ ॥

**"आयजी वाजसातमा ता ह्यु१च्चा विजर्भृतः ।** 15
**हरी इवान्धांसि बप्सता ॥"**

---

1. *a. d.* तत् for तत्र ?. 2. *d.* समाम्नाते for °ने. 4. *a. d. m.* read न before मुसलस्य, *bi. j.* do not have it. 6. *d.* adds समाम्नात [ नं ? ] before प्राप्त, *bi. j.* omit it, *m.* द्वन्द्वसामान्यात्समाम्नानं तमिति. 7. *a.* only reads शुनासीरस्थानान्यत्वात् etc. ?; *a. d.* omit न ?. 11. *a. d. m.* देवता अपेक्ष्य, *bi. j.* देवतामपेक्ष्य; *a. d.* °अवचनम् । उलू°, *bi. j m.* °स्यावचने । उलू°. 12 *d.* पृथिव्यायतनस्य, *bi. j. m.* पृथिव्यायतनत्वस्य; *m.* adds उलूखलं व्याख्यातं after प्रचुरत्वाच्च; *a. d.* omit द्वन्द्वयोः; *m.* तयोर्द्वन्द्वयोः for द्वन्द्वयोः तयोः of *bi. j.* 13. *a. d.* omit मुसलं मुहुः सरं. 13-14. *m.* adds तयोरेषा भवति before मुसलं कस्मात्. 14. *a. d.* व्रीह्यादि for व्रीह्यादिषु ?; *a. d. m.* omit स्तुतिः. 16. R. अन्धांसि.

---

1. समाम्नातत्वात्—Nigh. V. 2.
8. तेनेमा°—RS. IV. 57. 5.
13. उलूखलं व्याख्यातम्—Nir. IX. 20.
15-16. RS. I. 28. 7.

**आयष्टव्ये अन्नानां संभक्ततमे ते ह्युच्चैर्विह्रियेते हरी इवान्नानि भुञ्जाने ॥**

**हविर्धाने हविषां निधाने । तयोरेषा भवति ॥ ३६ ॥**

**आयजी वाजसातमा** इति । आभिमुख्येन मर्यादया वा **यष्टव्ये** पूज्ये,
5 **वाजसातमे अन्नानां संभक्ततमे उच्चा विजभृतः उच्चैर्विह्रियेते** । उलूखलमुच्छ्रीयते च । अवहननाय मुसलमुद्यम्यते । एतदुच्चैर्विहरणम् । ते एते नित्यम् अस्माकं गृहे **हरी** अश्वौ **इव** नित्यमविच्छेदेन **अन्धांसि–अन्नानि बप्सता–भुञ्जाने** संस्कारकत्वेन स्याताम् इत्येतदाशास्महे ॥

**हविर्धाने** (३०) **हविषां निधाने** । सोमास्तयोर्निधीयन्ते । **तयोः एषा**
10 **भवति** ॥ ३६ ॥

**" आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः ।**
**इहाद्य सोमपीतये ॥ "**

**आसीदन्तु वामुपस्थमुपस्थानम्, अद्रोग्धव्ये इति वा, यज्ञिया देवा यज्ञसंपादिन इहाद्य सोमपानाय ॥**

15 **द्यावापृथिव्यौ व्याख्याते । तयोरेषा भवति ॥ ३७ ॥**

---

3. Bi. J. conclude IX. iv. 2 with भवति. 6. *d. m.* omit च; *a.* उद्यम्यमाने, *d.* उद्यम्यने. 7. *a. d. m.* गृहेषु for गृहे; *a. d. m.* omit अधांसि; *d.* बप्सता भुञ्जाते, *m.* वप्सतो भुञ्जाने. 8. After आशास्महे, *bi. j.* read आयष्टव्ये अन्नानां संभक्ततमे ते ह्युच्चैर्विह्रियेते हरी इवान्नानि भुञ्जाने । गतार्थमेतत् ॥, *a. d. m.* omit this. We also do not read these lines as they are not wanted. 9. *m.* सोमस्तयोर्निधियते. 9–10. *m.* adds तयोरेषा स्तुतिर्भवति, after तयोः एषा भवति. 13–14. Bi. mss. ङ, च and R. read आसीदन्तु वामुपस्थमुपस्थानमद्रोग्धव्ये इति वा यज्ञिया देवा; Bi. आसीदन्तु वामुपस्थ उपस्थानं यज्ञिया देवा, J. आसीदन्तु वामुपस्थ उपस्थाने यज्ञिया देवा. 15. Bi. J. conclude IX. iv. 3 with भवति.

---

9. ' हविर्धाने '—Nigh. V. 3. 30.

11–12. RS. II. 41. 21.

13. Durga does not repeat उपस्थं in his commentary.

13. Bi. mss. ङ, च and R. read the words **अद्रोग्धव्ये इति वा** before **यज्ञिया देवा,** but Bi. J. do not have them.

**आ वामुपस्थमद्रुहा** इति । गृत्समदस्यार्षम् । द्यावा नः पृथिवी इति च । हविर्धानप्रवर्तने विनियोगः । हे हविर्धाने **अद्रुहा अद्रोग्धव्ये** युवामुच्येथे । यत्र युवामुपगम्य स्थिते तत् **वाम् उपस्थानं यज्ञियाः यज्ञसंपादिनः देवाः इह** एतस्मिन् कर्मणि **अद्य** उपगम्य **सीदन्तु** निषीदन्तु **सोमपीतये–सोमपानाय** इत्येतदाशास्महे ॥ 5

**द्यावापृथिव्यौ (३१) व्याख्याते ।** द्यौश्च पृथिवी च इत्येते पदे व्याख्याते । **तयोः एषा स्तुतिः भवति** ॥ ३७ ॥

**" द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् ।**
**यज्ञं देवेषु यच्छताम् ॥ "**

**द्यावापृथिव्यौ न इमं साधनमद्य दिविस्पृशं यज्ञं देवेषु नियच्छताम् ॥** 10

**विपाट्छुतुद्र्यौ व्याख्याते । तयोरेषा भवति ॥ ३८ ॥**

**द्यावा नः पृथिवी** इति । **द्यावापृथिवी–द्यावापृथिव्यौ नः** अस्माकं **सिध्रं–साधनम् इमं यज्ञं** योयमस्मान् साधयति **अद्य** एतस्मिन् अहनि वर्तमानं

---

2. *a. d.* हविर्द्धाने प्रवर्तते विनियोगः. 3. *a. d. m.* तत् वाम् उपस्थानं, *bi. j.* तत् वाम् उपस्थ उपस्थाने. 4. *a. d. m.* omit निषीदन्तु सोमपीतये. 5. After आशास्महे, *bi. j.* read आसीदन्तु वामुपस्थ उपस्थाने यज्ञिया देवा यज्ञसंपादिन इहाद्य सोमपानाय । वर्णितमेतत् ॥, *a. d. m.* do not have this. 6. *m.* adds तयोरेषा भवति after व्याख्याते. 7. *a. d.* omit स्तुतिः. 12. Bi. J. conclude IX. iv. 4 with भवति. 13–14. *d. m.* read the *pratīka* up to °इमं, *bi. j.* read द्यावा नः पृथिवी only; *a. d. m.* omit द्यावापृथिवी and नः. 14. *d. m.* योऽयं, *bi. j.* सोऽयं.

---

1. द्यावा नः पृथिवी—See the next section, Nir. IX. 38.
2. विनियोगः—MS. 3. 8. 7; Mâna. Śrau. 2. 2. 2. 26.
6. 'द्यावापृथिव्यौ'—Nigh. V. 3. 31.
6. पदे व्याख्याते—Nir. I. 14.
8–9. RS. II. 41. 20.

**दिविस्पृशं** द्यां यः स्पृशति–आपूरयति तमेवंगुणं **यज्ञं देवेषु यच्छताम्–नियच्छताम्** देवेभ्यो दत्तम् इत्येतदाशास्महे ॥

**विपाट्छुतुद्र्यौ** (३२) **व्याख्याते** । 'विपाट् विपाटनाद्वा' इत्यत्र विपाट् व्याख्याता । 'शुतुद्री–शुद्राविणी' इत्यत्र शुतुद्री । 'तद् यद् द्विवदुपरिष्टात् तद् 5 व्याख्यास्यामः' इति एतत् । **तयोः एषा स्तुतिः भवति** ॥ ३८ ॥

**"प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने ।**
**गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते ॥"**

**पर्वतानामुपस्थादुपस्थानात् । उशत्यौ कामयमाने । अश्वे इव विमुक्ते इति वा । विषण्णे इति वा । हासमाने । हासतिः स्पर्धायाम् । 10 हर्षमाणे वा । गावाविव शुभ्रे शोभने मातरौ संरिहाणे विपाट्छुतुद्र्यौ पयसा प्रजवेते ।**

1. *d. m.* आपूरयति, *bi. j.* पूरयति; *d.* तमेवंगुणयज्ञं, *bi. j. m.* तमेवंगुणं यज्ञं; *a. d. m.* omit यच्छताम्. 2. *bi. j.* read द्यावापृथिव्यौ न इमं साधनमद्य दिविस्पृशं यज्ञं देवेषु नियच्छताम् । गतार्थमेतत् ॥ after आशास्महे, *a. d. m.* omit it. 3. *bi. j.* विपाट्छुतु°, *m.* °पाट्शुतु°; *m.* adds तयोरेषा भवति, after व्याख्याते. 4. *a.* only omits इत्यत्र शुतुद्री. 5. *a. d. m.* omit तयोः एषा स्तुतिः भवति, *bi. j.* read it. 9. R. हासति स्पर्धायां. 10. Bi. mss. क, ख, ग omit शुभ्रे and read संमातरौ रिहाणे विपाट्छुतुद्री for मातरौ संरिहाणे विपाट्छुतुद्र्यौ of Roth and others.

3. 'विपाट्छुतुद्री'—Nigh. V. 3. 32.
3-4. विपाट् व्याख्याता—Nir. IX. 26.
4. इत्यत्र शुतुद्री—See Nir. IX. 26.
4-5. तद् यद् द्विवद् etc.—See Nir. II. 24.
6-7. RS. III. 33. 1.
9. **विमुक्ते इति वा**—Durga does not read **इति वा** after विमुक्ते.
9. हासतिः स्पर्धायां—Durga does not give this etymology.
10. **शुभ्रे**—Bi. mss. क, ख, ग do not read **शुभ्रे.** Durga reads it.
10. संरिहाणे = संलिहाने in classical Sanskrit.
11. **पयसा**—Durga does not notice **पयसा** in his commentary.

**आर्त्नी अर्तन्यौ वा । अरण्यौ वा । अरिषण्यौ वा । तयोरेषा भवति ॥ ३९ ॥**

**प्र पर्वतानाम्** इति । विश्वामित्रो ब्रवीति । ये चैते **विपाट्छुतुद्र्यौ पयसा**–उदकेन पूर्णे **प्रजवेते** प्रकृष्टेन जवेन गच्छतः **पर्वतानाम् उपस्थात्–उपस्थानात्** निर्झरात् मेघानां वा **उशती–उशत्यौ–कामयमाने** परस्परं समागमं, समुद्रं वा । कथं प्रजवेते । **अश्वे इव विषिते–विमुक्ते** मन्दुरातः । **विषण्णे इति वा ।** विभागेनैकस्मिन् युक्ते । कस्मिंश्चिद् युक्ते युगादौ वा । **हास्रमाने**–स्पर्धमाने परस्परेण, **हर्षमाणे वा** हृष्यमाणे वा । **विपाट्छुतुद्र्यौ गावा इव गावौ इव शुभ्रे–शोभने** कल्याण्यौ **मातरा–मातरौ संरिहाणे** वत्समेकं प्रलेढुमिच्छन्त्यौ । ये एवमेते **प्रजवेते** ते अस्माकं गाधे भवत इत्येतदाशास्महे ॥

**आर्त्नी** (३३) धनुःप्रान्ते । ते कस्मात् । **अर्तन्यौ वा ।** ऋतेर्धातोर्गत्यर्थस्य । गमयतस्ते इषून् । **अरण्यौ वा** अरणार्हौ **अरिषण्यौ वा** हन्त्र्यौ वा । **तयोः एषा भवति** ॥ ३९ ॥

---

2. Bi. J. conclude IX. iv. 5 with भवति· 3. *bi. j.* °छुतुद्यौ, *m.* °शुतुद्यौ 4–5. *a. d.* omit उपस्थानात्. 5. *d.* appears to omit उशती and to read उशन्त्यौ for उशत्यौ; *d.* repeats समागमं once more. 6. *a. d.* omit इव; *a. d. m.* विषिते, *bi. j.* विशिते; *a. d.* add साहिभ्यो वा and *m.* adds सादिभ्यो वा after मन्दुरातः; *bi. j.* विषण्णे इति वा, *m.* विषसो इति वा· 7. *a. m.* विभागे-नैकस्मिन् युक्ते, *bi. j.* °मुक्ते· 8. *a. m.* omit वा after हृष्यमाणे; *d.* reads विराड्विमुक्ते for विपाट्शुतुद्यौ; *a. d.* omit गावा इव; *a. d. m.* add विमुक्ते before गावौ इव· 9. *a. d. m.* omit मातरा· 10. *a. d.* omit ते; *bi. j.* here repeat the Nirukta text, from पर्वतानामु° to पयसा प्रजवेते । ( page 944, lines 8–11 ) and after that add उक्तोऽस्यार्थः ॥, *a. d. m.* omit the whole of this. We follow *a. d. m.* 11. *m.* आर्तन्यौ वा· 12–13. *a. d.* चरण्यौ वा चरणार्थौ रिषण्यौ वा हन्त्र्यौ तयोरेषा भवति, *m.* रण्यौ वा रणार्हौ । रिषण्यौ वा । हंन्यौ वा । तयोरे°

---

6. विषिते = विमुक्ते—*Cf.* ‘ षिञ्बन्धने ’ Dhâtup. 9. 6.

11. ‘ आर्त्नी ’—Nigh. V. 3. 33. Cf. ‘ आर्त्नी ’ अर्तेः रिषतेर्वा । निप्रत्ययः धातोः आर्तभावश्च । गते ज्यया ऋच्यमाणे संगच्छेते हिंसासाधने वा भवतः ।—*Devarâja.*

"ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे ।
अप शत्रून् विध्यतां संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ॥"

ते आचरन्त्यौ समनसाविव योषे मातेव पुत्रं बिभृतामुपस्थ उपस्थाने । अपविध्यतां शत्रून् संविदाने आर्त्न्याविमे विघ्नत्याव-
5 मित्रान् ॥

शुनासीरौ । शुनो वायुः । शु एत्यन्तरिक्षे । सीर आदित्यः सरणात् । तयोरेषा भवति ॥ ४० ॥

**ते आचरन्ती समनेव** इति । आर्त्न्योरेवानुमन्त्रणमश्वमेधे अनेन क्रियते । **समना इव योषा । समनसौ इव** एकभर्तृके योषिते यथैकं भर्तारं **प्रत्याचरन्त्यौ**
10 भवतः परिष्वक्तुम्, एवमाकष्टारं प्रति ये नित्यमाचरन्त्यौ भवतः आनमन्त्यौ । **मातेवं पुत्रं बिभृतामुपस्थे । मातेव पुत्रं उपस्थे** रक्षणार्थं ये **बिभृतामा**कष्टारम् । अमुना प्रकारेण ये **विस्फुरन्त्यौ** नित्य**ममित्रान्** भवतः । ययोरेष स्वभावः **ते आर्त्नी** नित्यम् अस्माकम् अमुना प्रकारेण **संविदाने** संवादमिव कुर्वाणे परस्परतः । आकर्षणाभिप्रायमेतत् । आकृष्यमाणयोस्तयोः संवाद इव परस्परतो भवति । **शत्रून्**
15 **अपविध्यताम्** इत्येतदाशास्महे ॥

2. Bi. D. R. विष्फुरन्ती, J. विस्फुरन्ती. 4. Bi. mss. क, ख, ग read उपस्थानेऽप शत्रून्विध्यतां संविदाने. 6. R. सीरः आदित्यः 7. Bi. J. conclude IX. iv. 6 with भवति. 9. *a.* only reads योषितेव ? 10. *m.* °माकष्टारं, *bi. j.* °माकृष्टारं; *a. d. m.* add ये before नित्यं, *bi. j.* do not have it. 11. *bi. j.* omit मातेव पुत्रं उपस्थे and read रक्षणाय ये बिभृ° instead, *a. d. m.* मातेव पुत्रं उपस्थे रक्षणार्थं ये बिभृ°; *m.* °माकष्टारं, *bi. j.* °माकृष्टारं.

1-2. RS. VI. 75. 4; VS. 29. 41; TS. 4. 6. 6. 2; MS. 3. 16. 3: 185. 16-17; KSA. 6. 1.

4. **उपस्थाने**—Durga does not notice **उपस्थाने.**

4. **इमे विघ्नत्यौ**—Durga does not notice these words in his commentary.

8. अश्वमेधे—See MS. 3. 16. 3.

**शुनासीरौ** (३४) इत्यत्र **शुनः वायुः** । स हि क्षिप्रमेत्यप्रतिबध्यमानोऽन्त-रिक्षे । **सीरः–आदित्यः सरणात्** । स हि नित्यं सरति गच्छति । **तयोः एषा भवति** ॥ ४० ॥

**“ शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः ।**
**तेनेमामुप सिञ्चतम् ॥ ”** 5

**इति सा निगदव्याख्याता ॥**

**देवी जोष्ट्री देव्यौ जोषयित्र्यौ । द्यावापृथिव्याविति वाहोरात्रे इति वा । सस्यं च समा चेति कात्थक्यः । तयोरेष संप्रैषो भवति ॥ ४१ ॥**

**शुनासीराविमाम्** इति । **इति सा निगदव्याख्याता** । वामदेवस्यार्षम् । शुनासीर्ये विनियोगः । हे **शुनासीरौ** युवां **वाचम् इमां** स्तुतिलक्षणां **जुषे-** 10 **थाम्**–सेवेथाम् । कथं च पुनरासेवितेयं युवाभ्यां स्यात् । **यद् दिवि चक्रथुः पयः** । **यत् दिवि**–द्युलोके **चक्रथुः**–संभरथः युवां **पयः**–उदकं **तेन इमां** पृथिवीम् **उपसिञ्चतम्** । एवमनेनास्मद्वागासेविता युवाभ्यां भविष्यतीति ।

---

1. *bi. j.* शुनासीरौ शुनः वायुः शु एति अन्तरिक्षे शुनासीराविर्त्यत्र स हि क्षि°, *m.* शुनासीरौ शुनो वायुः शु इत्यंतरिक्षे शुनासीरा इत्यत्र शिनो वायुः स हि क्षि°, *a. d.* शुनासीरौ इत्यत्र शुनः वायुः स हि क्षिप्र°. 8. J. शस्यं, Bi. C. D. R. सस्यं; Bi. J. R. कात्थक्यः; Bi. J. conclude IX. iv. 7 with भवति. 9. *a. d. m.* read the *pratîka* as शुनासीरौ only; *a. d.* omit इति सा निगदव्याख्याता, *bi. j. m.* read it. 10. *a. d. m.* add मम before स्तुतिलक्षणां. 11. *a. d.* omit च before पुनः, *bi. j. m.* read it. 12. *a. d. m.* omit पयः 13. *m.* adds, after भविष्यतीति,—देवी जोष्ट्री देव्यौ जोषयित्र्यौ द्यावापृथिव्याविति वाहोरात्रे इति वा सस्यं च समा चेति कात्थक्यस्तयोरेष संप्रैषो भवति ॥, and then again reads देवी जोष्ट्री इति । देव्यौ जोषयित्र्यौ etc. as others.

---

1. ‘ शुनासीरौ ’—Nigh. V. 3. 34.

4–5. RS. IV. 57. 5; AV. 3. 17. 7; TA. 6. 6. 2; ÂŚr. 2. 20. 4.

7. द्यावापृथिव्याविति वा अहोरात्रे इति वा—Durga does not read इति वा after द्यावापृथिव्यौ, and इति after अहोरात्रे. See ll. 1–2, p. 948.

10. शुनासीर्ये विनियोगः—Âs'va. Śrau. Sû. 2. 20.

**देवी जोष्ट्री** (३५) देव्यौ जोषयित्र्यौ । सर्वस्य तर्पयित्र्यौ । के पुनस्ते इति । **द्यावापृथिव्यौ अहोरात्रे वा** । सस्यं च समा च इति कात्थक्यः । सस्यं व्रीह्यादि, समेति संवत्सरः । **तयोः एष संप्रैषो भवति** ॥ ४१ ॥

**"देवी जोष्ट्री वसुधिती ययोरन्याघा द्वेषांसि यूयवदन्यावक्षद्वसु**
5 **वार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज ॥"**

**देवी जोष्ट्री देव्यौ जोषयित्र्यौ वसुधिती वसुधान्यौ । ययोरन्याघानि द्वेषांस्यवयावयति । आवहत्यन्या वसूनि वननीयानि यजमानाय वसुवननाय च वसुधानाय च । वीतां पिबेतां कामयेतां वा । यजेति संप्रैषः ॥**

10 **देवी ऊर्जाहुती । देव्या ऊर्जाह्वान्यौ । द्यावापृथिव्याविति वाहोरात्रे इति वा । सस्यं च समा चेति कात्थक्यः । तयोरेष संप्रैषो भवति ॥ ४२ ॥**

**देवी जोष्ट्री** इति । **देवी जोष्ट्री देव्यौ जोषयित्र्यौ वसुधिती–वसुधान्यौ** वसूनां निधानभूते । **ययोः** देव्योः **अन्या** एका **अघा–अघानि–द्वेषांसि**

1. *a. d.* omit सर्वस्य तर्पयित्र्यौ. 2. *bi. j.* शस्यं, *d. m.* सस्यं in both the places; *a. d.* काथक्यः, *bi. j. m.* कात्थक्यः. 4 Bi. C. D. R. वसुंधिती, J. वसुंधीती; R. °रुन्याघा; Bi. R. द्वेषॉसि, J. द्वेषांसि, Bi. mss. क, ख, ग—द्वेषांस्य; C. D. युयवदन्या°, J. यूयवदन्यावंक्ष°, Bi. mss. क, ख, ग read प्रयूयवदान्या, Bi. R. यूयवदान्या; R. °न्या वंक्षद्°. 5. R. यजंमानाय वसु°, J. यजंमानाय व°; R. वीताम् । यजं ॥, Bi. J. वीतां यजं ॥. 6. J. वसुधीती, Bi. C. D. R. वसुधिती, Bi. mss. क, ख, ग do not read वसुधिती. 7. R. द्वेषॉस्यव°; D. वरणीयानि, C. R. वननीयानि. 11. Bi. C. D. R. सस्यं, J. शस्यं. 12. Bi. J. conclude IX. iv. 9 with भवति. 13. *a. d. m.* omit देवी जोष्ट्री after इति; *m.* reads वसुधिती, *bi. j.* वसुधीती, *a. d.* omit it. 13–14. *a. d. m.* omit वसुधान्यौ. 14. *d. m.* omit अघा.

1. 'देवी जोष्ट्री'—Nigh. V. 3. 35.
4–5. KS. 19. 13; MS. 4. 13. 8: 210. 1; Tait. Br. 3. 6. 13.
6. **वसुधिती**—Bi. mss. क, ख, ग do not read **वसुधिती.** Durga has it.

घ्नन्ति, यान्यप्रियाण्यस्माकं तानि **यूयवत्-अवयावयति**-अवमिश्रयति-नाशयत्य-स्मत्तः । **अन्या** पुनः **आवक्षत्-आवहति वसु वार्याणि यजमानाय वननी-यानि**-वरणीयानि **वसूनि वसुवने वसुधेयस्य वसुवननाय च** संभजनाय, **वसुधानाय** वसुविशिष्टस्य निधानाय **च** । ते देव्यौ जोषयित्र्यौ **अस्य** पृषदाज्यस्य स्वमंशं **वीताम् पिबेतां, कामयेतां वा** । मैत्रावरुणो ब्रवीति । हे होतः त्वम् एते 5 **यज इति संप्रैषः** ।

**देव्यौ जोषयित्र्यौ०—०यजेति संप्रैषः** । एतस्यार्थ उक्तः ।

**देवी ऊर्जाहुती (३६) देव्या उर्जाह्वान्यौ । द्यावापृथिव्यौ इति वा । अहोरात्रे इति वा । सस्यं च समा च इति कात्थक्यः । तयोः एषः संप्रैषः भवति** ॥ ४२ ॥ 10

**"देवी ऊर्जाहुती इषमूर्जमन्या वक्षत्, सग्धिं सपीतिमन्या । नवेन पूर्वं दयमानाः स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवने वसुधेयस्य वीताम्; यज ॥"**

---

1. *d.* reads घ्नन्ति for हन्ति of *bi. j. m.*; *d.* या अप्रि° for यानि अप्रि° of *bi. j. m.*; *d.* न्ययुयवान्, *bi. j.* यूयवत्, *m.* युयवत्; *d.* अवसावयति for अवयावयति of *bi. j. m.* 2-4. *a.* वसु वार्याणि वरणीयानि यजमानाय यानि वसूनि वसुधेयस्य वसुवननाय च संभजनायाभुक्तातिशिष्टस्य विधानायेति च, *bi. j. m.* as text. 2-3. *m.* omits वननीयानि. 3. *m.* adds यानि before वसूनि; *a.* omits वसुवने. 3-4. *m.* संभजनायावभुक्तातिशिष्टस्य विधानायेति च, *a.* संभजनाय अभुक्ता°. 4. *a. m.* omit वसुधानाय; *bi. j.* निधानाय च, *a. m.* विधानायेति च. 5. *a. d. m.* omit मैत्रावरुणो ब्रवीति । हे होतः त्वम् एते. 6. *a. d.* conclude section 42, here, with यज इति संप्रैषः ॥ ४२ ॥ 7-10. *a. d.* omit from देव्यौ जोषयित्र्यौ to the end of the section; *m.* omits line 7 only. 8. *m.* देवी ऊर्जाहुती देव्या ऊर्जाह्वान्यौ, *bi. j.* देवी ऊर्जाहुती देव्यौ ऊर्जाहुत्यौ. 9. *m.* सस्यं, *bi. j.* शस्यं. 11. Bi. R. °मन्या वक्षत्, J. °मन्यावक्षत्. 12. R. J. पुराणेन नवं, Bi. पुराणेन नवं; J. अधातां, Bi. R. अधातां. 13. Bi. J. वीतां यज ॥, R. वीताम् । यज ॥.

---

8. 'देवी ऊर्जाहुती'—Nigh. V. 3. 36.

11-13. KS. 19. 13; MS. 4. 13. 8 : 210. 4-6; VS. 28. 16; TB. 2. 6. 10, 3; 3. 6. 13. 1.

**देवी ऊर्जाहुती देव्या ऊर्जाह्वान्यौ। अन्नं च रसं चावहत्यावहत्यन्या। सहजग्धिं च सहपीतिं चान्या। नवेन पूर्वं दयमानाः स्याम। पुराणेन नवम्। तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवननाय च। वसुधानाय च। वीतां पिबेतां कामयेतां वा। यजेति संप्रैषो यजेति 5 संप्रैषः ॥ ४३ ॥**

**देवी ऊर्जाहुती** इति। **देव्यौ ऊर्जाह्वान्यौ** ऊर्जस्य अन्नस्य निष्पादयित्र्यौ। द्यावापृथिव्यौ ऊर्जाह्वान्यावुच्येते। **इषम् ऊर्जम् अन्या** एका **आवक्षत्**। **अन्नं च** अन्नादिर**सं च** व्रीह्याद्युपसेचनं क्षीरादिकं च। **सग्धि** एका उपनामितस्यान्नस्य **सहपीतिम् अन्या सहजग्धि**–सहभोजनं बन्धुभिरिति **आवक्षत्–आवहति**। 10 आभिमुख्येन यथा बन्धुभिः सह भुञ्जीमहि तथा करोतु। तथा च तत् बह्वन्नमस्तु यथा **नवेन पूर्वम्** पुराणं **दयमानाः**–रक्षन्तः **स्याम**। **पुराणेन नवं** पुराणेन च नवं धान्यं दयमानाः स्याम। **तामेवंलक्षणाम् ऊर्जम् ऊर्जाहुती–ऊर्जयमाने** बलवतीं ऊर्जतां च कुर्वाणे **अधातां** दत्ताम्। **वसुवने वसुवननाय च वसुधेयस्य**

---

1–2. Bi. mss. क, ख, ग read रसं चावहत्यन्या सहसग्धि च सहसपीतिं चन्या. 4. R. reads यजेति संप्रैषः once only. 5. Bi. J. conclude IX. iv. 10 with संप्रैष as ॥ १० (४३)॥ and then read **इति नवमाध्यायस्य चतुर्थः पादः ॥९, ४॥**, R. **इति नवमोऽध्यायः.** 6. *m.* adds मैत्रावरुणो ब्रवीति। हे होतस्त्वमेते, before देवी ऊर्जाहुती, the *pratīka*; *a. m.* omit इति and read देव्या for देव्यौ; *m.* ऊर्जोन्नस्य; *d.* निःपाद°. 7. *a. d. m.* add अन्या एका before आवक्षत्, *bi. j.* do not read अन्या एका. 7–8. *a. d. m.* इषं न for अन्नं च. 8. *a. d. m.* तदुपसेचनं क्षीरादि। किंच। for व्रीह्याद्युपसेचनं क्षीरादिकं च of *bi. j.*; *a. d. m.* omit सग्धि. 8–9. *a. d.* एका उपनामितस्यान्नस्य सगुणस्य सग्धि सपी(तीं)तिमन्या सहभोज्यं सहभुञ्जीमहि, *d.* °नागमितस्या°, *m.* एका उपनयामितस्यान्नस्य सगुणस्य सग्धि(ग्धि)सपीतिमन्या। सहभोजनं ब°, *bi. j.* as text. 9. *a. d. m.* omit आवहति. 11. *d.* पूर्व्यं for पूर्वं; *d.* दक्षन्तः for रक्षन्तः. 12. *a. d.* omit ऊर्जाहुती; *d.* बलवतीं for बलवतीं of *bi. j.* 13. *a. d.* ऊर्जिह्वां for ऊर्जतां of *bi. j. m.*

---

1. **आवहति**—Bi. mss. क, ख, ग omit the second **आवहति.**

4. **यजेति संप्रैषः**—Roth does not repeat this.

वसुधानाय च । वीतां पिबेतां कामयेतां वा । यज इति संप्रैषः इति ॥ ४३ ॥

इति निरुक्तवृत्तौ चतुर्दशाध्यायस्य चतुर्थः पादः ॥ ९, ४ ॥

जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ

चतुर्दशो(नवमो)ध्यायः समाप्तः ॥ ९ ॥ 5

(अथ यान्यश्वो वोळ्हा मा नो मित्रः कनिक्रदद्भद्रं वद संवत्सरमुप प्र वद प्रावेपा मा प्रैते वदन्त्वमन्द्रान् यज्ञसंयोगाद् वनस्पत उप श्वासय बह्वीनामहिरिव रथे तिष्ठन् धन्वना गा वक्ष्यन्तीवेदा सुपर्णमा जङ्घन्ति याश्चिद्धि वृषभो न्यक्रन्दयन्निमं तं पितुं न्विमं म आपो हि ष्ठा या ओषधीरा रात्र्यरण्यानि श्रद्धयाग्निः स्योनामीषां चित्तमिहेन्द्राण्यथात आयज्या वां द्यावा नः प्र पर्वतानां ते आचरन्ती शुनासीरौ देवी जोष्ट्री देवी ऊर्जाहुती त्रिचत्वारिंशत् ॥ ) 10

इति निरुक्ते नवमो(उत्तरषट्के तृतीयो)ऽध्यायः ॥ ९ ॥

---

1. *a. d. m.* read यजेति संप्रै(m.°प्रे°)षो यजेति संप्रैषः twice. 2. *a. d.* conclude sec. 43, as ॥ ४३, ४ ॥ 6. Bi. वोल्हा; Bi. °मित्रो. 7. Bi. °उपप्रवद; C. D. प्रावेपाः प्रैते. 8–9. C. D. °महिरिव भोगै रथे तिष्ठन् धन्वना गा वक्ष्यन्तीव सुपर्ण वस्त आ जंघ°. 9. आपो हि या. 10–11. श्रद्धया स्योनामीषामिहेन्द्राणीमथातो-ष्ठावायजी आ वामुपस्थं द्यावा नः. 12. Bi. mss. क, ख, ग do not have the Khaṇḍaśṛṅkhalâ.

# अथ दशमोऽध्यायः ।



**अथातो मध्यस्थाना देवताः । तासां वायुः प्रथमागामी भवति । वायुर्वातेर्वेतेर्वा स्याद्गतिकर्मणः । एतेरिति स्थौलाष्ठीविरनर्थको वकारः । तस्यैषा भवति ॥ १ ॥**

5 व्याख्यातानि पृथिवीस्थानदेवतापदानि । अधुना समाम्नायानुक्रमेणैव मध्यमस्थानदेवतापदानि निर्वक्तव्यानि । तदर्थमिदमारभ्यते । **अथातो मध्यस्थाना देवताः** इति । **अथ**शब्दो विशेषाधिकारार्थः । **अतः**शब्द आनन्तर्यार्थः । मध्यं स्थानमेतासामिति **मध्यस्थानाः देवताः**, वाय्वाद्याः । वक्ष्यन्ते इति वाक्यशेषः । देवता इति बहुवचनं भेदपक्षे । एकैव । नैरुक्तानां देवतात्रित्वाभ्युपगमात् एतस्यैव मध्यमस्य 10 पर्यायवचनान्येतानि वाय्वादीनि रोदस्यन्तानि गुणविशेषतो भवन्ति । यथैवोत्तमस्य ज्योतिषो दृश्यन्ते सवितृभगप्रभृतीनि ।

**तासां वायुः प्रथमागामी भवति ।** नन्विन्द्र इति मध्यमस्य स्थानस्य मुख्यमभिधानम् । तत् प्रथमं समाम्नातव्यमासीत् । न । मध्यमस्य वर्षकर्मोपलक्षणत्वात् वर्षकर्मणि

---

2. D. reads हरिः ॐ म् ।, and J. ॐ only before अथ. 4. Bi. J. conclude X. i. 1 with भवति. 5. *m.* reads श्रीगणेशायनमः before व्याख्यातानि. 6. *m.* वक्तव्यानि, *bi. j.* निर्वक्तव्यानि. 7. *d.* मध्यमं स्थानमेतासामिति मध्यमस्थानाः, *bi. j. m.* as text. 9. *m.* एकैव नैरुक्तानां । देवतात्रित्वाभ्युपगमादे°, *bi. j.* एकैव; नैरुक्तानां देवतात्रित्वाभ्युपगमात् एतस्यैव म°; *a. d.* एकस्यैव for एतस्यैव. 11. *bi. j.* दृश्यन्ते भगप्रभृतीनि, *a. m.* दृश्यन्ते सवितृभग°. 11–12. *d.* omits दृश्यन्ते etc. to मध्यमस्य ( line 12 ), and reads as ज्योतिषो इति मस्य मुख्यमभिधानं etc. 12. *a. d.* omit स्थानस्य after मध्यमस्य. 13. *a. d.* तत्प्रथमं समाम्नातव्यं, *bi. j.* तत् प्रथमसमा°, *m.* तत्प्रथमं समाप्तमासीत्.

---

5. व्याख्यातानि पृथिवीस्थानदेवतापदानि—These are explained in Nirukta from section 14 of the Seventh Adhyâya to the end of the Ninth Adhyâya. They form sections 1 to 3 of the fifth adhyâya of the Nighaṇṭu.

5–6. मध्यमस्थानदेवतापदानि—Cf. Nigh. V. 4 and 5.

9. नैरुक्तानां देवतात्रित्वाभ्युपगमात्—See Nir. VII. 5.

च वायोरधिकारः प्रथमः स्यात् । कथम् इति । वाय्वात्मनैव हि मध्यमः, ऊर्जान्मासात् परतः सार्वदिक्कमुदकमुपसंहरन्नोषधिवनस्पतिजलाशयेभ्यः उदकम्, अन्तरिक्षलोकस्य गर्भमुपचिनोति । स मासाष्टकेन संभृतोदकगर्भो विपक्वः प्रावृषं प्राप्य प्रसवाय प्रकल्पते । तदुक्तम्—

" वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे ।　　5
ततः पर्णरुहो वान्ति ततो देवः प्रवर्षति ॥ "

–इति । तदेवं वर्षकर्मप्रारम्भे वाय्वात्मनैव मध्यमो व्याप्रियत इति युक्तं वाय्वभिधानमिह प्रथमं समाम्नातमिति । इतश्च युक्तं यदुच्यते **तासां वायुः प्रथमागामी भवति** इति । स एष संभृतोदकगर्भो वायुर्विवृण्वन् मेघजालेन नभः, मध्यमो वरुणः संपद्यते । ततो रुदत् रुद्रः । तत इरां ददत् इन्द्रः । ततो रसान् प्रार्जयन् पर्जन्यः । एवमादिर्म- 10 ध्यमस्य जगदनुग्रहाय वर्षप्रदानसिद्धये गुणोपजनक्रमः । अनयैव गुणोपजनक्रमानुपूर्व्या वायुः, वरुणः, रुद्रः, इन्द्रः, पर्जन्यः, इत्येवमाद्या समाम्नाये देवतानामानुपूर्वी । तदेतत् स्फुटं द्युस्थाने गुणान्तरोपजनानुपूर्व्यं ज्योतिर्मण्डलस्य सवितृप्रभृतिषु ।

**वायुः** (१) कस्मात् । **वातेः** । " वा गतिगन्धनयोः " इत्यस्य । सततमसौ वाति गच्छति । **वेतेः वा स्याद् गतिकर्मणः** । अनेकार्थो वेतिः । तस्य वा 15 गत्यर्थस्य । **एतेः इति स्थौलाष्ठीविः** । अस्मिन् पक्षे **अनर्थकः वकारः** । उपजनमात्रम् । एत्यसौ इति वायुः । **तस्य एषा भवति** ॥ १ ॥

---

2. *a. d.* सार्वदिक्कं, *bi. j.* सार्वदिक्कं, *m.* सार्वदिक्सुदकं. 5. *d.* पर्णशुषा, *bi. j. m.* पर्णशुषो. 9. *a. d.* मेघजलेन, *d.* omits ततो before रुदत्. 10. *d.* इनां for इरां; *m.* प्रार्जयन्, *bi. j.* प्रार्जयत्. 12. *d. m.* रुद्र इंद्रः पर्जन्यः, *bi. j.* omit इन्द्रः; *m.* देवतानामपूर्वी तदेततस्फुटं. 13. *m.* °पजानानुपूर्व्या. 15-16. *a. d. m.* तस्य वा गतिकर्मणो गत्यर्थस्य. 17. *m.* omits the *vritti* from उपजनमात्रम् to मधुच्छन्दस आर्षम् ( 1. 5 next section ).

---

2. ओषधिवनस्पतिजलाशयेभ्यः उदकम्—This seems to be the explanation written in the margin, of सार्वदिक्कमुदकम्.

5-6. " वान्ति पर्णशुषो वाताः etc. "—The quotation is not traced.

14. ' वायुः '—Nigh. V. 4. 1.

14. " वा गतिगन्धनयोः "—Dhâtup. 2. 40.

"वायवा याहि दर्शतेमे सोमा अरंकृताः ।
तेषां पाहि श्रुधी हवम् ॥"

वायवायाहि दर्शनीयेमे सोमा अरंकृता अलंकृतास्तेषां पिब, शृणु नो ह्वानमिति । कमन्यं मध्यमादेवमवक्ष्यत् । तस्यैषापरा भवति ॥ २ ॥

5 **वायवा याहि दर्शत**–इति । मधुच्छन्दस आर्षम् । आध्वर्यवे वायव्योपस्थाने विनियोगः । बाह्वृच्ये प्रउगे शस्त्रे शस्यते । हे **वायो दर्शत–दर्शनीय**–दर्शनार्ह त्वदर्थम् **इमे सोमाः** अस्माभिः **अरंकृताः–अलंकृताः**–पर्याप्ताः पातुं संस्कृताः । स त्वमस्माकमिदं **हवम्**–आह्वानं **श्रुधि–शृणु** । श्रुत्वा च तत **आयाहि** । एत्य च **तेषाम्** एतेषां सोमानां यः स्वोंऽशस्तव तं **पाहि–पिब** इत्येतदाशास्महे ।

10 वायोः सर्वस्थानतामपेक्ष्य विचारमागूर्य ततोऽवधारयति । सर्वस्थानत्वेऽपि सति **कमन्यम्** इन्द्रात् **मध्यमात् एवम् अवक्ष्यत्** मन्त्रकृत् । सोमा अरंकृताः तेषां पिब इति । प्रसिद्धं हि इन्द्रस्य मध्यमस्य सोमपानम् । तदर्थत्वात् सोमसंस्कारस्य । अप्रसाध्यमन्यस्य । तस्मादिन्द्र एव वायुः ।

**तस्य** इन्द्रस्य वायोः ऐन्द्रे एव सूक्ते यस्यामिन्द्रस्य विशेषणत्वेन वायुशब्दः, तथा 15 **एषा अपरा** ऋक् **भवति** ॥ २ ॥

"आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः ।
अभि श्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं वि दस्येत् ॥"

---

3. Bi. mss. क, ख, ग have सोमा अरंकृतास्तेषां. 4. Bi. mss. (क, ख, ग) read °मवक्षत्तस्यैषा; Bi. J. conclude X. i. 2 with भवति. 5. *a.* marks verse 1, after इति, as इति १; *m.* omits the *pratîka* and the following words up to आर्षम्, and reads उपध्वर्यवे for आध्वर्यवे of *bi. j.* 6. *m.* बाह्वृचे, all others बाह्वृच्ये; *d.* omits शस्त्रे after प्रउगे. 7. *a. d. m.* omit अरंकृताः after अस्माभिः; *a. d.* add अलंकृताः (*m.* अरंकृताः) again after पर्याप्ताः. 8. *a. d. m.* omit हवम्; *a. d. m.* read ततः, *bi. j.* तत. 9. *a. d. m.* omit तेषां. 11. Bi. mss. क, ग and *d. m.* read मंत्रदृक्, *bi. j.* मंत्रकृत्.

---

1-2. RS. I. 2. 1.

5-6. आध्वर्यवे वायव्योपस्थाने विनियोगः—The *viniyoga* is not traced.

6. प्रउगशस्त्र— AB. 3. 1; ÂŚr-Sû. 5. 10.

16-17. RS. VI. 37. 3.

आसस्रुवांसोऽभिवलायमानमिन्द्रं कल्याणचक्रे रथे योगाय रथ्या अश्वा रथस्य वोढार, ऋज्यन्त ऋजुगामिनोऽन्नमभिवहेयुर्नवं च पुराणं च। श्रव इत्यन्ननाम, श्रूयत इति सतः। वायोश्चास्य भक्षो यथा न विदस्येदिति। इन्द्रप्रधानेत्येके, नैघण्टुकं वायुकर्म। उभयप्रधानेत्यपरम्॥ 5

**वरुणो वृणोतीति सतः। तस्यैषा भवति॥ ३॥**

**आसस्राणासः**–इति। भरद्वाजस्यार्षम्। महाव्रते महदुक्थे शस्यते, उत्तरे पक्षे। **रथ्यासः–रथ्याः अश्वाः सुचक्रे–कल्याणचक्रे रथे** योगार्थम् **इन्द्रं शवसानम् अच्छ इन्द्रमभिवलायमानम्**धिकबलमात्मानं मन्यमानम्, **आसस्राणासः–आसस्रुवांसः** नित्यमासर्पन्ति ये, तान् युक्त्वा रथेऽस्माकम् आयाहि सोमपानाय यज्ञमिति। किमस्माकं ते कुर्वन्तु इति। **अभि श्रव ऋज्यन्तो वहेयुः। ऋजुगामिनः** भूत्वा **श्रवः–अन्नं** सोमाख्यमेतदस्मयज्ञे यत्। **नू चित्, नवं च** 10

1. Bi. R. आसस्रांसो, Bi. mss. क, ख, ग have आसस्रुवांसो. 2. Bi. mss. क, ख, ग read वोल्हार, Bi. J. वोढार. 6. Bi. J. conclude X. i. 3 with भवति. 7. *a.* marks verse 2, as इति२. 8. *a d. m.* omit रथ्यासः. 9. *d. m.* आसस्राणाः for आसस्राणासः of *bi. j.* 10. Bi. mss. क, ख read नित्यमासर्पन्ति एतान् युक्त्वा. 11. *d.* आभि श्रव, *bi. j.* अभि श्रव; *bi.* ऋज्वन्तो. 12. *bi. j.* नवं च पुराणं च, *m.* नव पुराणं च.

---

2. **रथस्य वोढारः**—Omitted by Durga.

3–4. Durga takes no notice of **इति सतः**, the **च** after वायोः, and **वायुकर्म.**

4. यथा **न** विदस्येदिति—The *ṛk* quoted contains no negative particle. Yâska, however, introduces it in his explanation and Durga follows him. Cf. यथा अस्य... सोमभक्षो **न** विदस्येत्, अविदस्तेऽनुपक्षीणे etc. below ( page 956, ll. 1–2 ).

7. शस्यते उत्तरे पक्षे—Ait. Âr. 5. 2. 2.

12. श्रवः=अन्नम्, Nigh. II. 7. 4.

12. नू चित्—For the meaning of this particle, cf. नूचिदिति निपातः पुराणनवयोः—Nir. IV. 17. Sâyaṇa takes it as a negative particle—नूचिन् इति निपातो निषेधेऽत्र वर्तते, Sâyaṇa, *loc. cit.*

**पुराणं च** तत्पानाय एनमिन्द्रम**भिवहेयुः । नु** क्षिप्रम् । **यथा अस्य वायोः** इन्द्रस्य इदम् **अमृतम्** एष सोमभक्षः **न विदस्येत्** । अविदस्तेऽनुपक्षीणे एतस्मिन् सोमभक्षेऽभिवहेयुः इत्येतदाशास्महे ।

**श्रवः इति** एतत् **अन्ननाम** । तद्धि सर्वत्र **श्रूयते** । **नूचित्** इति नवपुराणा-
5 भिधायकौ निपातौ । नवं यः सोमो गृहीत्वा तत्कालमेव हूयते । पुराणं पुनः यः प्रातः-सवने गृहीत्वा माध्यंदिने सवने हूयते तृतीयसवने वा । तद्यथा । अतिग्राह्याः ध्रुवश्च ।

एवमेतस्मिन् मन्त्रे ऐन्द्रसूक्तमध्यपातित्वाद् **इन्द्रप्रधाने** यद् वाय्वभिधानं तत् **नैघण्टुकम्** इन्द्रस्यैव विशेषणार्थं व्यञ्जनमात्रम् **इति एके । अपरे** पुनः **उभय-प्रधाना** इयमृक् **इति** मन्यन्ते भेदपक्षवादिनः । तत् पुनरयुक्तं निष्केवल्ये विनियोगात् ॥

10 **वरुणः** (२) कस्मात् । **वृणोतीति सतः** । स हि वियद् वृणोति मेघजालेन । **तस्य एषा भवति** ॥ ३ ॥

“ **नीचीनंबारं वरुणः कवन्धं प्र ससर्ज रोदसी अन्तरिक्षम् ।**
**तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूमं ॥** ”

**नीचीनद्वारं वरुणः कवन्धं मेघम् । कवनमुदकं भवति, तदस्मिन्धी-**
15 **यते । उदकमपि कवन्धमुच्यते । बन्धिरनिभृतत्वे । कमनिभृतं च प्रसृजति द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन । तेन सर्वस्य भुवनस्य राजा यवमिव वृष्टिर्व्युनत्ति भूमिम् । तस्यैषापरा भवति ॥ ४ ॥**

---

1. *a. d. m.* एनमिन्द्रं, *bi. j.* एवमिन्द्रं. 1-2. *d. m.* read इन्द्रस्य वायो', by inversion. 6. *a.* only reads माध्यंदिनसवने; *d.* अतिग्राह्या ध्रुतश्च. 12. R. C. कवंन्धं. 14. Bi. C. D. and R. read कवन्धं, and Bi. mss. क, ख, ग and J. have कबन्धं. 15. Bi. mss. क, ख, ग read कमस्मिन्धीयत उदकमपि कबन्ध उच्यते. 17. Bi. J. conclude X. i. 4 with अपरा भवति.

---

6. अतिग्राह्याः—MS. 4. 7. 3; ध्रुवः—MS. 4. 6. 6. These are names of *Somagrahas*.

9. निष्केवल्ये विनियोगात्—The *viniyoga* is not traced.

10. ‘ वरुणः ’—Nigh. V. 4. 2.

12-13. RS. V. 85. 3.

**नीचीनवारम्**–इति । अत्रेरार्षम् । न्यक् अच्यते द्वारं यस्य स भवति नीचीन-द्वारः, अधोद्वारः । तं **नीचीनद्वारम्** अधोबिलं कृत्वा **कबन्धं–मेघं वरुणः** मध्यमः । अत एव मेघसंबन्धात् **कवनम्–उदकम् प्रससर्ज प्रसृजति** महत्त्वेन । न ह्यमहानेतच्छक्नुयात् कर्तुम् । **रोदसी अन्तरिक्षम् । द्यावापृथिव्यौ च अन्तरिक्षं च महत्त्वेन** सर्वमापूरयिष्यन्निव । ततः **तेन** अतिप्रभूतोदकेन विसृष्टेन 5 **विश्वस्य भुवनस्य** भूतजातस्योदकस्य वा **राजा** ईश्वरः **यवं न** यवमिव कश्चित् सत्कर्षी स्वल्पं **वृष्ट्या व्युनत्ति** विविधमुनत्ति क्लेदयति **भूम भूमिं** कृत्स्नां यः सोऽस्माकमिदं नाम करोतु ।

अथ चैवमन्यथा योज्यम् । **प्रसृजति द्यावापृथिव्यौ च अन्तरिक्षं च** प्रकर्षेण सृजति उत्पादयति **महत्त्वेन** । यस्माच्चोत्पादयति तस्मात् स एव **भुवनस्य** 10 **राजा** विश्वस्य भुवनस्य भूतजातस्य । **तेन** हेतुना तदनुग्रहाय **नीचीनद्वारम्** अधोबिलं **मेघं** कृत्वा **यवमिव वृष्टिर्व्युनत्ति भूमि**मिति समानं पूर्वेण ।

कबन्ध इति मेघ उच्यते । कस्मात् । **कवनम्–उदकं** कवतेर्गत्यर्थस्य । **तद-स्मिन् धीयते** इति कबन्धो मेघः । **उदकमपि कबन्धमुच्यते** । तत् कस्मात् । अत्रोत्तरं पदं प्रथमं निराह । **बन्धिः** धातुः **अनिभृतत्वे** । निभृतस्तावदचपलः । 15

---

1. *a.* marks verse 3, as °मिति[3]; *d.* न्यञ्च for न्यक्. 2. *d.* तं नीचद्वारमलोबिलं कृत्वा, *bi. j. m.* तं नीचीनद्वार अधोबिल कृत्वा; *bi.* कवन्धं मेघं. 5. *a. d. m.* omit तेन after ततः; *a. d.* ततोऽतिप्रभूतेनोदकेन. 7. *m.* सक्त्वर्षी for सत्कर्षी of others; *d. m.* omit भूम. 9. *m.* अथवैवमन्यथा. 10. *a. d.* स तस्माद्भुवनस्य for तस्मात्स एव भुवनस्य. 12. *bi. j. m.* अधोबिल; *d.* व्युष्टिः for वृष्टिः. 13. *bi. j. m.* कवन्ध इति; *a. d.* add सः after कस्मात्. 13-14. *m.* omits from कवनम् उदकं to तत् कस्मात्. 14. *bi. j.* कवन्धो मेघः; *bi. j.* कवन्धमुच्यते; Bi. mss. क, ख read कबन्ध throughout in this para for कवन्ध of *bi. j.*

---

13. कवनं=उदकं. This word is derived from 'कुङ् शब्दे', Dhatup. 1. 976. Durga derives it from the root *kav*, to go.

14. उदकमपि कबन्धमुच्यते—Cf. कबन्धः कमनीयं च तत् बन्धं चेत्यर्थः । यद्वा । कं सुखं बध्नाति स्नानपानादिना । बवयोः अविशेषात् बकारस्य वकारः । कवन्धम्—Devarâja, on Nigh. I. 12. 6.

तद्विपरीतार्थवाची बन्धि. । कं च तच्चपलं चेति कवन्धम् । सुखं चानवस्थायि चेत्यर्थः ।

**तस्य** वरुणस्य मध्यमत्वे **एषा अपरा** ऋक् **भवति** । सा पुनः किमर्थम् । वर्षकर्म वरुणाभिधानं च सूर्येऽपि दृष्टम् । उत्तरस्यां तु शब्दत एव **मध्यमः** वरुण:
5 इति विशेषहेतुनोपपादयति ॥ ४ ॥

"तमू षु समना गिरा पितॄणां च मन्मभिः ।
नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदये
सप्तस्वसा स मध्यमो नभन्तामन्यके समे ॥"

**तं स्वभिष्टौमि समानया गिरा गीत्या स्तुत्या, पितृणां च मननीयैः**
**10 स्तोमैर्नाभाकस्य प्रशस्तिभिः । ऋषिर्नाभाको बभूव, यः स्यन्दमाना-नामासामपामुपोदये सप्तस्वसारमेनमाह वाग्भिः । स मध्यम इति निरुच्यतेऽथैष एव भवति । नभन्तामन्यके समे । मा भूवन्नन्यके सर्वे ये नो द्विषन्ति दुर्धियः पापधियः पापसंकल्पाः ॥**

---

3. *a. d.* omit ऋक्. 4. *a. d.* सूर्येऽभिदृष्टम्. 6. J. पितृणां. 9. Bi. mss. क, ख, ग read समान्या for समानया. 10-11. Bi. mss. क, ख, ग have स्यन्दनाना.

6-8. RS. VIII. 41. 2.

10-13. Durga does not comment upon the following words and expressions of this section:—ऋषिर्नाभाको बभूव; आसाम्; सप्तस्वसारमेनमाह; अथैष भवति; ये नो द्विषन्ति दुर्धियः पापधियः पापसंकल्पाः. Of these ये नो द्विषन्ति etc. is clearly an interpolation.

11. सप्तस्वसारम् एनम् आह वाग्भिः—The *Saptasvasas* number seven:—अम्बा, दुला, नितत्नी, स्तनयन्ती, अभ्रयन्ती, मेघयन्ती and चुपुणिका. The poet calls Varuṇa Saptasvasā on account of them. They are also called *vāchās*. Durga reads अश्वा for अम्बा, cf. अश्वाद्याभिः सप्तभिः वाग्भिः line 13, page 959.

12. नभन्ताम्—The root '*nabh*' means 'to kill'. See Nigh. II. 19. 10.

**रुद्रो रौतीति सतो, रोरूयमाणो द्रवतीति वा, रोदयतेर्वा ।**

**" यदरुदत्तद्रुद्रस्य रुद्रत्वम् "**

**–इति काठकम् ।**

**" यदरोदीत्तद्रुद्रस्य रुद्रत्वम् "**

**–इति हारिद्रविकम् । तस्यैषा भवति ॥ ५ ॥**　　　5

**तमू षु समना**–इति । नाभाकस्यार्षम् । सु-इत्येतस्योपसर्गस्य संबन्धि क्रियापदं नास्तीति **तं स्वभिष्टौमि** इत्यभिपूर्वं क्रियापदमध्याह्रियते । सुष्ठु तमभिष्टौमि । केन । **समना** । तत्समानया तद्योग्यया **गिरा–गीत्या–स्तुत्या** । **पितॄणां च मन्मभिः** ये च पितॄणां मननीयाः–मननार्हाः बहुमानाः स्तोमाः तैश्चाहमभिष्टौमि । **नाभाकस्य प्रशस्तिभिः** । याश्च मम नाभाकस्य प्रशस्तयः स्तुतयः योग्याः तं 10 वरुणं प्रति ताभिरभिष्टौमि । किंलक्षणः यः वरुणः । **यः सिन्धूनाम् उपोदये, यः स्यन्दमानानाम् अपाम् उपोदये**–उपोद्गमे अन्तरिक्षलोके वर्षस्य **सप्तस्वसा** संपद्यते मध्यमाभिः अश्वाद्याभिः सप्तभिः **वाग्भिः** । **स मध्यमः इति** वरुणः **निरुच्यते** शब्दत एवैतस्मिन्मन्त्रे । तदनुग्रहादस्माकं **नभन्तामन्यके समे** । **मा भूवन्नन्यके सर्वे** । अन्य एव अन्यके । शत्रवः । ते मा भूवन्नस्माकमिति ।　　　15

**रुद्रः** (३) कस्मात् । **रौतीति सतः** । स हि स्तनयित्नुशब्दं करोति । **रोरूयमाणो द्रवति इति वा** । शब्दं कुर्वाणो मेघोदरस्थो द्रवतीति । **रोदयतेः वा** । शत्रूनसौ रोदयति दुःखयति । ब्राह्मणमपि चैतस्मिन्नर्थे भवति । **" यदरुदत् तद्रुद्रस्य रुद्रत्वम् "–इति काठकम्** । कठानां प्रवचनम् । ऐतिहासिकैरेतत् समवैति ।

---

5. Bi. J. conclude X. i. 5 with तस्यैषा भवति. 6. *a.* marks verse 4, as °नेति४. 7. *m.* सुष्ठु. 8. *a. d. m.* omit गीत्या, *bi. j.* have it; *a. d.* पितृणां, *j.* पितृणां. 9. *a. d.* मनना बहुमनाः for मननार्हाः बहुमानाः. 11. *d. m.* add यः again before सिन्धूनाम्, *bi. j.* do not have it; *m.* adds यः before स्यन्दमानानाम् also; *bi. j.* do not have it. 12. *d.* स्यन्दनानां for स्यन्दमानानां. 15. *a. d.* omit ते after शत्रवः. 16–17. *d.* रूयमाणो. 18. *a. d.* omit एतस्मिन्नर्थे.

---

2. " यदरुदत्° "—Cf. 'यत्समरुजत्तद्रुद्रस्य रुद्रत्वम्'—KS. 25. 1.

4. " यदरोदीत्तद्रुद्रस्य° "—Cf. 'यदरोदीत्तद्रुद्रः' ŚB. VI. 1. 3. 10; IX. 1. 1. 6; TS. 1. 5. 1. 1.

16. 'रुद्रः'—Nigh. V. 4. 3.

"स किल पितरं प्रजापतिमिषुणा विध्यन्तमनुशोचन्नरुदत् तद्रुद्रस्य रुद्रत्वम्।"
"**यदरोदीत् तद्रुद्रस्य रुद्रत्वम्**" **इति हारिद्रविकम्।** स एवार्थः। केवलं तु शाखान्तरमन्यत्। एवं शाखान्तरेभ्योऽपि देवताभिधाननिर्वचनान्तराण्युपेक्ष्याणीत्युपप्रदर्शनार्थम्। हारिद्रवो नाम मैत्रायणीयानां शाखाभेदः। **तस्य एषा**
5 **भवति** ॥ ५ ॥

"**इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाम्ने।**
**अषाळ्हाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः॥**"

**इमा रुद्राय दृढधन्वने गिरः क्षिप्रेषवे देवायान्नवतेऽषाढायान्यैः सहमानाय विधात्रे तिग्मायुधाय भरत। शृणोतु नः।**

10 **तिग्मं तेजतेरुत्साहकर्मणः। आयुधमायोधनात्।**

**तस्यैषापरा भवति** ॥ ६ ॥

2. *a. d. m.* omit तद्रुद्रस्य रुद्रत्वं after यदरोदीत्; *a. d. m.* हारिद्रविकं, *bi. j.* हारिद्राविकम्. 7. Bi. mss. क, ख, ग and J. अषाल्हाय, Bi. C. R. अषाळ्हाय. 8. Bi. J. C. R. दृढधन्वने, Bi. mss. क, ख, ग read दृल्हधन्वने; Bi. mss. क, ख, ग—ऽषाल्हायान्नैः, Bi. J. ऽषाढायान्नैः, C. ऽषाळ्हायान्यैः, R. ऽषाढायान्यैः. 11. D. तस्यैषा भवति, C. as text; Bi. J. conclude X. i. 6. with अपरा भवति.

1. "स किल पितरं°"—For the story of Prajâpati falling in love with his daughter, see ŚB. I. 7. 4. It is given with all details in MS. 3. 6. 5 : 4. 2. 12.

6. स्वधाम्ने = अन्नवते according to Yâska. स्वधा=अन्नं Nigh. II. 7. 17. In the Ṛgveda *svadhâ* never means 'food'. It means 'power'. स्वधावन् = 'self-dependent', 'magnificent by nature' (Roth).

6-7. RS. VII. 46. 1; TB. 2. 8. 6. 8.

8. **अन्यैः**—Not explained by Durga.

9-10. **तिग्मं तेजतेरुत्साहकर्मणः। आयुधमायोधनात्।**—Durga does not give these etymologies of the words '*tigma*' and '*âyudha*'. They therefore seem to be later additions to the *bhâṣya*. The Dhâtupâṭha gives 'to sharpen' as the meaning of तिज्; cf. 'तिज निशाने' Dhâtup. 1. 996; 10. 119.

**इमा रुद्राय**–इति । वसिष्ठस्यार्षम् । उत्तरा च । शूलगवे विनियोगः । हे स्तोतारः यूयमुच्यध्वे । **इमाः गिरः**–स्तुतीः **भरत रुद्राय** । किंलक्षणाय । **स्थिरधन्वने**–**दृढधन्वने**–दृढधनुषे **क्षिप्रेषवे**–शीघ्रेषवे **देवाय** दानादिगुणयुक्ताय **स्वधाम्ने**–स्वधावते–**अन्नवते अषाळ्हाय**–**अषाढाय** अनभिभूताय केनचित् **सहमानाय** नित्यमभिभवते शत्रून् **वेधसे**–**विधात्रे तिग्मायुधाय**–तीक्ष्णायुधाय । स च इमा 5 गिर उच्यमानाः **शृणोतु नः**–अस्माकम् इत्येतदाशास्महे ।

**सहमानाय** इति बलकृतेः मध्यमः । **तस्य एषा अपरा भवति** । सा पुनः किमर्थम् । **विधात्रे** इत्युक्तं पूर्वस्यामृचि । तत्रैतद् भवति किमसौ विधत्ते इति । अतः परया निर्ब्रवीति रक्षःपिशाचानिति ॥ ६ ॥

"या ते॑ दि॒द्युदव॑सृष्टा दि॒वस्परि॑ क्ष्म॒या चर॑ति॒ परि॒ सा वृ॑णक्तु नः । 10
स॒हस्रं॑ ते स्वपिवात भेष॒जा मा न॑स्तो॒केषु॒ तन॑येषु रीरिषः ॥"

**या ते दिद्युदवसृष्टा दिवस्परि दिवोऽधि । दिद्युद् द्यतेर्वा, द्युतेर्वा, द्योततेर्वा । क्ष्मया चरति । क्ष्मा पृथिवी । तस्यां चरति, तया चरति, विक्ष्मापयन्ती चरतीति वा । परिवृणक्तु नः सा । सहस्रं ते स्वाप्तवचन**

1. *a.* marks verse 5, as °येति ५; *d.* शूलगले for शूलगवे. 3. *a. d. m.* omit दृढधन्वने; *m.* adds शीघ्रेषवे after देवाय, *bi. j.* do not have it; *a. d.* दानगुणयुक्ताय; *m.* omits स्वधाम्ने. 4. *j.* adds शीघ्रेषवे after अन्नवते, *a. d. m. bi.* do not have it; *m.* अषाल्हाय, *bi. j.* अषाळ्हाय; *a. d. m.* omit अषाढाय. 6. *a. d. m.* omit नः. 7. *m.* वलकृतेः. 8. *d. m.* यतः, *bi. j.* अतः. 13. Bi. mss. क, ख, ग do not read द्योततेर्वा. 14. Mss. क, ख, ग of Bi. read विक्ष्मापयति, C. विक्ष्मापयन्ती.

1. शूलगवे विनियोगः—ÂGr. Sû. 4. 9. 21.

10–11. RS. VII. 46. 3.

13. **द्योततेर्वा**—Bi. mss. क, ख, ग do not have **द्योततेर्वा.** Durga also does not read it. It is superfluous as there is no difference whatsoever between द्युतेः and द्योततेः, both being forms of one and the same root द्युत्.

13. Durga does not explain **द्योततेर्वा,** and **क्ष्मा पृथिवी.**

**भैषज्यानि । मा नस्त्वं पुत्रेषु च पौत्रेषु च रीरिषः । तोकं तुद्यतेस्तनयं तनोतेः ॥**

**अग्निरपि रुद्र उच्यते । तस्यैषा भवति ॥ ७ ॥**

**या ते दिद्युदवसृष्टा**-इति । हे भगवन् रुद्र **या ते** तव **दिद्युत्**-आयुधं 5 ज्वरातीसारादिरोगाख्यं येन प्राणिनो हंसि, **दिवस्परि** द्युलोकादधि त्वया **अवसृष्टा चरति** । सर्वैव हि देवता द्युस्थाना इति गम्यते दिवस्परीति लिङ्गात् । कर्माधिकारस्थानानि तु विशिष्टानि इति तिसृणां त्रीणि कर्माधिकारस्थानानि नियतानि भवन्ति । अत एवोक्तमग्न्यधिकारे 'द्युस्थानो भवति' इति । कथं या **चरति** दिद्युत् । **क्ष्मया** पृथिव्या व्रीह्यादिभावमुपगतया । **तस्यां** व्रीह्यादिभावमुपगतायां पृथिव्यामनुप्रविश्य 10 **चरति** अन्नपानसमुद्भूता तत्प्रभवत्वात् सर्वरोगाणाम् । तदुक्तम् ।

"नमोऽस्तु रुद्रेभ्यो ये के च पृथिव्यां येषामन्नं वातो वर्षमिषवः"

इति । तस्याः किं दिद्युतः । **सा** घ्नती प्राणिनोऽस्मान् **परिवृणक्तु** परिवर्जयतु **नः** । किमन्यदस्तु त्वत्तोऽस्माकम् । **सहस्रं ते स्वपिवात भेषजा** । हे **स्वपिवात**-**स्वाप्तवचन** कस्यचिदपि अनतिक्रमणीयाज्ञ यानि तव **सहस्रं भेषजा**-

1. Bi. mss. क, ख, ग do not read च after पुत्रेषु. 3. Bi. J. conclude X. i. 7 with भवति. 4. *a.* marks verse 6 after इति, as इति ६; *m.* रुद्रः ? 5. *a.* alone adds क before द्युलोकादधि. 8. The mss. क, ख of *bi.* do not read अत एवोक्तमग्न्यधिकारे द्युस्थानो भवति इति. 9. *d.* तस्यां वा, *bi. j.* तस्यां only. 11. *d.* reads पृथिव्यां येषामन्नमिषव इति. 12. *a. d. m.* परिवर्जयतु, *bi. j.* परिवर्तयतु. 13. *m.* भैषजा. 14. *m.* स्वाप्तवचन; *a. d. m* भेषजानि for भेषजा भैषज्यानि of *bi. j.*

1. पुत्रेषु च—Durga and Bi. mss. क, ख, ग omit च after पुत्रेषु.

1. 'तोकम्'—Nigh. II. 2. 2.

1. तोकं तुद्यतेः—'*tudyateh*' should be '*tudateh*', as '*tud*' is a root of the sixth conjugation.

1. 'तनयः'—Nigh. II. 2. 3.

3. अग्निरपि रुद्र उच्यते—Cf. ŚB. V. 2. 4. 13 : यो वै रुद्रः सोऽग्निः, and also ŚB. V. 3. 1. 10 : अग्निर्वै रुद्रः ।; AV. 7. 87. 1 तस्मै रुद्राय नमोऽस्त्वग्नये.

11. Cf. नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवि येषामन्नं वातो वर्षमिषवः—TS. 4. 5. 11; and नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः—VS. 16. 66.

**भेषज्यानि** यैर्बहुभिः बहुप्रकारं भेषजं करोषि भक्तानां तान्यस्मान् प्रति सन्तु । किंच । **मा नः** मा अस्माकं **तोकेषु-पुत्रेषु, तनयेषु-पौत्रेषु च रीरिषः ।** हिंसां नो मा प्रयुङ्क्ष्व इत्येतदाशास्महे ।

**दिद्युत् द्यतेः वा** अवखण्डनार्थस्य । **द्युतेः वा** दीप्त्यर्थस्य । **विक्ष्मापयन्ती चरतीति वा ।** हिंसन्ती चरतीति वा । **तोकम्** इति पुत्रः । स हि नित्यं पित्रा 5 विनयता तुद्यते इदं कुर्विदं मा कार्षीरिति । **तनयं तनोतेः ।** पौत्रम् । तद्ध्यतितरां पितुः सकाशात् ततं भवति । सत्यप्यपत्यनामत्वाविशेषे इहाजामितैव विशेषः । एवमन्यत्रापि समानार्थानामेकवाक्ये विशेष उपेक्ष्य इति दर्शयति ।

**अग्निः अपि रुद्रः उच्यते** इति । विचारानुस्मृतये संकरोपप्रदर्शनम् । **तस्य एषा भवति** अग्नेः रुद्रस्य ॥ ७ ॥ 10

> " जराबोध तद्विविड्ढि विशेविशे यज्ञियाय ।
> स्तोमं रुद्राय दृशीकम् ॥ "

**जरा स्तुतिर्जरतेः स्तुतिकर्मणः । तां बोध । तया बोधयितरिति वा । तद्विविड्ढि । तत् कुरु । मनुष्यस्य मनुष्यस्य यजनाय । स्तोमं रुद्राय दर्शनीयम् ॥** 15

---

1. *a.* भेषजा करोषि. 3. *a. d.* omit नो. 6. *m.* विनयिता. 7. *a. d. m.* अजामितायै, *bh. y.* अजामितैव. 13. R. जरते स्तुतिकर्मणस्तां, Bi. J. जरतेः स्तुतिकर्म°.

---

4. दिद्युत्—Cf. 'दो अवखण्डने' Dhâtup. 4. 42. Also 'द्युत दीप्तौ,' Dhâtup. 1. 742.

4. विक्ष्मापयन्ती is from the causal of क्ष्माय्, to shake ; cf. 'क्ष्मायी विधूनने' Dhâtup. 1. 487.

11-12. RS. I. 27. 10 ; SV. 1. 15 ; 2. 1013.

13. जरतेः स्तुतिकर्मणः—Durga does not explain this. The etymology therefore seems to be an addition made to the bhâṣya after Durga. The Dhâtupâṭha gives 'जॄ वयोहानौ' ( 10. 281 ) as the only meaning of the root जॄ.

13. तया बोधयितरिति वा—Durga reads जराबोधयितः instead.

14. विविड्ढि=कुरु; cf. Dhâtup. 3. 13, 'विष्लृ व्याप्तौ '.

14. स्तोमं—Durga does not repeat this word in his commentary.

इन्द्र इरां दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयत इति वेरां धारयत इति वेन्दवे द्रवतीति वेन्दौ रमत इति वेन्धे भूतानीति वा ।

"तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वम् ।"

5 इति विज्ञायते । इदं करणादित्याग्रायणः । इदं दर्शनादित्यौपमन्यवः । इन्दतेर्वैश्वर्यकर्मणः । इञ्छत्रूणां दारयिता वा, द्रावयिता वादरयिता च यज्वनाम् । तस्यैषा भवति ॥ ८ ॥

**जराबोध**–इति । शुनःशेपस्यार्षम् । "अश्वं न त्वा वारवन्तम्" इति एतस्मिन् सूक्ते प्रातरनुवाके विनियोगः । येयं मया तव **जरा–स्तुति**रुच्यते भगवन्नग्ने रुद्र **तां** 10 त्वं **बोध**–बुध्यस्व । अथवा । हे जरा**बोधयितः** । स हि जरया–स्तुत्या होतृत्वे वर्तमानोऽभिमतमर्थं यजमानानां संपादयन् देवान् बोधयति । **तत् विविड्ढि तत् कुरु विशेविशे** मनुष्याय यज्ञियाय यज्ञसंपादिने जनाय यत् त्वया यज्ञे कर्तव्यम् ।

2. Bi. mss. क, ख, ग read द्रवत इति. 4. Mss. क, ख, ग of Bi. read समैन्धत for समैन्धन् of Bi. J. R. 5. Bi. J. R. आग्रयण इदं, C. आग्रायण इदं. 6. Bi. J. इन्दतेर्, R. इन्द्रतेर्; C. इं छत्रूणां, D. इन्द्रात्रूणां, R. इञ्च्छत्रूणां, Bi. J. इदञ्छ°. 7. Bi. J. conclude X. i. 8 with भवति. 8. *a.* marks verse 7 after इति, as इति७. 11. *m.* omits देवान् before बोधयति.

2. **इरां धारयत इति** वा—This is omitted by Durga.

2. इन्दवे **द्रवतीति** वा.—Bi. mss. क, ख, ग read **द्रवत इति** for द्रवतीति.

2–3. इन्धे भूतानीति वा—Cf. स योऽयं मध्ये प्राण एष एवेन्द्रस्तानेष प्राणान्मध्यत इन्द्रियेणैन्ध यदैन्ध तस्मादिन्ध इन्धो ह वे तमिन्द्र इत्याचक्षते परोक्षम् । S'B. VI. 1. 1. 2; तं वा एतमिन्ध सन्तमिन्द्रमित्याचक्षते परोक्षेणेव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः—ŚB. XIV. 5. 9. 2.

5. इति विज्ञायते—The quotation is not traced. Cf. Chând. Up. 5. 1. 13.

6. **इञ्छत्रूणां**—Durga does not read इन्.

8. अश्वं न त्वा etc.—RS. I. 27.

9. विनियोगः—Âśv. Śrau. Sû. 4. 13.

12. मनुष्याय यज्ञियाय—Durga has मनुष्याय यज्ञियाय for **मनुष्यस्य मनुष्यस्य यजनाय** of the *bhâṣya*.

ततः तुभ्यं **रुद्राय,** देवानां स्तोत्रे, स मनुष्यः **दृशीकं-दर्शनीयं** श्रवणीयं-श्रवणार्हं व्यपगतदोषं स्तोत्रमुच्चारयिष्यति ॥

**इन्द्रः** (४) कस्मात् । **इरां दृणाति इति वा ।** इराम्-अन्नं व्रीह्यादि दृणाति-विदारयति । इराशब्दात् पूर्वपदं दृणातेरुत्तरपदम् । वर्षक्लेदितमङ्कुरं बीजं भिनत्ति । तदिन्द्रकारितम् । सोऽयम् इरादारिः सन् इन्द्रः इति परोक्षेणोच्यते यथा 'अग्रणीः 5 सन्नग्निः' इति । विज्ञायते हि ।

"परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः"

इति । सर्वत्रैवं देवताभिधेयेषु । अभिधानत एव हि देवतात्मनस्तत्त्वमन्तर्णीय व्यवधाय आत्मानमविदुषां परोक्षीकृत्य नित्यं वर्तते । तां तु विद्वांसस्तदभिधानव्युत्पत्तिद्वारेण विवृत्य दैवेन चक्षुषा मनसोपजातदिव्यदृष्टयो दृष्ट्वा ताद्भाव्यं प्रतिपद्यन्ते इति तदभिधानव्युत्पत्तौ 10 कृत्स्नः पुरुषार्थ आहितः । इन्द्रश्च भूयिष्ठभाक् प्राणदेवतानामुभयोरध्यात्माधिदैवतयोरिति तदभिधानमाचार्योऽतितरां निरवोचत् । **इरां ददाति इति वा ।** तदेव पूर्वपदं ददातेरुत्तरपदम् । यो वर्षद्वारेणासौ इरामन्नं ददाति सोऽयम् इरादः-इरादाता-इन्द्रः । **इरां दधाति इति वा ।** तदेव पूर्वपदं दधातेर्दानार्थस्य धारणार्थस्य वा उत्तरपदम् ।

1. *a. d.* देवतानां for देवानां; *a.* alone omits श्रवणीयं. 2. *bi. j.* add, after उच्चारयिष्यति, the verse—"यो अग्नौ रुद्रो etc. for which see the foot-note below on स्तोत्रम्; *a. d.* omit the verse. 5. *a. d.* तदिन्द्रकारितं, *bi. j.* and others तमिन्द्रकारितम्; *a. d. m.* इराद (*m.* दा)रिः, *bi. j.* इरादारः; *m.* यथाग्रहणिः, *bi. j.* यथा अग्रणीः. 8. *bi. j.* and others सर्वत्रैवं देवताभिधानेष्वभिधानत एव. 12-13. *d.* ददातेरुत्तरपदम्, *bi. j. m.* ददातिरुत्तरपदम्. 14. *m.* reads तदेव पूर्वपदं दधातेर्दानार्थस्य धारयितेद्रः ॥ इद्रवे द्रवतीति । इंदुश° *i. e.* omits the words धारणार्थस्य वा उत्तरपदम् । सोऽयम् इराधः इरा and further from इरां दारयति.. ..to इन्द्रः (p. 966, ll. 1-2).

2. स्तोत्रम्—The reference is to AS. VII. 87. 1.—"यो अग्नौ रुद्रो यो अप्स्व१न्तर्य ओषधीर्वीरुध आविवेश । य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमो अस्त्वग्नये ॥" इति.

3. 'इन्द्रः'—Nigh. V. 4. 4.

5-6. यथा अग्रणीः सन्नग्निः इति—See Nir. VII. 14.

7. परोक्षप्रिया etc.—S'B. 14. 5. 9. 2: 'तं वा एतमिन्धं सन्तमिन्द्रमित्याचक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः'.

सोऽयम् इराधः—इराधारयिता—इन्द्रः। **इरां दारयति इति वा।** तदेव पूर्वपदं दारयतेरुत्तरपदम्। सोयम् इरादारयिता इन्द्रः। **इन्दवे द्रवति इति वा।** इन्दुशब्दात् पूर्वपदं द्रवतेरुत्तरपदम्। इन्दुः सोमः तं पातुमसौ द्रवति। द्रवतिर्गत्यर्थः। सोमपानार्थमसौ द्रवतीति। सोऽयम् इन्दुद्रवः इन्द्रः। **इन्दौ रमते इति वा।** क्रीडत्ययं सोम 5 इतीन्द्रः। **इन्धे भूतानि इति वा।** 'ञि इन्धी दीप्तौ'—इत्यस्य। भूतानि ह्यसावन्नोत्पत्त्याधिदेवस्थोऽध्यात्मस्थो वाऽभ्यवहारयन् विभजमानश्च दीपयति, द्युतिमन्ति करोति। सोऽयम् इन्धः इन्द्रः। **तत्** इदमपरमिन्द्रस्य इन्द्रत्वं ब्राह्मणे उच्यते। **यदेनं** मध्यतोऽवस्थितं शरीरस्य **प्राणैः** प्राणभावेन विष्टभ्येतरान् प्राणान् वागादीनितरप्राणवृत्तिमाहाभाग्यसंप्रदानेन

10 "यदहं विशिष्टोऽस्मि त्वं तद्विशिष्टोऽसि"

इत्येवमादिना प्राणाधिदेवताः **समैन्धन्** समदीपयन् संतानार्थं

**"तदिन्द्रस्येन्द्रत्वमिति विज्ञायते।"**

इन्धे भूतानीति कर्तरि, प्राणैरेनं समैन्धतेति कर्मणि। **इदंकरणाद् इति आग्रायणः।** इदंशब्दात् पूर्वपदं करोतेरुत्तरपदम्। इदमसौ सर्वमकरोदिति। सोऽयम् 15 इदंकरः इन्द्रः। **इदं दर्शनात् इति औपमन्यवः।** इदं पूर्वपदं दृशिरुत्तरपदम्। इदमसावद्राक्षीत् सर्वमिति। सोऽयम् इदंदर्शी इन्द्रः। **इन्दतेः वा ऐश्वर्यकर्मणः।** इन्देः पूर्वपदं द्रवतेः द्रावयतेः वा उत्तरपदम्। किमसौ द्रवति दारयति वा इति। **शत्रूणां दारयिता वा द्रावयिता वा।** किमुक्तं भवति। ईश्वरश्चासौ द्रावयिता

1. *d.* इरां धारयता for इराधारयिता; *d.* दारयते for दारयति· 2. *d.* सोयमिरां दारयतीद्रः; *m.* इंद्रवे, *bi. j.* इन्द्वे; *m* does not read वा after द्रवतीति· 4. *a. d.* read क्षरत्ययं for क्रीडत्यय, and possibly सोमः for सोमे· 5. *d.* reads इन्धी only and omits ञि before it. 6. *d.* omits वा before अभ्यवहारयन्· 8. *a. d. m.* omit प्राणैः. 10. *a. d.* वसिष्टः for विशिष्टः in both the places. 13. *a.* only reads इन्धभूतानि ? *d.* प्राणैरेनं समैन्धते कर्मणि ? 13–14. *a. d. m.* आग्रायणः, *bi. j.* आग्रयणः. 15. *d. m.* इदकरः सन् इंद्रः; *d.* omits दृशिरुत्तरपदम्. 17. *a. d. m.* दारयतेः for द्रावयतेः; *d.* दारयति च इति for दारयति वा इति· 18. *d. m.* omit वा after दारयिता; *d. m.* add च after द्रावयिता.

5. 'ञि इन्धी दीप्तौ'—Dhâtup. 7. 11.

10. यदहं विशिष्टोऽस्मि—See Chhân. Up. 5. 1. 13.

16. इन्दतेः वा ऐश्वर्यकर्मणः—Cf. Dhâtup. 1. 63, 'इदि परमैश्वर्ये'.

शत्रूणाम् । अथवा । ईश्वरश्चासौ दारयिता च शत्रूणामितीन्द्रः । अथवा । ईश्वरश्चासौ **आदरयिता च यज्वनाम्** । आदरकर्ता यज्वनामुपरि । **तस्य एषा भवति** ॥ ८ ॥

" अर्दर्दरुत्समसृजो वि खानि त्वमर्णवान् बद्बधानाँ अरम्णाः ।
महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन् ॥ "　5

**अदृणा उत्सम् । उत्स उत्सरणाद्वोत्सदनाद्वोत्स्यन्दनाद्वोनत्तेर्वा । व्यसृजोऽस्य खानि । त्वमर्णवानर्णस्वत एतान्माध्यमिकान् संस्त्यायान् बाबध्यमानानरम्णाः । रम्णातिः संयमनकर्मा । विसर्जनकर्मा वा । महान्तमिन्द्र पर्वतं मेघं यद्व्यवृणोर्व्यसृजोऽस्य धारा, अवहन्नेनं दानवं दानकर्माणम् । तस्यैषापरा भवति** ॥ ९ ॥　10

**अर्दर्दरुत्सम्**—इति । गातोरात्रेयस्यार्षम् । **उत्सः**—मेघः । स कस्मात् । **उत्सदनाद् वा** । उत्पूर्वस्य सदेः । ऊर्ध्वमसौ सन्न इत्युत्सः । उत्पूर्वस्य वा स्यन्दतेः ।

1. *d. m.* शत्रूणामितीन्द्रः, *bi. j.* do not add इतींद्रः after शत्रूणाम्. 2. *d. m.* add च before आदरयिता. 4. R. असृजो वि खानि. 6. Bi. mss. क, ख, ग read उन्नयनात् for उनत्तेः. 7. Bi. mss. क, ख, ग and R. माध्यमिकान्संस्त्यायान्, Bi. माध्यमकान्सस्त्यायान्. 8. Bi. mss. क, ख, ग read बाबध्यमानानरम्णा. 9. R. J. अवहन्, Bi. अवाहन्. 10. Bi. J. conclude X. i. 9. with अपरा भवति. 11. *a.* marks verse 8 after इति, as इति८. 11-12. *d.* omits वा after उत्सदनात्.

4-5. RS. V. 32. 1; SV. 1. 315.

6. **अदृणाः**—Durga does not explain **अदृणाः**.

6. **उत्सरणात्**—Durga does not give the etymology **उत्सरणाद्वा**, C. R. Bi. J. have it.

6. Bi. mss. क, ख, ग read उन्नयनात् for उनत्तेः.

8. Durga reads **बाध्यमानान्** for बाबध्यमानान् (see page 968, l. 6 ).

8. Durga does not read **वा** after विसर्जनकर्मा.

9. **दानवं**—Bi. mss. क, ख, ग do not read **दानवं**. Durga has it.

12. स्यन्दतेः—*Cf.* ' स्यन्दू प्रस्रवणे ', Dhâtup. 1. 762.

उपर्यसाववस्थितः स्यन्दतीत्युत्सः । **उनत्तेः वा** । 'उन्दी क्लेदने' इत्यस्य । क्लेदयत्यसौ। तम् **उत्सं**–मेघं हे भगवन् **इन्द्र** त्वम् **अदर्दः** । दारितवानसि त्वम् । दारयित्वा च जर्जरीकृत्य तस्य उत्सस्य **असृजः वि खानि** । बिलानि विवृतानि त्वमकरोः उदकनिर्गमनद्वाराणि । स **त्वममुना** प्रकारेण **अर्णवान् अर्णस्वतः** अर्णसा उदकेन
5 तद्वतः **एतान् माध्यमिकान् संस्त्यायान्** मेघसंघातान् उदकभारेणातिगुरुणा **बाध्यमानान्** यथाकालम् **अरम्णाः** विसृष्टवानसि । **रम्णातिर्धातुः संयमनकर्मा** अन्यत्र । तद्यथा

" सविता यन्त्रैः पृथिवीमरम्णात् "

इत्यत्र । इह पुनर्मेघविदारणसंबन्धात् **विसर्जनकर्मा** । किंच । **महान्तम् इन्द्र**
10 योऽप्यतिमहान् पर्वतो मेघः केनचिदप्यन्येनाशक्यो विवृतद्वारः कर्तुं तमपि **वि यद् वः यद् व्यवृणोः** विवृतम् अपावृतोदकनिर्गमनद्वारमकरोः । विवृत्य च **सृजः वि धाराः । व्यसृजः धाराः** त्वम् उदकधाराः पुनः पुनः **अवहन्** अवघ्नन् **दानवम्** उदकदातारं मेघम् । य एतदकार्षीः त्वं स इदं नामास्माकं कुरुष्वेति ।

**तस्य एषा अपरा भवति** । सा पुनः किमर्थम् । उक्तं हि । 'अथास्य कर्म
15 रसानुप्रदानं वृत्रवधो या च का च बलकृतिः' इति । तदेतदिह रसानुप्रदानं वृत्रवधश्च दर्शितम् । बलकृत्युपप्रदर्शनार्थमपरा उदाह्रियते ॥ ९ ॥

**" यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत् ।**
**यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥"**

---

1. *bi. j.* स्यन्दाति, *m.* स्यन्दयति; *m.* उंदी इ क्लेदन इत्यस्य. 3. *a.* वलानि for बिलानि, *bi. m.* विलानि, *d.* बालानि. 5. *a.* मध्यमकान्, *bi. j.* माध्यमिकान्, *d.* माध्यमकान्. 6. *m.* वाध्यमानान्. 9. *a. d. m.* add इन्द्र after महान्तम्. 15. *a. d. m.* या च काचित् बलकृतिः etc. 16. *m.* दर्शितः, *bi. j.* दर्शितम्.

---

1. 'उन्दी क्लेदने'—Dhâtup. 7. 20.

8. RS. X. 149. 1.

14. उक्तं हि—Nir. VII. 10.

17-18. RS. II. 12. 1; AV. 20. 34. 1; TS. 1. 7. 13. 2; MS. 4. 12. 3 : 186. 4-5; KS. 8. 16; AB. 5. 2. 1; KB. 21. 4; 22. 4.

**यो जायमान एव प्रथमो मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत् पर्यगृह्णात् पर्यरक्षदत्यक्रामदिति वा । यस्य बलाद् द्यावापृथिव्यावप्यबिभीतां नृम्णस्य मह्ना, बलस्य महत्त्वेन । स जनास इन्द्र इत्यृषेरर्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता ॥**

**पर्जन्यस्तृपेराद्यन्तविपरीतस्य । तर्पयिता जन्यः । परो जेता वा । जनयिता वा । प्रार्जयिता वा रसानाम् । तस्यैषा भवति ॥ १० ॥** 5

**यो जात एव प्रथमः**–इति । गृत्समदस्यार्षम् । इन्द्राय मनस्वते पुरोडाशस्य याज्या । गृत्समदमिन्द्रवरप्रदानादैन्द्रं रूपं बिभ्रतमिन्द्रोऽयमिति मन्यमाना जिघांसवोऽसुराः किल मरुद्गणैः विनाकृतोऽयमिदानीमेकः शक्यो हन्तुमिति परिवव्रिरे । स किल भीतोऽनेन सूक्तेनेन्द्रं तुष्टाव । आत्मानं च ब्राह्मणं परेभ्यः प्रतिवेदयांचकार । 10

**यः जातः एव** जातमात्र एव **प्रथमः** मुख्यः सर्वभूतानां प्रति मुख्यतां संपेदे । **मनस्वी** च मेधावी । अन्ये हि कालेन मुख्याः संपद्यन्ते मेधाविनश्च । **देवो देवान् क्रतुना पर्यभूषत्** । सत्यपि देवत्वाविशेषे इतरान् **देवान् क्रतुना–कर्मणा पर्यभूषत्–पर्यगृह्णात्** परिगृहीतवान् स्वामित्वेन । **पर्यरक्षद्वा** मुख्यत्वात् । **अत्यक्रामत् वा** प्रभावेण । **यस्य** च **शुष्मात्** शारीराद् **बलात् रोदसी–द्यावापृथिव्यौ अपि अभ्यसेताम्–अबिभीताम्** । **नृम्णस्य मह्ना बलस्य** 15

6. Bı. J. conclude X. ı. 10. with भवति. 7. *a.* marks verse 9 after इति, as इति९; *d.* reads the *pratīka* up to मनस्वान्. 7–8. *a. d.* इन्द्राय मनस्वते पुरोडाशस्य याज्या, *bı.* इन्द्राय नमस्वते पुरोडाशः तस्य याज्या, *m.* इन्द्राय मनस्वते पुरोडाशस्तस्य याज्या. 10. *a. d.* add च after इन्द्रं. 12. *bı.* मनस्वी च मेधावी, *a. d.* मनस्वी मेधावी. 14. *d.* reads पर्यरक्षत् only and omits वा, *bı. j.* पर्यरक्षद्वा. 15. *d. m.* प्रभावेन; *a. d.* omit च after यस्य; *a. d.* and mss. क, ख of *bı.* omit शारीरात्. 15–16. *a. d. m.* omit द्यावापृथिव्यौ अपि. 16. *m.* अविभीतां, *bı. j.* अबिभीताम्; *m.* वलस्य, *bı. j.* बलस्य.

1. **यो जायमान एव**—Bı. mss. क, ख, ग read यो जात एव for यो जायमान एव. Durga also reads **यो जात एव,** see l. 11, below.

2. **पर्यभवत्**—Durga does not read **पर्यभवत्.**

7–8. पुरोडाशस्य याज्या—MS. 10. 2. 12.

सेनालक्षणस्य **महत्त्वेन** अतिमहदसह्यमस्य बलमवश्यमयमावां सादयिष्यतीत्येवमति-महत्यावेते द्यावापृथिव्यावबिभीतां यस्य शुष्मात् **जनासः** हे असुरजनाः **स इन्द्रः** नाहमिन्द्रः । ब्राह्मणोऽहं, तत्प्रसादादेवावाप्ततद्रूप **इति** ।

**ऋषेः दृष्टार्थस्य** अनुभूतेन्द्रमैत्रस्येन्द्रवयस्यस्य गृत्समदस्य इन्द्रं प्रति **प्रीतिः**
5 स्तुतिः **भवति आख्यानसंयुक्ता** आख्यानसंबन्धात् । अतश्च दर्शयति मन्त्राणा-मैतिहासिकोऽप्यर्थ उपेक्षितव्योऽसावपि तेषां विषय इति । अथवा । **दृष्टार्थस्य** इति देवतार्थं सतत्त्वतो दृष्टवतो भावितान्तःकरणस्य **प्रीतेः** अतिहर्षात् **आख्यानसंयुक्ता** अन्येभ्यः । कथनसंयुक्तेत्यर्थः ॥

**पर्जन्यः** (५) **तृपेराद्यन्तविपरीतस्य** । 'तृप तृप्तौ'–इत्यस्य धातोः । स कथं
10 भवति । आद्यन्तविपर्ययेण । अतस्तमाद्यन्तविपर्ययं स्वयमेव दर्शयति । **तर्पयिता** स एव भवति । किम् ऐकदेशिकः । न इत्युच्यते । **जन्यः** सर्वजनपदतर्पयिता । अथ-वैवमन्यथा स्यात् । **परो जेता वा** । परः प्रकृष्टो जेता पर्जन्यः । परशब्दात् पूर्वपदं जयतेरुत्तरपदम् । परो **जनयिता वा** । प्रकृष्टो जनयिता । तदेव पूर्वपदं जनयते-रुत्तरपदम् । **प्रार्जयिता वा** । कस्य । **रसानाम्** । प्रपूर्वस्यार्जयतेः पर्जन्य. ।
15 स हि रसान् प्रकटीकरोति । **तस्य एषा भवति** ॥ १० ॥

**" वि वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात् ।**
**उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः ॥ "**

**विहन्ति वृक्षान् । विहन्ति च रक्षांसि । सर्वाणि चास्माद् भूतानि**

---

1. *a. d.* omit सेनालक्षणस्य; *d.* omits बलं. 2. *m.* अविभीतां; *a. d. m.* omit जनासः. 3. *a. d. m.* अवाप्ततद्रूपः, *bi.* आप्ततद्रूपः. 5. *m.* तुष्टिः for स्तुतिः; *a. d. m.* omit आख्यानसंयुक्ता; *a. d.* आख्यानसंबंधा. 7. *bi.* ms. ग does not have दृष्टवतो; *a. d. m.* तत्रोपजातप्रीतेः for प्रीतेः of *bi. j.*; *d.* आख्यानयुक्ता. 10. *a. d. m.* यतः for अतः. 17. Bi. R. यत्पर्जन्यं स्तनयन्, J. यत्पर्जन्यः स्तनयन्.

---

9. ' पर्जन्यः'—Nigh. V. 4. 5.
9. ' तृप तृप्तौ '—Dhâtup. 6. 27.
16–17. RS. V. 83. 2.

**विभ्यति महावधात् । महान् ह्यस्य वधः । अप्यनपराधो भीतः पलायते वर्षकर्मवतो, यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः पापकृतः ॥**

**बृहस्पतिर्बृहतः पाता वा, पालयिता वा । तस्यैषा भवति ॥ ११ ॥**

" **वि वृक्षान् हन्ति** "–इति । अत्रेरार्षम् । कारीर्यां दिगुपस्थाने विनियोगः । **वि वृक्षान् हन्ति, विहन्ति वृक्षान् पर्जन्यः** अशनिपातैः । कदा । यदा 5
तस्करादीन् अनाकालप्रभवान् **दुष्कृतः–पापकृतः,** वर्षेण ओषधीरभिनिष्पादयन् **स्तनयन् हन्ति**–उपशमयति सुभिक्षं कुर्वन् तदा । **विहन्ति च रक्षांसि** । विविधं हन्ति क्रूरकर्मणः । **विश्वं बिभाय, सर्वाणि चास्माद्भूतानि विभ्यति महावधात्** पर्जन्यात् । कथम् । **उतानागा ईषते** । एवं नाम महावधात् अस्मात् सर्वाणि भूतानि विभ्यति येन **अनागाः** अपि, **अनपराधोऽपि** सन् सर्व एव 10
अस्मात् **वर्षकर्मवतः** स्तनयित्नुशब्दैरशनि मुञ्चतः **ईषते–पलायते** मामयं **स्तनयन् हन्ति** इति मन्यमानः । सोयमेवमतिमहानुभावो भगवान् पर्जन्यः स वर्षत्वस्माकमिति ॥

'**बृहस्पतिः**' (६) कस्मात् । **बृहतः पाता वा पालयिता वा** । **बृहतः**–महतोऽस्य जगतः उदकस्य वा **पाता**–रक्षिता । **पालयिता** अपि रक्षितैव । 15
धात्वन्यत्वमर्थैकत्वम् ॥ **तस्य एषा भवति** ॥ ११ ॥

---

2. Bi. R. यत्पर्जन्य स्तनयन्. 3. Bi. J. conclude X. i. 11 with भवति. 4. *a.* marks verse 10 after इति, as °न्तीति१०. 5. *d.* omits विहन्ति. 6. *a. d.* नाकालप्रभवान्; *a. d. m.* omit दुष्कृतः, *bi. j.* read it. 6–8. *m.* omits from रभिनिष्पादयन् to रक्षांसि वि and reads as वर्षेणोषधी विधं हंति क्रू°. 8. *m.* विश्वं विभाय; *m.* विभ्यति. 10. *m.* विभ्यति for बिभ्यति. 11. *m.* °रशनि मुञ्चतः. 12. *a. d. m.* omit स्तनयन्; *a. d. m.* read योयं for सोयं.

---

1. Durga omits the passage **महान् ह्यस्य वधः,** and the word **भीतः.**

4. विनियोगः—See Âśva. Śrau. Śû. 2. 13.

6. Mss. *a. d. m.* of Durga omit **दुष्कृतः,** *bi. j.* have it.

14. 'बृहस्पतिः'—Nigh. V. 4. 6.

"अश्नापिनद्धं मधु पर्यपश्यन्मत्स्यं न दीन उदनि क्षियन्तम् ।
निष्टज्जभार चमसं न वृक्षाद् बृहस्पतिर्विरवेणा विकृत्य ॥"

अशनवता मेघेनापिनद्धं मधु पर्यपश्यन्मत्स्यमिव दीन उदके निवसन्तम् । निर्जहार तच्चमसमिव वृक्षात् । चमसः कस्मात् । चमन्त्य-
5 स्मिन्निति । बृहस्पतिर्विरवेण शब्देन विकृत्य ॥

ब्रह्मणस्पतिर्ब्रह्मणः पाता वा, पालयिता वा । तस्यैषा भवति ॥ १२ ॥

**अश्नापिनद्धम्**–इति । अयास्यस्याङ्गिरसस्यार्षम् । **अश्ना–अशनवता**–व्यापनवता **मेघेन अपिनद्धम्** आत्मनो मध्यमतिनीय नद्धं बद्धं विवृतं व्यवहितमदृश्यमन्यैः **बृहस्पतिः मधु**–उदकं **पर्यपश्यत्** सर्वतोऽपश्यत् । कथम् । **मत्स्यं न दीन**
10 **उदनि क्षियन्तम् । मत्स्यं न–इव दीने उदनि–उदके** उपक्षीयमाणे उदके क्षीणप्राये **क्षियन्तं–निवसन्तम् ।** यथा मत्स्यबन्धोऽल्पे उदके जिघृक्षुर्मत्स्यं परिपश्येच्छक्यो ग्रहीतुमयमिति एवं पर्यपश्यत् । **निष्टज्जभार चमसं न वृक्षात् । तच्** च मधु दृष्ट्वा **निर्जभार–निर्जहार**–निर्हृतवान् । कथम् । चमसं न वृक्षात् । यथा कश्चित् कुशलः शिल्पी वृक्षमध्यात् **चमसं**–यज्ञपात्रं निर्हरेत्–निष्पादयेत् एवं
15 निर्जहार **बृहस्पतिः** । अत एवोदकनिर्हरणात् मध्यमः । कथमसौ निर्जहार । **विरवेण विकृत्य** भीषणेन अतिमहता रवेण **शब्देन** संक्षोभ्य । मेघं स्रस्तसर्वाङ्गसंधिबन्धनं कृत्वा विक्लवं तत एवं विह्वलीभूतं विकृत्य समन्ततो विशकलीकृत्य एवं निर्जहार मधु यो बृहस्पतिः सोऽस्माकमपीदं करोत्विति ।

**चमसः कस्मात् ।** चमेर्भक्षणार्थस्य । तत्र हि सोमश्चम्यते ॥

---

6. Bi. J. conclude X. i. 12 with भवति. 7. *a.* marks verse 11 after इति, as इति[11]; *a. d. m.* omit अश्ना. 8. *a. d.* omit बद्धं after नद्धं. 10. *m.* क्षयन्त for क्षियन्तं; *a. d. m.* omit न after मत्स्यं; *a. d. bi* omit उदनि. 10–11. *a. d.* उपक्षीयमाणे उदके क्षीणप्राये क्षियन्तं etc., *bi. j. m.* उदके उपक्षीयमाणप्राये क्षियन्तं. 11. *m.* यथा मत्स्यबंधोऽल्पे उदके. 13. *a. d. m.* omit निर्जहार. 15–16. *m.* विरवेणाविकृत्य. 19. *a. d.* omit कस्मात् after चमसः.

---

1–2. RS. X. 68. 8: AV. 20. 16. 8.

4–5. Durga omits चमन्त्यस्मिन्निति.

'**ब्रह्मणस्पतिः**' (७) कस्मात् । **ब्रह्मणः पाता वा पालयिता वा** । ब्रह्म अन्नम् ऋगादि वा । तस्योभयस्याप्यसौ वर्षेणौषधीरभिनिष्पादयन्पाता संपद्यते । वर्षाभावे ह्येतदुभयमुत्सीददिति ॥ **तस्य एषा भवति** ॥ १२ ॥

**"अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभि यमोजसातृणत् ।**

**तमेव विश्वे पपिरे स्वर्दृशो बहु साकं सिसिचुरुत्समुद्रिणम् ॥"**

**अशनवन्तमास्यन्दनवन्तमवातितं ब्रह्मणस्पतिर्मधुधारमभि यमोजसा बलेनाभ्यतृणत् तमेव सर्वे पिबन्ति रश्मयः सूर्यदृशो, बह्वेनं सह सिञ्चन्त्युत्समुद्रिणमुदकवन्तम् ॥ १३ ॥**

**अश्मास्यमवतम्**–इति । गृत्समदस्यार्षम् । अश्मशब्दात् **अशनवन्तम्** इति, आस्यशब्दात् **आस्यन्दनवन्तम्** इति भाष्यकारश्चकार । तथा सामर्थ्यमपेक्ष्य । किमुक्तं भवति । उदकव्यापनक्रियया तद्वन्तम्, आस्यन्दनक्रियया चोदकप्रक्षरणक्रियया तद्वन्तम् । **अश्मास्यं**–मेघं **मधुधारम्**, उदकं धारयितारं, **यम् ओजसा–बलेन अभ्यतृणत्**–अभ्यहनत् **ब्रह्मणस्पतिः तम् अवतम्**–**अवातितम्** अवाडतितं भूमिम् उदकभावेन गतं पुनरादानकालमुदकस्य प्राप्य **तम् एव विश्वे–सर्वे पपिरे–पिबन्ति** । तदुदकमाददते । के पुनस्ते । **स्वर्दृशः** सूर्यस्य **रश्मयः** । स्वरिव ये दृश्यन्ते ते सूर्यसमानदर्शनाः । स्वर्भावेन वा सूर्यभावेन ये मण्डलीभूता दृश्यन्ते ते

---

1. *a. d.* ब्रह्मणस्पतिः,-*bi. m.* ब्राह्मणस्पतिः; *m.* ब्राह्मणः पाता. 2–3. *bi.* ms. ग omits the passage from तस्योभयस्याप्यसौ. .... to °मुत्सीददिति, *m.* reads it; *d. m.* अभिनिष्पादयन् पाता संपद्यते, *bi. j.* अभिनिष्पादयिता संपद्यते. 8. Bi. J. conclude X. 1. 13 with उदकवन्तम्. Here ends also the *first pâda* of the *tenth* adhyâya, इति दशमाध्यायस्य प्रथमः पादः. 9. *a.* marks verse 12 after इति, as इति[१२]. 12. *a. d. m.* add अवतं after अश्मास्यं. 13. *d. m.* अवातितम् for अपातितम् of *bi. j.*; *a. d.* and the *bi.* ms. क read अवागतितं for अवाडतितं of *bi. j.* 14. *a. d. m.* omit सर्वे.

---

1. 'ब्रह्मणस्पतिः'—Nigh. V. 4. 7.

4–5. RS. II. 24. 4.

पिबन्ति । पुनश्च प्राप्य तदुत्सर्गकालं **बहु साकं बहु** तदुदकं **साकं** सहभूताः मण्डलात् अवाञ्चः आवृत्य **एनम्** अन्तरिक्षे **उत्सं**-मेघम् **उद्रिणम्**-**उदकवन्तं** कुर्वन्तः **सिञ्चन्ति ।** तं च पुनरेवं मेघं यो ब्रह्मणस्पतिः लोकानुग्रहाय प्रतिसंवत्सरं तृणेढि सोऽस्माकमिदं नाम करोत्विति ॥ १३ ॥

5 **क्षेत्रस्य पतिः । क्षेत्रं क्षियतेर्निवासकर्मणः । तस्य पाता वा, पालयिता वा । तस्यैषा भवति ॥ १४ ॥**

'**क्षेत्रस्य पतिः**' (८) कस्मात् । **क्षेत्रं** तावत् **क्षियतेः निवासकर्मणः** तदाश्रयेण हि ग्रामे क्षियन्ति-निवसन्ति कुटुम्बिनः । **तस्य पाता वा पालयिता वा** मध्यमः । तत्कर्मोपपत्तौ हि क्षेत्रस्य क्षेत्रत्वसाफल्यम् । यदा हि मध्यमेन वृष्टं 10 भवति अथ क्षेत्रं सफलं भवति । विगृहीतमेव समाम्नातम् । निगमे तथा दृष्टत्वात् । **तस्य एषा भवति** ॥ १४ ॥

**"क्षेत्रस्य पतिना वयं हितेनेव जयामसि ।**

**गामश्वं पोषयित्न्वा स नो मृळातीदृशे ॥"**

**क्षेत्रस्य पतिना वयं सुहितेनेव जयामो, गामश्वं पुष्टं पोषयितृ**

---

1. *a. d.* omit साकं before सहभूताः. 2. *d.* अर्वाञ्चः for अवाञ्चः; *a.* only reads एतम् for एनम्. 3. *a. d.* सिञ्चन्ति, *bi.* सिञ्चति. 4. After ॥ १३ ॥, *a. d. m.* read **पंचदशस्य प्रथमः पादः**, *bi. j.* read इति ऋज्वर्थायां निरुक्तवृत्तौ चतुर्दशाध्यायस्य ( दशमाध्यायस्य ) प्रथमः पादः ॥ १०, १ ॥. 5. Bi. J. read **द्वितीयः पादः ॥** before क्षेत्रस्य पतिः. 6. Bi. J. conclude X. ii. 1 with तस्यैषा भवति. 8. *a. d. m.* तदपाश्रयेण; *a. d.* omit निवसन्ति. 13. Bi. J. पोषयित्न्वा, R. पोषयित्वा; Bi. R. मृळातीदृशे, Bi. mss. क, ख, ग and J. मृलातीदृशे.

---

5. क्षेत्रं क्षियतेः—Cf. 'क्षि क्षये' Dhâtup. 1. 236.

7. 'क्षत्रस्य पतिः'—Nigh. V. 4. 8.

12-13. RS. IV. 57. 1. *Cf.* ÂGS. 2. 10; Âśva. Śrau. Sû. 9. 11.

**चाहरेति । स नो मृळातीदृशे । बलेन वा धनेन वा । मृळतिर्दान-कर्मा । पूजाकर्मा वा । तस्यैषापरा भवति ॥ १५ ॥**

**क्षेत्रस्य पतिना वयम्**–इति । वामदेवस्यार्षम् । क्षेत्रस्य पतये चरोः पुरोनुवाक्या । **क्षेत्रस्य पतिना सुष्ठु हितेन** केनचिदाप्तेन मित्रेण **इव** संयुक्ताः सन्तः **वयं जयामः** गवाश्वादीनि धनानि पुष्टानि बलवन्ति **पोषयित्नूणि** पोषणाय 5 समर्थानि । उपनामितद्रव्याणां चास्माकं क्षेत्रस्य पतिना तत्प्रसादादेव तानि भोक्तुं शक्तिरस्तु । कथम् इति । **आ** इत्यस्योपसर्गस्य संबन्धि क्रियापदमध्याजहार भाष्यकारः । **आहर इति** । कोऽर्थः । उपजातशक्तयो वयमेवमाज्ञापयन्तः परिचारकानिदमाहरतेति सर्वद्रव्याणि यथाश्रुवीमहि तथा क्षेत्रस्य पतिरस्मान् मृडयतु । **मृळतिः दानकर्मा । ईदृशे** धनलाभाय भोगाय चास्मान् ददातु–धारयतु । नित्यं स्थिरान् करोतु इत्ये-10 तदाशास्महे ।

**तस्य एषा अपरा भवति** । सा पुनः किमर्थम् । यस्य चरोः एषा पुरोनुवाक्या तत्र ब्राह्मणं भवति ।

" इयं वै क्षेत्रं पृथिव्यस्यामदीनायां प्रतितिष्ठति "

इति । यतः परया वर्षलिङ्गयोपपादयति मध्यस्थानः क्षेत्रस्य पतिरिति । भक्तिमात्रं 15 ब्राह्मणमिति ॥ १५ ॥

---

1. C. मृळातीदृशे, Bi. J. मृलातीदृशे, R. मृळातीदृशे. 1–2. C. मृळतिर्दा°, D. मृळयतिर्दा°, Bi. J. R. मृलतिर्दानकर्मा, and Bi. mss. क, ख, ग, मृलतिरुपदयाकर्मा for मृळतिर्दानकर्मा. 2. Bi. mss. ङ, च and C. D. R. do not read पूजाकर्मा वा, but Bi. J. have it; Bi. J. conclude X. ii. 2 with भवति. 3. *a.* marks verse 13 after इति, as इति[१३]. 4. *m.* सुष्टु; *a. d.* omit इव after मित्रेण, *bi. j. m.* have it. 6. *bi. j. m.* त्वत्प्रसादादेव. 8. *d.* उपजातसूक्तयो 9. *a. d.* यथा स्तुवीमहि for यथाश्रुवी°; *a. d.* मृडतु for मृडयतु of *bi. j. m.*; *bi. j. m.* मृलतिर्दानकर्मा. 12. *a. d.* कस्मात् for किमर्थं. 14. *m.* °मदीयानां for °मदीनायां. 15. *a. d.* मध्यमस्थानः.

---

1. **बलेन वा धनेन वा.**—Durga omits this.

2. **पूजाकर्मा वा**—C. D. R. and Durga omit **पूजाकर्मा वा.**

4. पुरोनुवाक्या—MS. 2. 1. 1.

14. *Cf.* 'इयं वै क्षेत्रं पृथिव्यस्यामदीनायामन्ततः प्रतिष्ठास्यामः'—Kausî. Br. 30.11.

" क्षेत्र॑स्य पते॒ मधु॑मन्तमू॒र्मिं धे॒नुरि॑व॒ पयो॑ अ॒स्मासु॑ धुक्ष्व ।
म॒धु॒श्चुतं॑ घृ॒तमि॑व॒ सुपू॑तमृ॒तस्य॑ नः॒ पत॑यो मृळयन्तु ॥ "

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयोऽस्मासु धुक्ष्वेति । मधुश्चुतं घृतमिवोदकं सुपूतम् । ऋतस्य नः पातारो वा पालयितारो वा 5 मृळयन्तु । मृळयतिरुपदयाकर्मा, पूजाकर्मा वा ।

तद्यत्समान्यामृचि समानाभिव्याहारं भवति तज् जामि भवतीत्येकम् । मधुमन्तं मधुश्चुतमिति यथा । यदेव समाने पादे समानाभिव्याहारं भवति तज् जामि भवतीत्यपरम् ।

" हिर॑ण्यरूपः॒ स हिर॑ण्यसंदृग् " इति यथा ।

10 यथाकथाच विशेषोऽजामि भवतीत्यपरम् ।

" म॒ण्डूका॑ इ॒वोद॒कान् म॒ण्डूका॑ उ॒द॒कादि॑व " इति यथा ॥

---

2. Bi. mss. क, ख ग and J. read मृलयन्तु, Bi. R. मृळयन्तु. 3. Bi. mss. क, ख, ग have पयो अस्मासु, Bi. J. C. R. पयोऽस्मासु. 5. R. Bi. J. read मृलयन्तु । मृलयतिरुपदयाकर्मा पूजाकर्मा वा; Bi. mss. क, ख, ग read मृलयन्तु मृलतिर्दानकर्मा, and omit पूजाकर्मा वा; C. मृळयन्तु मृळयतिरुपदयाकर्मा पूजाकर्मा वा.

---

1-2. RS. IV. 57. 2.

3. धुक्ष्वेति—Durga does not read इति, after धुक्ष्व.

4. पातारो वा पालयितारो वा—Durga does not read वा after पातारो, and omits पालयितारो वा.

5. Bi. mss. क, ख, ग read मृलतिर्दानकर्मा for मृळयतिरुपदयाकर्मा, and omit पूजाकर्मा वा. Durga does not explain मृळयतिरुपदयाकर्मा पूजाकर्मा वा.

5. मृळयतिरुपदयाकर्मा, पूजाकर्मा वा; मृलतिर्दानकर्मा.—The Dhatupatha assigns meanings altogether different from those of Yâska to the root '*mṛḍa*'. *Cf.* 'मृड सुखने' Dhâtup. 6. 46; 'मृड क्षोदे सुखेऽपि' Dhâtup. 9. 44.

8. तज्जामि भवति—*cf.* 'जामि अतिरेकनाम' Nir. IV. 20.

9. RS. II. 35. 10.

11. RS. X. 166. 5.

**वास्तोष्पतिः । वास्तुर्वसतेर्निवासकर्मणः । तस्य पाता वा पालयिता वा । तस्यैषा भवति ॥ १६ ॥**

**क्षेत्रस्य पते**–इति । आर्षं यदेव पूर्वस्याः । विनियोगो महाव्रते । अदित्यै चतुरूपश्चतुःस्तनग्रहः । तस्य तृतीयमनयर्चा गृह्यते । हे **क्षेत्रस्य पते मधुमन्तम् ऊर्मिं** मधुरं–स्वादुम् उदकसंघातं **धेनुः** यथा **पयः** दोग्धि एवम् **अस्मासु धुक्ष्व**–प्रक्षर । किंच । **मधुश्चुतं घृतमिव सुपूतम्** । मधु इव यत् मुहुर्मुहुः श्चोतति । **घृतमिव सुपूतम् उदकम**कलुषम् । तस्य दानेन **ऋतस्य नः पतयो मृळयन्तु । ऋतस्य**–उदकस्य **पतयः**–**पातारः** माध्यमिका देवाः क्षेत्रस्य पतिप्रमुखाः **मृळयन्तु** । नित्यमस्मान् रक्षन्तु पूजयन्तु वा ॥　5

अत एव मन्त्रात् प्रसक्तमतः परं सर्वमन्त्रेषु जाम्यजामिता पदानां चिन्त्यते । जामीति पुनरुक्तस्य संज्ञा । सा पुनरियं निगमत एव । विज्ञायते हि　10

" जामि वा एतद्यज्ञे क्रियते यन्मरुत्वतीयो ग्रहो गृह्यते मरुत्वतीयं शस्यते "

इति । तदेतत् पुनरुक्तं द्विविधम् । समानशब्दार्थम् असमानशब्दार्थं च । तत्र समानशब्दार्थं नाम यदेकमेव पदमेकार्थमेकस्मिन्नेव वाक्याधिकारे पुनरुच्यते । तद्यथा ।

" मन्म रेजति रक्षोहा मन्म रेजति "　15

इति । तदधिकृत्यान्यथाप्रतिसमाधानाशक्तौ वक्ष्यति, 'अभ्यासे भूयांसमर्थं मन्यन्ते'

---

1. Bi. mss. क, ख, ग read वास्तु वसते°, R. Bi. J. C. वास्तुर्वसते°. 2. Bi. J. conclude X. ii. 3 with तस्यैषा भवति. 3. *d. m.* read the *pratīka* up to मधुमन्तमिति; *a.* marks verse 14 after इति, as इति[१४]. 3–4. *a. d.* अदित्यै चतुरूपश्चतुस्तनग्रहः, *m.* °चतूरूप°, *bi. j.* आदित्यै चरुरूपः etc. 5. *m.* मधुरस्वादुम्. 6. *d.* reads मुहुः only once and adds द्यतति after श्चोतति. 7–8. *d. m.* मृलयन्तु, *bi. j.* मृडयन्तु. 9. *m.* मृलयन्तु, *bi. j.* मृडयन्तु. 11. *d. m.* जामीति पुनरुक्तसंज्ञा. 14. *d.* adds च before नाम. 16. *a. d. m.* read तदधिकृत्यान्यथाप्रतिसमाधा(*d.* omits धा)नाशक्तौ etc., *bi. j.* तदधिकृत्यान्याथाप्रति°, *d.* °प्रतिसमानाशक्तौ, *m.* °प्रतिसंधानाशक्तौ.

---

1. Bi. mss. क, ख, ग read वास्तु वसते°, Bi. J. C. R. and Durga, वास्तुर्वसते°.

12. जामि वा etc.—MS. 4. 6. 8.

15. RS. I. 129. 6.

16. वक्ष्यति—See Nir. X. 42.

इति। यत् पुनरसमानार्थं पदमभ्यस्यते तदपुनरुक्तमेव। यदसमानशब्दं समानार्थं च तदसुखप्रतिसमाधानमिति तदर्थमिहोपोद्धन्ति **तद्यत् समान्यामृचि** इति। **तद्** इति वाक्योपादाने। **यत् समान्यामृचि**। एकस्यामृचि। **समानाभिव्याहारं पदं भवति**। समानमर्थमभिव्याहरति। पदान्तरेण यः कश्चित् पूर्वेऽर्धर्चेऽभिहितोऽर्थः
5 तमेव उत्तरेऽर्धर्चेऽभिदधत् **जामि भवति**। तद् **यथा मधुमन्तं मधुश्चुतम् इति**। यो हि मधुश्चुत् अवश्यमसौ मधुमान्। **एकं** तावत् आचार्यमतम्।

**यदेव समाने पादे समानाभिव्याहारं भवति तज्जामि भवतीत्यपरम्**। नानार्धर्चगतयोः समानार्थयोरपि पदयोरसमानपदान्तरव्यवधानात् प्रकृतार्थानुस्मृतये पुनरनुकीर्तनमजाम्येव। किंतु यदेव समाने पादे एकस्मिन् पदान्तरेण व्यवहितं
10 पदं समानार्थं पुनरुच्यते अविच्छिन्नप्रसक्तानुस्मृति तदेव जामीत्यपरम्।

**"हिरण्यरूपः स हिरण्यसंदृग् इति यथा"**

इति। यो **हिरण्यरूपः** सोऽवश्यं **हिरण्यसंदृक्**।

तत् किं पौनरुक्त्ये न तद् योज्यं पदम्। तत्संयोगाद्वा तदसाधु मन्त्रवाक्यम्। न इति उच्यते। **यथाकथाच विशेषोऽजामि भवतीत्यपरम्**। यथाकथंचित् यः
15 कश्चित् स्वल्पोऽपि हि तत्र विशेषो वक्तव्यः। दृष्टानुविधानाच्छन्दसः अर्थानुविधाने यतेत। एवं येन केनचित् स्वल्पेनापि विशेषेण **तदजामि भवतीत्यपरम्**। अपरे पुनः कृतवाक्यार्थपरिसमाप्त्यतिरिक्तं पदं पुनरभ्यस्यमानं निपातवत् पादपूरणत्वेनार्थवदिति प्रतिसमादधते। तदेतदवगतं भवति। इदमेव त्वभीष्टमाचार्यस्य। **यथाकथाच विशेषः** इति। तदर्थमुदाहरति।

3. *m.* यत्सामान्यामृचि. 4. *m.* समानमर्थमभिव्यावहरति पदान्तरेण। यः क°. 5–6. *a. d.* मधुश्च्युतम् and मधुश्च्युत् respectively for मधुश्चुतम् and मधुश्चुत् of *bi. j.* 9. *a. d. m.* पादे, *bi. j.* पदे. 10. *a.* तदेतदेव, *bi. j. m.* तदेव. 10–11. *a. d. m.* add तद्यथा before हिरण्यरूपः etc. 11–12. *d. m.* omit इति after इति यथा. 12. *a.* adds यथा again after इति. 13. *a. d.* तत्किं पुनरुक्त्यै (*d.* क्त्ये) न तद्योज्यं पदं, *m.* तत्किं पौनरुक्त्ये न तद्योज्यं पदं. 15. *a. d.* omit हि after स्वल्पोऽपि. 15–16. *d.* दृष्टानुविधानाच्छन्दसः अर्थानुविधानोयतेनैवं येन केनाचित् etc.; *a.* °अर्थविधानोद्यतेनैवं etc. 16. *bi. j.* °यतेतैवम्। येन etc. 17. *a.* कृत्यवाक्यार्थ° ?

11. RS. II. 35. 10.

"मण्डूका इवोदकान् मण्डूका उदकादिव इति यथा"

इति । एवमादिषु यथा समानशब्देषु असमानशब्देषु च पुनरुक्तेषु यः कश्चिद् विशेषो वक्तव्यः । स कथम् इति । मन्त्रमेव तं व्याचक्ष्महे यत्रैष पादः ।

"योगक्षेमं वं आदायाहं भूयासमुत्तम आ वों मूर्धानमक्रमीम् ।

अधस्पदान्म उद्वंदत मण्डूका इवोदकान् मण्डूका उदकादिव ॥" 5

इति । ऋषभस्यार्षम् । कामतो देवता कल्प्या । विद्विष उच्यन्ते । योगक्षेमं व आदाय । योगो नाम लिप्सितार्थस्य प्राप्तिः । क्षेमो नाम तत्परिपालनम् । हे विद्विषः एतत् उभयं भवद्भ्यः आदाय मदधीनसर्वयोगक्षेमान् युष्मान् कृत्वा सर्वार्थेऽपि अहं भूयासम् उत्तमः उत्कृष्टः युष्माकम् । 'आ वों मूर्धानमक्रमीम्' । उपरि युष्मानधितिष्ठेयम् । ते यूयमाक्रान्तमूर्धानो मया मे मम अधस्पदात् पादयोरधो वर्तमानाः मन्मुखप्रेक्षाः 10 अस्वाधीनसर्वार्थवृत्तयो भूत्वा नित्यम् आवदत । कथम् । **मण्डूका इवोदकात् ।** यथा मण्डूकाः उदकात् ऋते नित्यम् अस्वाधीनवाग्वृत्तयो निर्वचनाः संपद्यन्ते एवं मदृते यूयं भूयास्त । **मण्डूका उदकादिव ।** यथा चोदकादृते मण्डूकाः सर्वात्मनैव न भवन्ति एवं मदृते यूयं मा भूत । एवमत्रैकत्र विद्विषां निर्वाक्त्वे मण्डूका उपमानम् ।

2. *m.* omits इति, *a. d.* omit इति एवमादिषु यथा; *a.* only omits च after असमानशब्देषु. 3. *a.* marks verse 15 after पादः. 3–7. *a.* reads the whole ṛik here after यत्रैष पादः; we follow *a*; *bi. j. m.* read as यत्रैष पादः । "योगक्षेमं वं आदाय" इति । ऋषभस्यार्षम् । कामतो देवता कल्प्याः । विद्विष उच्यन्ते । and then the whole ṛik—"योगक्षेमं etc. to उदकादिव ॥" इति । योगो नाम......; *m.* reads योगक्षेमं व आदाय only and not the whole ṛik as *bi. j.* do. 4 and 6. *a. d. m.* read simply योगक्षेमं व आदाय । योगो नाम लि°. 6. *bi. j.* कामतो देवताः कल्प्याः; *d.* उच्यते for उच्यन्ते. 7. *d.* लिप्सितस्यार्थस्य. 8. *a. d. m.* सर्वार्थेषु अहं for सर्वार्थेऽपि अहं of *bi. j.* 10. *d. m.* omit मे; *d.* सन्मुखप्रेक्षाः for मन्मुख°. 11. *bi. j* नित्यं आवदत, *m.* नित्यं मां वदत, *a. d.* नित्यं मा वदत. 12. *a. d. m.* अस्वाधीनवाग्वृत्तयः निर्वचनाः, *bi. j.* अस्वाधीनवृत्तयो नि°. 12–14. *bi. j.* अस्वाधीनवृत्तयो निर्वचनाः संपद्यन्ते एवं मदृते यूयं मा भूत । एवमत्रैकत्र etc. 13–14. *a. d.* यूयं भूयास्थ मंडूका उदकादिव । यथा चोदकादृते मंडूकाः सर्वात्मनैव न भवंति एवं मदृते यूयमाभूत् (*d.* त) ? एवंमत्र etc.

1. RS. X. 166. 5.

4–5. RS. X. 166. 5.

अन्यत्र उदकाभावे मण्डूका यथा न भवन्ति एवं मदभावे यूयमित्युदकमुपमानम् । एष विशेषः । पूर्वयोरपि मन्त्रयोर्भवति कश्चिन् मधुमान् न तु मध्वविरतं मुहुर्मुहुश्चोततीति । तथा "हिरण्यरूप. स हिरण्यसंदृग्" इति अत्र भवति कश्चिद्धिरण्यरूपः न तु हिरण्यमिव दृश्यमानः प्रिय इति विशेषः ॥

5 '**वास्तोष्पतिः**' (९) वक्तव्यः । स च पुनरेष रुद्रात्मना मध्यमो वास्तोष्पतिः । विज्ञायते हि वास्तोष्पतीये यायावर्यप्रतिपत्तौ गृहगमनमधिकृत्य

"न हीनमन्वाहरेयू रुद्राय हि तद्धीयते यद्धीनमन्वाहरेयू रुद्रं भूतमन्वाहरेयुः"

इति । स एष गृहाधिदेवता रुद्रो वास्तोष्पतिः । स पुनः अमीवहा—इति बलकृतिलिङ्गात् मध्यमः । तस्य पूर्वपदं विगृह्य निराह । **वास्तुः वसतेः निवासकर्मणः । वास्तु**
10 इति गृहमुच्यते । उष्यते हि तस्मिन् । **तस्य पाता** रक्षिता । तदधिदेवताभावेन रुद्रात्मना च तत्कृतेनोपकारेण रक्षिता मध्यमः । इतरथा ह्युत्सीदेयुर्गृहाः । **तस्य एषा भवति** ॥ १६ ॥

"**अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् ।**
**सखा सुशेव एधि नः ॥**"

15 **अभ्यमनहा वास्तोष्पते सर्वाणि रूपाण्याविशन् सखा नः सुसुखो**

1. *d.* reads यथा मण्डूका, by inversion. 2-3. *a. d.* श्चोतयतीति. 3. *a. d.* तथा for यथा of *bi. j.*; *a. d.* अन्यत्र for अत्र. 4. *bi.* हिरण्यमवद्दृश्यमानः for हिरण्यमिव दृश्यमानः. 5. *d.* omits च after स. 6. *a. d.* यायावप्रतिपत्तौ, *bi. j.* यायावर्यप्रतिपत्तौ; *m.* ययावर्य प्र°. 9. *a. d.* वास्तु वसतेः for वास्तुः वसतेः. 11. *a.* omits च तत् and reads रुद्रात्मना कृतेनोपकारेण etc. 15. C. अभ्यमनाहा, D. अभ्यमनहा; R. °विशन्त्सखा.

5. 'वास्तोष्पतिः'—Nigh. V. 4. 9.

7. For the quotation, *cf.* 'न हीनमन्वाहर्तवै रुद्राय हि तद्धीयते यद्धीनमन्वाहरेयू रुद्रं भूतमन्वाहरेयुः ।'—MS. 1. 5. 13.

13-14. RS. VII. 55. 1.

15. **अभ्यमनहा**—Durga does not read अभ्यमनहा which is Yáska's explanation of अमीवहा, the first word in the *rik* quoted.

15. **नः सुसुखो**—Durga does not repeat these words.

**भव । शेव इति सुखनाम । शिष्यतेः । वकारो नामकरणोऽन्तस्थान्तरोपलिङ्गी विभाषितगुणः । शिवमित्यप्यस्य भवति । यद्यद्रूपं कामयते तत्तद् देवता भवति ।**

**" रूपं रूपं मघवा बोभवीति "**

**इत्यपि निगमो भवति ॥** 5

**वाचस्पतिः । वाचः पाता वा पालयिता वा । तस्यैषा भवति ॥१७॥**

**अमीवहा वास्तोष्पते**–इति । वसिष्ठस्यार्षम् । गृहकारिकास्थालीपाके यायावर्यप्रतिपत्तौ च वास्तोष्पतीयहोमे विनियोगः । हे भगवन् **वास्तोष्पते** त्वम् अस्माकम् **अमीवहा** भव । अमीवा रोगः, तस्य हन्ता । कथम् । **विश्वा–सर्वाणि रूपाणि आविशन्** । यस्य अस्मद्दुःखहेतोर्यः प्रतिपक्षः, सर्पादेर्नकुलादिः तस्य रूपमाविशन् 10 तं तमस्माकममीवानं जहि । अमुना प्रकारेण घ्नन् अस्मदुपद्रवान् **सखा**–मित्रं **सुशेवः सुष्ठु सुखः भव । शेव इति सुखनाम ।** तत् कस्मात् । **शिष्यतेः । वकारो नामकरणः** । शिषिर्धातुः, वकारः प्रत्ययः शिष इत्यस्य । स पुनः **अन्तस्थान्तरोपलिङ्गी ।** अन्ते तिष्ठति धातोर्यो वर्णः सोऽन्तस्थः । न संज्ञा यथा अन्तस्थाः यरलवाः । कश्च पुनरसौ । षकारः । तस्यान्तरमवकाशस्थानम् उपलिङ्गयति–उपगच्छति यः स 15

---

4. R. रूपंरूपं; R. बोभवीतीत्यपि. 6. Bi. J. conclude X. 11. 4 with भवति. 7. *a.* marks verse 16 after इति, as इति १६; *a. d. m.* गृहकारिकास्थालीपाके, *bi.* गृकहारिका°. 9. *m.* अमीवां रोगः; *a. d. m.* omit विश्वा. 9–10. *bi.* रूपाणि आविशत्, *j.* रूपाणि आविशन्. 10. *a. d. m.* तस्य तस्य रूपं for तस्य रूपं. 13. *a. d.* शिषिर्धातुः, *bi. j.* शिषिधातुः. 15. *a. d.* उपगा(*d.* ग)यति for उपलिङ्गयति of *bi. j.*

---

1. शेव इति सुखनाम—Nigh. III. 6. 17; *Cf.* 'शेवमिति सुखनाम इत्यादि भाष्ये' *Devarâj.*

2. शिवम्—Nigh. III. 6. 18.

2–3. कामयते and देवता भवति.—Sâyaṇa reads कामयन्ते for कामयते, and देवाः विशन्ति for देवता भवति.

4. RS. III. 53. 8.

7. गृहकारिकास्थालीपाके—See Mânav. Gṛ. 1. 6. 19.

8. वास्तोष्पतीयहोमे—See Mânav. Śrau. 1. 6. 3.

13. शिषिः धातुः—*Cf.* शिष हिंसार्थः, Dhâtup. 1. 688.

भवत्यन्तस्थान्तरोपलिङ्गी । कश्च पुनरसौ । वकारः । स षकारस्य स्थानमुपगच्छति । ततो गुणे कृते शेव इति भवति । स च पुनरेष धातुः **विभाषितगुणः** इति । **शिवम् इति अपि अस्य भवति** अगुणपक्षे ।

**सर्वाणि रूपाण्याविशन्** इत्यतः प्रसक्तमुच्यते । शक्नोति पुनर्वास्तोष्पतिः 5 सर्वाणि रूपाण्यावेष्टुमित्युच्यते । **यद् यद् रूपं कामयते तद् तद् देवता भवति** । अस्त्येतदैश्वर्यं देवतायाः । यद्यदिच्छति रूपं तत्तत् करोति । निगमोऽपि हि भवत्यैश्वर्यप्रख्यापकः ।

> **रूपंरूपं मघवा बोभवीति** मायाः कृण्वानस्तन्वं१ परि स्वाम् ।
> त्रिर्यद्दिवः परि मुहूर्तमागात् स्वैर्मन्त्रैरनृतुपा ऋतावा ॥

10 –इति । विश्वामित्रस्यार्षम् । यावन्ति कानिचिद्रूपाणि **मघवा**–इन्द्रो भवितुमिच्छति तानि सर्वाण्यप्रतिबन्धेन **बोभवीति** पुनः पुनर्भवतीति । कथम् । मायाः कृण्वानः । इदं भवामीदं भवामीत्येवं तन्वं परि स्वां तनुं तत्तदाकृत्यानेकविधां विकुर्वाणः । त्रिर्यद्दिवः परि मुहूर्तमागात् । दिवः परि दिवः अधि द्युलोकात् मुहूर्तं मुहूर्तकालं प्रति यत् यः त्रिः आगात्–आगच्छति । स्वैर्मन्त्रैः हूयमानो वा स्तूयमानो वा युगपद्यजमा- 15 नानां यज्ञेषु । अनृतुपाः अनियतसोमपानकालः सर्वदा यागोत्पत्तेः । ऋतावा–ऋतवान् यज्ञवान् । येनासावेवमात्मानं विकरोत्येवं च दिवो मुहूर्तं त्रिरागच्छति तेनासावचिन्त्य- प्रभावत्वाच्छक्नोति तत्तद्रूपमावेष्टुम् । एवं सुष्ठु यदेतदुच्यते सर्वाणि रूपाण्याविशन्नमीवहा भवास्माकं त्वमिति ॥

---

1. *bi. j.* कश्च पुनरसौ । षकारः ।, *m.* कश्च पुनरसो । वकारः, *a.* appears to add स वकारः or स षकारः, *d.* स षकारः, before स षकारस्य. 2. *m.* शेव एव भवति, *bi. j.* शेव इति भवति. 6. *a. d.* omit one तत् and *a.* reads रूपं for करोति. 7–8. *a.* marks verse 17 after प्रख्यापकः, as रूपं १७. 8. *d. m.* do not read the whole ṛik but up to बो(*m.* बो) भवीति only, and then इति । विश्वामि°. 11. *d. m.* बो (*m.* बो)भवीतीति. 12. *d.* reads भवानि for भवामि; *a. d. m.* add स्वां again before तनु; *a. d.* read तदाकृत्या° for तत्तदाकृत्या°; *a.* only reads नैकविधां. 13. *m.* दिवः अभि for दिवः अधि; *a. d. m.* omit मुहूर्तं. 14. *a. d. m.* omit यत्. 15. *d.* अनृतुयाः ? *m.* आनृतुपाः; *a. d. m.* यागोपपत्तेः 17. *a.* only omits one तत्; 17. *m.* एवं च सुष्ठु.

---

8–9. RS. III. 53. 8.

**वाचस्पतिः** (१०) वक्तव्यः । स पुनरेषः **वाचः पाता वा पालयिता वा** प्राणात्मनेन्द्रः । **तस्य एषा भवति** ॥ १७ ॥

" **पुनरेहि वाचस्पते देवेन मनसा सह ।**
**वसोष्पते निरामय मय्येव तन्वं मम ॥**

**इति सा निगदव्याख्याता ॥** 5

**अपां नपात् तनूनप्त्रा व्याख्यातः । तस्यैषा भवति ॥ १८ ॥**

**पुनरेहि वाचस्पते**–इति । अपगतप्राणमिवात्मानं मन्यमानः पापकृत् पापसंबन्धात् कुतश्चित् कृतनिर्णेजनः सन् प्राणं ब्रवीति । हे प्राण **पुनरेहि** त्वं मां प्रति इति । किं पुनरेकाकी । न इति उच्यते । **देवेन मनसा सह ।** सर्वेन्द्रियवृत्तिदीपकेन मनसा सह । एत्य च हे **वसोष्पते** हे धनस्य अन्नस्य च पते **निरामय** नियमेन रमय 10 **मयि एव** एतां **तन्वं मम** । मा यासीर्मत्त इति । प्राणात् पृथग्भूतमात्मानं पश्यन् स्तोता ब्रवीति ॥

**अपां नपात्** (११) **तनूनप्त्रा व्याख्यातः** शब्दनिर्वचनतः । अभिधेयतस्तु मध्यमः । अद्भ्य आदित्यः ततो मध्यमः । एवमपां पौत्रः । **तस्य एषा भवति** ॥ १८ ॥ 15

4. Bi. mss. क, ख and C. वसोस्पते. 6. Bi. J. conclude X. ii. 5 with तस्यैषा भवति. 7. *a.* marks verse 18 after इति, as इति१८. 8. *a. d.* कृतनिर्णेजनः, *bi. j.* कृतानिर्णेजनः. 13. *d.* अभिधेयस्तु for अभिधेयतस्तु of *bi. j. m.*

---

1. ' वाचस्पतिः '—Nigh. V. 4. 10.

3–4. AV. 1. 1. 2. The second half in the AV. reads as—वसोष्पते नि रमय मय्येवास्तु मयि श्रुतम् ॥. See also MS. 4. 12. 1: 179. 12–13.

5. **इति सा निगदव्याख्याता**—As usual Durga does not explain these words.

13. ' अपां नपात् '—Nigh. V. 4. 11.

13. व्याख्यातः—See Nir. VIII. 5.

"यो अनिध्मो दीदयदप्स्व१न्तर्यं विप्रास ईळते अध्वरेषु ।
अपां नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्याय ॥"

योऽनिध्मो दीदयद् दीप्यतेऽभ्यन्तरमप्सु । यं मेधाविनः स्तुवन्ति यज्ञेषु । सोऽपां नपान्मधुमतीरपो देह्यभिषवाय । याभिरिन्द्रो वर्धते 5 वीर्याय वीरकर्मणे ॥

यमो यच्छतीति सतः । तस्यैषा भवति ॥ १९ ॥

**यो अनिध्मो दीदयत्**–इति । कवषस्यार्षम् । सर्व एव प्रत्यक्षकृतत्वेन गम्यते । हे **अपां नपात्**, **यः** त्वम् **अनिध्मः**–अनिन्धनोऽपि **दीदयत्–दीप्यसे अन्तः–अभ्यन्तरं** प्रदेशं प्रति **अप्सु** वर्तमानः, **यं** च त्वाम् **अध्वरेषु–यज्ञेषु विप्रासः–** 10 **मेधाविनः ईळते–स्तुवन्ति, स** त्वमपां **नपात् मधुमतीः**–मधुररसाः मधुरस्वादाः **अपः दाः–देहि अभिषवाय । याभिः** त्वमेव **इन्द्रः**–ईश्वरः सोमपानद्वारेण **वावृधे**–वर्धेथाः **वीर्याय–वीरकर्मणे** इत्येतत् प्रार्थयामहे ॥

**यमः** (१२) वक्तव्यः । स पुनरेष **यच्छति**–उपरमयति जीवितात् सर्वं भूतग्राममिति यमः । अत एव बलवान् इति मध्यमः । **तस्य एषा भवति** ॥ १९ ॥

---

1. Bi. mss. क, ख, ग have ईलते. 3. Bi. J. दीप्यसे, C. R. दीप्यते; C. R. मेधाविन स्तुवन्ति. 6. Bi. J. conclude X. ii. 6 with भवति. 7. *a.* marks verse 19 after इति, as इति[१९]; *d.* कवसस्य, *bi. j.* कवषस्य; *bi. j.* हे गम्यते, *d.* omits हे before गम्यते and reads it as सम्यते. 8. *a. d.* add हे before अपां नपात्; *a.* only omits अपि after अनिन्धनः; *a. d. m.* omit दीदयत्; *a. d. m.* omit अंतः. 9. *a. d. m.* अभ्यन्तरप्रदेशं प्रति; *a. d. m.* विप्राः for विप्रासः. 10. *m.* ईलते; *a. d.* स्तुवते for स्तुवन्ति. 11. *a. d. m.* omit दाः. 12. *a. d. m.* omit वावृधे.

---

1-2. RS. X. 30. 4; AV. 14. 1. 37.

3. **दीदयत्**—The mss. क, ख, ग of Bi. do not read दीदयत्.

3. **दीप्यते**—Bi. J. and Durga read **दीप्यसे,** C. R. have दीप्यते.

6. **इति सतः**—Durga does not explain this.

13. 'यमः'—Nigh. V. 4. 12.

13. यच्छति उपरमयति—*Cf.* 'यम उपरमे,' Dhâtup. 1. 1009.

" परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् ।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ॥"

**परेयिवांसं पर्यागतवन्तम् । प्रवत उद्वतो निवत इति । अवतिर्गतिकर्मा । बहुभ्यः पन्थानमनुपस्पाशयमानम् । वैवस्वतं संगमनं जनानां, यमं राजानं हविषा दुवस्येति । दुवस्यती राघ्नोतिकर्मा ।** 5

**अग्निरपि यम उच्यते । तमेता ऋचोऽनुप्रवदन्ति ॥ २० ॥**

**परेयिवांसम्**–इति । यमस्यार्षम् । याम्ये पशौ वपायां विनियोगः । **परेयिवांसं–पर्यागतवन्तं** सर्वतः प्राप्तवन्तम् । कान् पुनः । **प्रवतः उद्वतः निवतः** च भूतसंघातान् । **प्रवतः** इति मन्त्रे । **उद्वतो निवतः** इति भाष्यकारोऽध्याजहार तथा सामर्थ्यात् । **प्रवतः**–मनुष्याः, **उद्वतः**–देवाः, **निवतः**–तिर्यञ्चः, तथा गत्युपपत्तेः । 10 तमेतमेवं **महीः**–महतीः भूतजातीः **परेयिवांसं बहुभ्यः** पुण्यकृद्भ्यः पापकृद्भ्यश्च **पन्थां–पन्थानम् अनुपस्पशानम्–अनुपस्पाशयमानम् ।** अमुना मार्गेण

1. R. परेयिवाँसं. 3. R. परेयिवाँसं. 4. D. पन्थामनुप°, C. पन्थानमनुप°, Bi. mss. क, ख, ग read पन्थामनुपस्पाशयमानं. 5. C. R. दुवस्यती राघ्नोतिकर्मा, Bi. J. and the mss. क, ख, ग of *bi.* read दुवस्यतिराप्नोतिकर्मा. 6. Bi. J. conclude X. ii. 7 with अनुप्रवदन्ति. 7. *a.* marks verse 20 after इति, as इति[२०]; *a. d.* read हविर्द्धानस्य for यमस्य. 8–9. *d.* भूतसंघान्. 11–12. *a. d.* omit बहुभ्यः पुण्यकृभ्यः पापकृभ्यश्च पंथां, *m.* omits पन्थां only. 12. *a. d. m.* omit अनुपस्पशानं.

1–2. RS. X. 14. 1; AV. 18. 1. 49; MS. 4. 14. 16 : 243. 6–7; TA. 6. 1. 1; ApŚ. 9. 11. 20; Aś. 2. 19. 22.

3. प्रवतः, उद्वतः, निवतः—Yâska derives these words from the root '*av*' to go, by dropping the अ of अव् and by prefixing the prefixes प्र, उद्, and नि, respectively, to the root. Durga, however, does not approve of this derivation—अवतिर्गतिकर्मा इत्येतदत्र निर्वचनं कथं संबध्यते इति विज्ञातव्यम् ( see page 986, line 6 ).

5. दुवस्यतिः—See Nigh. III. 5. 5.

5. **दुवस्यती राघ्नोतिकर्मा**—Durga does not notice दुवस्यती राघ्नोतिकर्मा.

7. विनियोगः—See MS. 2. 5. 11.

अयं प्राणी जीवनादुत्सर्पति तमेव तस्य स्पाशयित्वा बद्ध्वा तस्कर इव तत्रैव सर्पज्वरादिरूपो भूत्वा जीवितादुपर्यस्यामीत्येवमनुपस्पाशयमानं तमेतमेवंकर्माणं **वैवस्वतं** विवस्वतः पुत्रं **संगमनं जनानां** सममेव चक्षुः कृत्वा योऽस्माल्लोकादमुं लोकं यथाकृतकर्मफलोपभोगवशेन जनान् गमयति तमेवं **यमं राजानं**–ईश्वरं सर्वप्राणभृतां 5 हे यजमान **हविषा** अनेन पशुलक्षणेन **दुवस्य** । राध्नुहि–परिचरस्वेत्यर्थः । **अवतिर्गतिकर्मा** इत्येतदत्र निर्वचनं कथं संबध्यत इति विज्ञातव्यम् । अथवा प्रवत इत्यवतिरेवायमादिलुप्तः प्रपूर्व इति भाष्यकाराभिप्रायः । तत्प्रसंगाद्वा शब्दसारूप्याद्वा निराह । **अग्निरपि यम उच्यते** इति विचारोपप्रदर्शनाय । **तम् एताः ऋचः अनुप्रवदन्ति** इति प्रतिज्ञातार्थोपपादनाय । यथाग्निरपि यमशब्देन उच्यते तथा 10 इमा ऋचः अनुप्रवदन्ति ॥ २० ॥

**" सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत् त्वेषप्रतीका ॥**
**यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम् ॥**
**तं वश्चराथा वयं वसत्यास्तं न गावो नक्षन्त इद्धम् ॥ "**

**इति द्विपदाः । सेनेव सृष्टा भयं वा बलं वा दधाति । अस्तुरिव 15 दिद्युत् त्वेषप्रतीका, भयप्रतीका, बलप्रतीका, यशःप्रतीका, महाप्रतीका, दीप्तप्रतीका वा ।**

---

1–2. *a. d.* सर्पति for उत्सर्पति; *a. d. m.* add after उत्सर्पति,—तमेव तस्य स्पाशयित्वा बध्द्वा तस्कर इव तत्रैव सर्पज्वरादिरूपो भूत्वा जीवितादुपर्यस्यामीत्येवमनुपस्पाशयमानं; *bi. j.* omit this; we read with *a. d. m.* 2. *m.* °दुपयास्यामी°. 4. *a. d.* तमेतमेवं, *bi. j.* तमेवं. 5. *m.* reads राध्नुहीत्यर्थः before परिचरस्व°. 15. The mss. क, ख, ग of Bi. and Durga do not read बलप्रतीका; C. D. read यशःप्रतीका between बलप्रतीका and महाप्रतीका.

---

11–12. RS. I. 66. 7–8.

13. RS. I. 66. 9.

15. The mss. क, ख, ग of Bi., and Durga do not read **बलप्रतीका** and **यशःप्रतीका**. R. also does not read **यशःप्रतीका**. Durga reads **महाप्रतीका** before भयप्रतीका, and the mss. *a. d. m.* of Durga's *vritti* omit **त्वेषप्रतीका**, so that Durga's reading seems to be **महाप्रतीका भयप्रतीका दीप्तप्रतीका वा**. Durga does not explain त्वेषप्रतीका, बलप्रतीका and यशःप्रतीका.

"यमो ह जात इन्द्रेण सह संगतः ।"

"यमाविहेह मातरा"

–इत्यपि निगमो भवति । यम इव जातो, यमो जनिष्यमाणो, जारः कनीनां जरयिता कन्यानां, पतिर्जनीनां पालयिता जायानाम् । तत्प्रधाना हि यज्ञसंयोगेन भवन्ति । 5

"तृतीयो अग्निष्टे पतिर्"

–इत्यपि निगमो भवति । तं वश्रराथा, चरन्त्या पश्वाहुत्या, वसत्या च निवसन्त्यौषधाहुत्या । अस्तं यथा गाव आप्नुवन्ति तथाप्नुयामेद्धं समिद्धं भोगैः ॥

मित्रः प्रमीतेस्त्रायते । संमिन्वानो द्रवतीति वा । मेदयतेर्वा । 10 तस्यैषा भवति ॥ २१ ॥

**सेनेव सृष्टा**–इत्येवमाद्याः । पराशरस्यार्षम् । एताः **द्विपदाः** विराजः । प्रातरनुवाकाश्विनयोः विनियोगः । **सेना इव सृष्टा**–निश्रिता । अथवा । सेनापतिना

---

9. C. D. R. and Bi. mss. क, ग, च read समृद्धं for समिद्धं. 10. Bi. mss. क, ख, ग have प्रमीयतेस्त्रायतेः. 11. Bi. J. conclude X. ii. 8 with तस्यैषा भवति. 12. *a.* marks verse 21 after °माद्याः, as °माद्याः २१.

---

1. इन्द्रेण सह संगतः—Durga does not read these words. Sâyaṇa in his *bhâṣya* quotes them as from Yâska's *Nirukta.* The quotation is not traced.

2. यमाविहेह मातरा—RS. VI. 59. 2.

3. **यम इव जातो यमो** जनिष्यमाणो—Durga does not comment on these words. Sâyaṇa also does not quote them in his *bhâṣya* of the Ṛgveda. Thus they seem to be spurious.

6. तृतीयो अग्निष्टे पतिः—RS. X. 85. 40; AV. 14. 2. 3.

13. विनियोगः—The *viniyoga* cannot be traced to the Âśvalâyana Sûtra.

विसृष्टा–प्रेरिता । **अमं दधाति, भयं वा बलं वा दधाति** । भयं परेभ्यः, बलं स्वेभ्यः । अथवा । अतर्किता भयं दधाति, अतर्किता बलं दधाति प्रणेतुः । **अस्तुः न दिद्युत्** । **अस्तुः** इव क्षेप्तुर्यथा **दिद्युत्**–आयुधम् । **महाप्रतीका** । महती या दृश्यते । प्रतीकं दर्शनम् । **भयप्रतीका** दर्शनादेव भयानका । **दीप्तप्रतीका वा** 5 दीप्तदर्शना । **भयं वा बलं वा** ददाति । स्वेभ्यः परेभ्यश्चेति वर्तते । का पुनरसौ इति । अग्नेः अर्चिः । रक्षोभ्यो भयं ददाति, स्वेभ्यो बलम् । **यमो ह जातो यमो जनित्वम्**–इति । यस्य इदम् एवंलक्षणमर्चिः, स एव **यमः** अग्निः सर्वमिदं जातं जनिष्यमाणं च ।

कथमेतद् गम्यते पार्थिवोऽग्निर्यमशब्देनोच्यते न मध्यमो नोत्तमो वा इति । तावपि 10 हि यमावुच्येते । यतो निगमान्तरेण विभज्य दर्शयति । **यमाविहेह मातरा –इत्यपि निगमो भवति** इति । यत्रैष पादः तस्मिन् मन्त्रे शक्यते यमशब्देन अग्निरुच्यत इति विभावयितुं व्यपदेशः । तद्यथा ।

" बळित्था महिमा वामिन्द्राग्नी पनिष्ठ आ ।
समानो वां जनिता भ्रातरा युवं यमाविहेहमातरा ॥ "

15 –इति । भरद्वाजस्यार्षम् । बृहती । बट् इति सत्यनाम । हे इन्द्राग्नी । इत्था सत्यम् । अमुना प्रकारेण यः सूक्ते माहाभाग्यप्रकारोऽधिकृतः तामित्थेत्यभिनयेनोपदिशन्

1. *a. d.* अक्षिप्ता for प्रेरिता; *m.* बलं for बलं. 2. *d. m.* ददाति for दधाति in both the places; *m.* बलं for बलं. 3. *m.* दिद्युधायुधं; *br. p.* read त्वेषप्रतीका before महाप्रतीका, but *a. d. m.* omit it; we follow *a. d. m.* in omitting it; *d.* reads महप्रतीका. 6. *m.* omits स्वेभ्यो बलम्. 9. *d.* पार्थिवोत्राग्निः. 9–10. *a.* तावपीह for तावपि हि. 11. *d.* omits इति after भवति. 12. *a.* marks verse 22 after तद्यथा. 13. *d. m.* have बलित्था, and read the *pratīka* up to वामिति. 15. *d.* omits बृहती and *d. m.* read बळिति सत्यनाम. 16. *a. d.* omit यः; all mss. read महाभाग्यप्रकारः.

5. ददाति—The text has दधाति in place of ददाति.
13–14. RS. VI. 59. 2.
15. बट् इति सत्यनाम—Nigh. III. 10. 1.

ब्रवीति । महिमा–माहाभाग्यं वां–युवयोः आ पनिष्ठः सर्वतोऽतिशयेन स्तुत्यः । यौ युवामेवमतिमहानुभावौ तयोः समानः वां जनिता–जनयिता सूर्यः । तौ युवामेवं-कृत्वैकपितृकौ एकजन्मानौ **यमौ** भ्रातरौ । **इह इह मातरौ** । इह च पृथिवीलोके इह च अन्तरिक्षलोके अवस्थितौ मातारौ सर्वस्य लोकस्य निर्मातारौ । एवमिह मन्त्रे पितृत्वेन सूर्यो व्यपदिष्टः । इन्द्राग्नी यमौ इति यमशब्दो मध्यमस्थानपृथिवीस्थानयोः । 5 अत्रापि द्वयोर्यमयोरिह चेह च निर्माताराविति प्रथमेन इहशब्देन अग्निर्यम इति लक्ष्यते । तस्मादिहापि **यमो ह जातो यमो जनित्वम्** इति युक्तं यदग्निरेवोच्यते । **जारः कनीनां पतिर्जनीनाम्** । स एवाग्निः **जारः**–जरयिता, **कनीनाम्**–**कन्यानाम्** कन्याभावस्य । यदा ह्यग्निसंनिधावूढा भवन्ति, अथ तासां कन्याभावो जीर्णो भवति । **पतिः जनीनां, पालयिता जायानाम्** । कथम् । **तत्प्रधानाः** 10 संपद्यन्ते, अग्नौ व्रतोपगमनात्, आव्रतविमोकात् अग्निपारतन्त्र्यात् ।

यथा वै तासां यथाधिकृतो यमो ह जातो यमो जनित्वमिति अग्निरेव यमो ह जातः पतित्वेन कन्याभावस्य जरयिता तथायमपरो निगमः स्फुटतरः । **तृतीयो अग्निष्टे पतिः–इत्यपि निगमो भवति ।**

“ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । 15

तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ ”

–इति । सूर्याया आर्षम् । विवाहे विनियोगः । हे कन्ये त्वमुच्यसे । सोमः त्वां प्रथमः विविदे विन्नवान्–प्राप्तवान् सौम्ये प्रथमकौमारके । गन्धर्वो विविदे उत्तरः । उपजाय-

---

4. *d. m.* मातरौ for मातारौ. 8–9. *a. d. m.* omit कनीनां कन्यानाम्. 11. *a. d.* अग्नौ व्रतोपायनात्. 12. *d.* यथा चैतासां for यथा वै तासां. 14. *a.* marks verse 23 after भवति. 15. *d.* quotes the *ṛk* up to विविदे only.

---

10–11. Durga reads तत्प्रधानाः संपद्यन्ते, i. e. he takes no notice of the words **हि यज्ञसंयोगेन.**

14. **इत्यपि निगमो भवति.**—Durga usually does not repeat these words in his commentary but he has repeated them twice in this *khaṇḍa*.

15–16. RS. X. 45. 40

मानचारुताङ्गप्रविभागस्वरसौष्ठवामीषदनङ्गाङ्गसमाहृतहृदयां गन्धर्वः विश्वावसुः त्वां विविदे विन्नवान् । अथ पुनरिदानीं वैवाहिके उपगतायाः कर्मणि तृतीयो अग्निष्टे पतिः । तृतीयस्तवायमग्निः । अत उद्वहनात् परं तुरीयः चतुर्थः ते तवायं मनुष्यजाः पतिः इत्येवमनेनापि मन्त्रेण समवैति जारत्वं पतित्वं चाग्नेः । एवं चेत् **यमो ह जातो**
5 **यमो जनित्वम्** इति यदधिकृतं सोऽग्निरेवेति सिद्धम् ।

अग्निर्मह्यमथो इमाम्–इति च केचिदधीयते निगमम् उपचयहेत्वर्थम् । स निरुच्यते ।

"सोमो ददद् गन्धर्वाय गन्धर्वो ददद्ग्नये ।
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥"

–इति । स एव विनियोगः । आर्षं च । सोमः एतां प्रथमं कौमारादभ्युह्य गन्धर्वाय
10 ददत्–अदात् । अथ गन्धर्वः अप्येनामभ्युह्य स्वयौवनाधिकारात् अग्नये ददत् । अथ अग्निः अपि एनाम् अस्मिन् विवाहे संस्कृत्य रयिं–धनं च पुत्रान् च मह्यम् अदात्–ददाति । अथो अपि च धनेन च पुत्रैश्च सह मह्यमदात् मह्यं ददाविति ।

**तं वश्चराथा वयम्**–इति । **तम्** अग्नि यमम् । **वः** इति अनर्थकः । अथवा । यजमाना ऋत्विग्भिरुच्यन्ते । **चराथा चरन्त्या**–जंगमया **पश्वाहुत्या, वसत्या**
15 **च निवसन्त्या औषधाहुत्या** । जंगमेन स्थावरेण च हविषा । **अस्तं न गावो नक्षन्ते** । **अस्तं**–गृहं **यथा गावः** अवश्यं **नक्षन्ते–आप्नुवन्ति** स्वेनोपकारेण सायंवासाय **तथे**ममग्निमुभयलक्षणेन हविषा वय**माप्नुयाम** । **इद्धं–समिद्धं भोगैः** सर्वभोगानामीश्वरं प्रदातारमिति ॥

1. *d. m.* read समाहितहृदयां. 2. *m.* विवदे and उपगतयाः. 3. *d. m.* omit ते. 6. *a.* marks verse 24 after निरुच्यते. 7. *d.* reads °गन्धर्वायेति । स एव°. 10. *a. d.* omit अदात्. 12. *a. d.* omit च after अपि and सह after पुत्रैश्च. 13. *d. m.* omit तं वश्चराथा वयम् इति; *d.* reads च for वः. 14. *d.* चरथा for चराथा; *d.* चरत्या जंगमाया; *a. d.* omit वसत्या. 15. *a. d.* add वसत्या after औषधाहुत्या. 17. *a. d. m.* आप्नुयाम, *bh. j.* आप्नुयामः.

7–8. RS. X. 85. 41.

9. विनियोगः—Mânav. Gr. 1. 10. 10.

**मित्रः** (१३) कस्मात् । स हि **प्रमीतेः त्रायते** । प्रमीतिः प्रमरणं ततः सर्वलोकं त्रायते वर्षद्वारेण । **संमिन्वानो द्रवति इति वा** । समन्ततो मिन्वानः उदकेन द्रवति अन्तरिक्षलोके । **मेदयतेः वा** स्नेहनार्थस्य । सर्वं ह्यसावुदकेन स्नेहयति । **तस्य एषा भवति** ॥ २१ ॥

" मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् ।
मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ॥ "

**मित्रो जनानायातयति प्रब्रुवाणः शब्दं कुर्वन् । मित्र एव धारयति पृथिवीं च दिवं च । मित्रः कृष्टीरनिमिषन्नभिविपश्यतीति । कृष्टय इति मनुष्यनाम । कर्मवन्तो भवन्ति । विकृष्टदेहा वा । मित्राय हव्यं घृतवज्जुहोतेति व्याख्यातम् । जुहोतिर्दानकर्मा ॥** 10

**कः कमनो वा क्रमणो वा सुखो वा । तस्यैषा भवति ॥ २२ ॥**

**मित्रो जनान्यातयति**–इति । विश्वामित्रस्यार्षम् । अववृष्टहोमे प्रायश्चित्तम् । अग्निहोत्रे पूर्वस्यामाहुतौ विनियोगः । **मित्रो जनान्यातयति ब्रुवाणः । आयात-**

2. *d.* समिन्वानो. 3. *a. d.* स्नेहयति, *bi. j. m.* स्नेहति. 7. C. D. ब्रुवाणः for प्रब्रुवाणः of Bi. J. and others. 11. Bi. J. conclude X. ii. 9 with भवति. 12. *a.* marks verse 25 after इति, as इति[२५]; *d. m.* read the *pratika* up to ब्रुवाणः.

1. ' मित्रः '—Nigh. V. 4. 13.

2. मिन्वानः—*Cf.* ' डुमिञ् प्रक्षेपणे ' Dhâtup. 5. 4.

3. मेदयतेः वा स्नेहनार्थस्य—*Cf.* ' मिदि स्नेहने ' Dhâtup. 10. 8.

5–6. RS. III. 59. 1; TS. 3. 4. 11. 5; KS. 23. 12; 35. 19; ĀpŚ. 6. 26. 7; MS. 3. 2. 8.

8. **च दिवं च**—Durga omits these words.

8–9. कृष्टय इति मनुष्यनाम—See Nigh. II. 3. 7.

10. **जुहोतिर्दानकर्मा**—Durga omits this sentence.

13. विनियोगः—See Mânav. S'ru. 3. 2. 8.

**यति** कृष्यादिषु प्रवर्तयति तत्कर्मपूर्वकत्वात् कृष्यादिकर्मणाम् । न ह्यवृष्टे कृष्यादीनि आयात्यन्ते । आयातनमारम्भः । तद्यथा । भोजनमायातितमनेनेति । कथमायातयति । **प्रब्रुवाणः** स्तनयित्नुं **शब्दं कुर्वन्** । एवं प्रवर्तयन् कर्मसु ओषधीरुत्पादयन् यज्ञद्वारेण स **एव मित्रः दाधार**–**धारयति पृथिवीं** पृथिवीलोकनिवासिनः सर्वान् । **उत** 5 **द्यां** धारयति । अमुना प्रकारेण अनुगृह्णन् स **मित्रः कृष्टीः**–मनुष्यान् **अनिमिषाभिचष्टे अनिमिषन्नभिविपश्यति** उपकारद्वारेण । यो हि यस्मा उपकरोति स तेन सम्यग् दृष्टो भवति । योऽयमेवमुपकारप्रवृत्तः कृत्स्नस्य लोकस्य तस्मै **मित्राय हव्यं घृतवत्**–घृतोन्मिश्रं **जुहोत**–जुहुत हे मनुष्याः ।

**कृष्टयः इति मनुष्यनाम ।** तत् कस्मात् । नित्यं हि ते **कर्मवन्तो भवन्ति** 10 आरम्भशीलत्वात् । **विकृष्टदेहाः वा** । संसृष्टदेहा. अन्ये पशवः गवादयः । ते हि न कामकारतोऽङ्गानि प्रसारयितुं शक्नुवन्ति । स तेषां संकर्ष· । मनुष्यास्तु कामतः प्रसारयन्त्यङ्गानि । स तेषां विकर्षो देहस्य ॥

**कः** (१४) इति वक्तव्यम् । स पुनरेष महानात्मा सर्वात्मा प्राणबुद्धिसतत्त्वः । उदाहरिष्यति च ' अथैनं महान्तमात्मानम् ' इत्यधिकृत्य – ' क ईषते तुज्यते ' इति । स 15 कथं मध्यमो भवति । भवति हि तस्मिन् सूक्ते

" आपो ह यद् बृहतीर्विश्वमायन् गर्भं दधानाः "

इति । विज्ञायते च " प्रजापतिर्वै कः " इति । प्रजापतिश्च मध्यमः । तथा च मन्त्रवर्णो

3. *d. m.* read स्तनयित्नुं कुर्वन् and omit शब्दं. 5–6 *m.* omits from अनुगृह्णन् स मित्रः etc. up to and including उपकारद्वारेण; *a. d.* omit अनिमिषाभिचष्टे. 6. *a. d.* यस्मै for अस्मै of *bh. j.* 8. *a. d.* omit जुहुत. 10. *a. d.* आरंभकुशलत्वात्, *m.* आरम्भशीलकत्वात्. 11. *d.* सकर्षः for संकर्षः. 14. *d.* अथेतं for अथैनं; *a. d.* omit इति before अधिकृत्य. 15. *a. d.* तस्य for तस्मिन्; *a.* marks verse 26 after सूक्ते.

13. ' कः '—Nigh. V. 4. 14.
14. अथैनं महान्तं etc.—See Nir. XIV. 1.
14. क ईषते तुज्यते etc.—Nir. XIV. 26.
16. आपो ह यद् etc.—RS. X. 121. 7.
17. विज्ञायते च—See TB. 2. 2. 5; AB. ii. 5. 6.

भवति राज्ञोऽभिषेकमधिकृत्याश्वमेधे "प्रजापतिश्चरति गर्भे अन्तः" इति समानां प्रथमा । तयोपरिष्टादभिषेकस्य जुहुयादिति । तस्माद् भवति मध्यमः ।

स कस्मात् कः । **कमनः वा** । कामिनां काम्येष्वर्थेषु साधनम् । **क्रमणो वा** क्रमणसाधनम् । स्वयमेव वा क्रामति । **सुखः वा** । कमेव वा कः । सुख इत्यर्थः ।

**तस्य एषा भवति** ॥ २२ ॥　　5

**"हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।**
**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥"**

**हिरण्यगर्भो हिरण्यमयो गर्भः । हिरण्यमयो गर्भोऽस्येति वा । गर्भो गृभेर्गृणात्यर्थे । गिरत्यनर्थानिति वा । यदा हि स्त्री गुणान् गृह्णाति गुणाश्चास्या गृह्यन्तेऽथ गर्भो भवति । समभवदग्रे । भूतस्य जातः** 10 **पतिरेको बभूव । स धारयति पृथिवीं च दिवं च । कस्मै देवाय हविषा विधेमेति व्याख्यातम् । विधतिर्दानकर्मा ॥**

**सरस्वान् व्याख्यातः । तस्यैषा भवति ॥ २३ ॥**

**हिरण्यगर्भः**-इति । हिरण्यगर्भस्यैवार्षम् । सर्वात्मकत्वात्तदार्षत्वेऽपि मन्त्रस्य प्रथमपुरुषयोगो अविप्रतिषिद्धः । अथवा परस्य ब्रह्मणो या हिरण्यगर्भावस्था प्रतिकल्पमा- 15 विर्भावतिरोभावधर्मिणी बुद्धिपूर्विकाऽनित्या तस्यां च नित्यो मन्त्रोऽविवक्षिताभिधाना-भिधातृक आश्रयमात्रेणाभिधातारमुपादाय प्रवर्तमानोऽनुवक्तीत्यविवक्षितः पुरुषयोगः ।

---

2. *a. d.* उपरिष्टात् for उपविष्टात् of *bi. j. m.* 4. *m.* कमेव वा for काममेव वा of *bi. j., a. d.* omit it. 8. R. reads as text, Bi. J. omit हिरण्यमयो गर्भः after हिरण्यगर्भो. 13. Bi. J. conclude X. ii. 10 with भवति. 14. *a.* marks verse 27 after इति; *d m.* read the *pratīka* up to अग्रे. 15. *d.* अविप्रतिवेधः for अविप्रतिषिद्धः. 16. *m.* बुद्धिपूर्विकानित्या, *bi j.* बुद्धिपूर्विका नित्या. 17. *a. d.* अनुवर्ती for अनुवक्ति.

---

6-7. RS. X. 121. 1; AV. 4. 2. 7; VS. 13. 4; 23. 1; 25. 10; TS. 4. 1. 8. 3; MS. 2. 7. 15; KS. 16. 15; ŚB. 7. 4. 1. 19; 13. 5. 2. 23.

11. **बभूव, च दिवं च,** and **इति व्याख्यातम्**—These are omitted by Durga.

कृतकत्वे हि नियमत एवोत्तमपुरुषयोगो मन्त्रस्याभविष्यत् । **भूतस्य** अस्य उत्पन्नस्य स्थावरजंगमस्य जगतः **हिरण्यगर्भः** एव **अग्रे समवर्तत–समभवत्**–उदपद्यत । तमुत्पन्नमन्विदं सर्वमुत्पेदे । स च पुनरग्रे **जातः** सन् तस्य पश्चाद्भूतस्य **एकः**–असपत्नः–अद्वितीयः **पतिः**–पाता रक्षिता ईश्वरः स्वतन्त्रः **आसीत्** । कथम् इति ।
5 **स दाधार** । यत. पतिः अतः **स** एव दाधार स एव **धारयति** अद्यत्वेऽपि । किम् इति । **पृथिवीम् उत द्याम्** । **पृथिवीम्** अन्तरिक्षम् अपि च **द्यां** द्युलोकम् । अपि च **इमां** भूमिम् अन्तरमनुप्रविष्टो बहिश्च वर्षाद्युपकारेण । योऽयमेवंभावः अतिमहानुभावः कः तस्मात् अस्मै **कस्मै** काय **देवाय हविषा विधेम** हविर्दद्मः । अथवा । अनेन चरुलक्षणेन आज्यलक्षणेन वा **हविषा** तं वयं परिचरेम । **विधति-**
10 **दानकर्मा** इति । तस्माद्धविःशब्दनतिरेव ज्यायसी । शतकृष्णलस्य पुरोनुवाक्या । आघारश्च प्राजापत्ये पशावनेन मन्त्रेण ।

अथ **हिरण्यगर्भः** कस्मात् । स हि **हिरण्यमयः**–विज्ञानमय. **गर्भः** सर्वभूतानां तत्कृतत्वादन्तःप्रकाशस्य । हिरण्यमयश्चासौ गर्भश्चेति समानाधिकरणः । **हिरण्यमयः गर्भः अस्य इति वा** । शरीरेन्द्रियमनोबुद्धिभावेनैतमपेक्ष्य परमात्मानं च विज्ञान-
15 प्रकाशमात्रसतत्वं सर्वविशेषहारित्वाद्धिरण्यगर्भमपेक्ष्य तत्प्रकृतित्वं च क्षेत्रज्ञस्यापेक्ष्य सोऽस्य हिरण्यमयो हिरण्यप्रकृतिगर्भ इति हिरण्यगर्भः । अथ **गर्भः** कस्मात् । **गृभेः** धातोः **गृणात्यर्थे** वर्तमानस्य । सर्वस्य स्तुत्यो हि गर्भः । **गिरत्यनर्थान् इति वा** । सर्वाननर्थानसौ गिरति–नाशयति । अथ पुनः स्त्रीगर्भः कस्मात् इत्यत आह ।
**यदा हि स्त्री गुणान् गृह्णाति गुणाश्चास्या गृह्यन्ते अथ गर्भो भवति ।**
20 स्त्र्यवयवः स्त्रीरक्तम् । तत् यदा असौ पुरुषात् शुक्रावस्थान् गुणान् गृह्णाति आत्मानं संपृणक्ति अस्थिस्नायुमज्जानः । गुणाश्चास्याः रक्तावस्थाः त्वङ्मांसशोणितानि पौरुषेण शुक्रेण गृह्यन्ते । तथैवमितरेतरकोशग्रहणव्यतिषङ्गे रक्तशुक्रयोः स्त्रीगर्भो भवति । अथवा । यदा हि स्त्री गुणान् गृह्णाति पुरुषस्य प्रेम्णा गुणाश्चास्या. प्रेम्णा पुरुषेण गृह्यन्ते तदितरेतरानुरागात् प्रमोदः । प्रमुदितयोः संपर्कात् गर्भग्रहणं च । तदेवं
25 गर्भग्रहणहेतुकोऽयमिति ग्रहेर्गर्भः ।

7–8. *a. d.* योऽयमेवंभव अतिमहान्भावः. 8. *a. d.* omit कः. 9. *m.* omits आज्यलक्षणेन. 12. *a. d. m.* omit हि. 15. *d.* हिरण्यमपेक्ष्य. 16. *a. d.* हिरण्यमयो, *bi. j. m.* हिरण्मयो. 16–17. *a. d.* गृहेर्धातोः गृह्णात्यर्थे? 17. *d.* omits सर्वस्य. 18. *a. d. m.* add अयं after पुनः; *d.* इति यतः for इत्यतः.

10. पुरोनुवाक्या—MS. 2. 2. 2.

11. आघारश्च प्राजापत्ये पशौ—For the *Mantra*, see MS. 3. 12. 16.

**सरस्वान्** (१५) **व्याख्यातः** सरस्वत्या। केवलं लिङ्गकृतो विशेषः। **तस्य एषा भवति** ॥ २३ ॥

**ये तें सरस्वन् ऊर्मयो मधुमन्तो घृतश्चुतः।**

**तेभिर्नोऽविता भव ॥**

**इति सा निगदव्याख्याता** ॥ २४ ॥ 5

**ये तें सरस्वन्**–इति। वसिष्ठस्यार्षम्। सारस्वते हविषि विनियोगः। हे भगवन् **सरस्वन् ये ते**–तव **ऊर्मयः** यैरूर्णोषि नभो मेघैश्छादयसि **मधुमन्तः**–उदकवन्तः **घृतश्चुतः**–घृतवन्त. उदकप्रक्षराः, **तेभिः**–तैः त्वम् अस्माकम् **अविता**–तर्पयिता **भव** इत्येतदाशास्महे ॥ २४ ॥

**विश्वकर्मा सर्वस्य कर्ता। तस्यैषा भवति** ॥ २५ ॥ 10

**विश्वकर्मा** (१६) वक्तव्यः। स कस्मात्। **सर्वस्य कर्ता**। यावदिदं किंचिद् भूतं भविष्यमाणं क्रियमाणं च तस्य सर्वस्य कर्ता। वाग्वात्मकत्वात् सर्वचेष्टानां मध्यमः। स

---

3. R. सरस्व, Bi. J. सरस्वन्. 5. With निगदव्याख्याता ends the *second pâda* of the tenth adhyâya; Bi. J. conclude X. ii. 11, here. 6. *a.* marks verse 28 after इति, as इति२८; *d m* read the *pratîka* up to ऊर्मयः. 6–7. *m.* omits हे भगवन् सरस्वन्. 7. *a. d.* omit ये. 8. *a. d.* omit तैः. 9. After इत्येतदाशास्महे ॥ ११ (२४), *a. d. m.* read **पंचदशस्य द्वितीयः पादः**, *bi. j.* इति ऋज्वर्थायां निरुक्तवृत्तौ पञ्चदशस्य (**दशमस्य**) अध्यायस्य **द्वितीयः पादः** ॥ १०, २ ॥ 10. *bi. j.* read **तृतीयः पादः** before **विश्वकर्मा**; Bi. J. conclude X. iii. 1 with भवति. 11. *d* omits स कस्मात्. 11–12. Bi. mss. क, ख read यावदिदं किंचिद् भूतं करिष्यमाणं च तस्य. 12. *a. d. m.* करिष्यमाणं for भविष्यमाणं of *bi. j.*, *a. d* omit च after क्रियमाणं.

---

1. 'सरस्वान्'—Nigh. V. 4. 15.

1. सरस्वान् व्याख्यातः सरस्वत्या—See Nir. IX. 26 ( सरस्वती ).

3–4. RS. VII. 96. 5; KS. 19. 14; TS. 3. 1. 11. 3; MS. 4. 10. 1: 142. 11.

5. **इति सा निगदव्याख्याता**—Not explained by Durga.

6. विनियोगः—Âśva. Śrau. 3. 8.

11. 'विश्वकर्मा'—Nigh. V. 4. 16.

कथं सर्वं करोति । पार्थिवाप्यौ धातू तेजसा परिपच्यमानौ वायुर्व्यूहेन विचरन् सर्वभावानुप्रवेशी सर्वमिदमत्यद्भुतमचिन्त्यमकृतात्मभिर्जगत् करोतीति स मध्यमः । विश्वकरणाद् विश्वकर्मा । विज्ञायते हि वैश्वकर्मणं हविरधिकृत्य साकमेधेषु ।

" अथैष वैश्वकर्मणो विश्वानि मे कर्माणि कृतान्यासन्निति विश्वकर्मा हि सोऽभवत् "

5 –इति । भवति चोदकसंबद्धमस्य मध्यमलिङ्गं विश्वकर्माणमधिकृत्य वैश्वकर्मणे सूक्ते

" तमिद् गर्भं प्रथमं दध्र आपः "

–इति । विषुवति च वैश्वकर्मणं ग्रहमधिकृत्य विज्ञायते हि

" इन्द्रो वै वृत्रमहन् स इमं लोकमभ्यजयदमुं नु लोकं नाभ्यजयत् तं विश्वकर्मा भूत्वाभ्यजयत् "

10 –इति । तस्यैव ग्रहस्य पुरोरुचमधिकृत्य विज्ञायते हि

" यथैन्द्री वैश्वकर्मणी विद्यात् तथैव गृह्णीयात् "

–इति । स एष एवमादिभ्यो लक्षणेभ्यः सर्वस्थानानुभावित्वेऽपि सति विशेषतो मध्यम इति मध्यमस्थाने समाम्नातः । **तस्य एषा भवति** ॥ २५ ॥

**" विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक् ।**

15 **तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन् पर एकमाहुः ॥ "**

1. *m.* पार्थिवायो ?; *bi. j* वायुर्व्यूहेन. 2. *a. d.* सर्वमेव for सर्वमिदं; *a. d.* omit स before मध्यमः. 3. *a. d* विश्वकर्मणं; *m.* साकमेध्येषु. 5. *m.* उदकसबंधमस्य, *bi. j.* उदकसंवद्धमस्य; *a. d.* विश्वकर्मणे सूक्ते. 7. *a. d.* वेश्वकर्म (*d.* र्मा) ग्रहमधिकृत्य, *bi. j m.* वैश्वकर्माणं ग्रह . 8. *m.* वृत्रमहत्, *bi. j.* वृत्रमहन्; *m.* अमुं लोकं, *a. d.* अमुं तु लोक, *bi. j.* अमुं नु लोकम्. 10. *m.* ग्रहपुरोरुचम्; *a. d.* omit हि.

4. अथैष etc.—MS. 1. 10. 16. Also *cf.* 'इन्द्रो वै वृत्रं हत्वा विश्वकर्माभवत प्रजापतिः प्रजाः सृष्ट्वा विश्वकर्माभवत्'—AB. 4. 3. 8.

6. RS. X. 82. 6.

7. विषुवति—'विषुवान् नाम संवत्सरसाध्यस्य गवामयनादिसत्रस्य मध्यमाहः'.

8. इन्द्रो वै etc.—MS. 4. 8. 10.

11. यथैन्द्री etc.—The quotation is not traced.

14-15. RS. X. 82. 2; VS. 17. 26; TŚ. 4. 6. 2. 1; MS. 2. 10. 3: 134, 3; KS. 18. 1; AŚ. 3. 8. 1.

विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च संद्रष्टा भूतानाम् । तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वा । अद्भिः सह संमोदन्ते यत्रैतानि सप्तऋषीणानि ज्योतींषि । तेभ्यः पर आदित्यः । तान्येतस्मिन्नेकं भवन्तीत्यधिदैवतम् ।

अथाध्यात्मम् । विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च संदर्शयितेन्द्रियाणाम् । एषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वा । अन्नेन सह संमोदन्ते यत्रेमानि सप्तऋषीणानीन्द्रियाणि । एभ्यः पर आत्मा । तान्यस्मिन्नेकं भवन्तीत्यात्मगतिमाचष्टे ।

तत्रेतिहासमाचक्षते । विश्वकर्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवांचकार । स आत्मानमप्यन्ततो जुहवांचकार । तदभिवादिन्येषर्ग् भवति । "य इमा विश्वा भुवनानि जुह्वद्" इति । तस्योत्तरा भूयसे निर्वचनाय ॥ २६ ॥

**विश्वकर्मा**—इति । भौवनस्य विश्वकर्मणः प्रजापतेरार्षम् । अग्नौ वैश्वकर्मणाभ्यां सूक्ताभ्यां षोडशगृहीतं हूयते तत्र विनियोगः । **विश्वकर्मा विमनाः—विभूतमनाः**—विभूतप्रज्ञानः । सर्वत्राप्रतिहतमस्य प्रज्ञानम् । किं प्रज्ञानमेव केवलम् । न इति उच्यते ।

1. S. संद्दष्टा. 3 and 8. Bi. mss. क, ख, ग read सप्तर्षीणानि for सप्तऋषीणानि in both these lines. 8-9. S. A. तान्यस्मिन्नेकं; Bi. mss. क, ख, ग read अस्मिन् for एतस्मिन्, Bi. J. C. तान्येतस्मिन्. 13. Bi. J. conclude X. iii. 2 with भूयसे निर्वचनाय. 14. *d. m.* read the *pratika* up to विद्युया; *a.* marks verse 29, after इति, as इति२९. 16. *a. d.* ज्ञानं for प्रज्ञानं.

2. Durga does not read वा after इष्टानि, and omits क्रान्तानि वा गतानि वा.

4. तेभ्यः पर आदित्यस्तान्येतस्मिन्—Not explained by Durga.

6. एषां—is not noticed by Durga.

8-9. एभ्यः पर आत्मा तान्यस्मिन्नेकं भवन्ति—Not explained by Durga.

10-11. सर्वमेधे सर्वाणि भूतानि जुहवांचकार—Not explained by Durga.

12. य इमा etc.—RS. X. 81. 1; VS. 17. 17.

15. विनियोगः—See MS. 3. 3. 7. 2. 10. 2; KS. 18. 3. 13.

**आत् विहायाः** । अप्यसावात्मना विहायाः । आत्मनापि सर्वप्रकारं महान् । महत्त्वाच्च **व्याप्ता** एवं सर्वप्रकारं सर्वस्य जगतः । यत एव महान् अतएव **धाता**–उत्पादयिता सर्वभूतानाम् । उत्पाद्य **च विधाता** जीवनस्य । जीवतां च साध्वसाधुषु कर्मसु प्रवर्तमानानां **परमोत संदृक् परमः**–प्रकृष्टः अव्यवधानेन **संद्रष्टा** सम्यक् प्रविभागेन
5 द्रष्टा । साध्वसाधुप्रविभागद्रष्टानां **तेषां च भूतानां** यानि यानि **इष्टानि**–प्रियाणि तस्य विश्वकर्मणो दैवीं संपदमभिसंपन्नानि । कान्त्यर्थो वा इषिः । यान्यभीप्सितानि तस्य विश्वकर्मणः । **मतानि वा** अभिमतानि वा तस्य विश्वकर्मण. । **नतानि वा** प्रह्वीभूतानि तं विश्वकर्माणं प्रति । तत्परिज्ञानश्रद्धोपासनाभावनाप्रक्षयितदुरितानि तेन सह एकीभूतानि विश्वकर्मणा आधिदैविकमात्मानमभिसंपन्नानि । **समिषा मदन्ति । इषा**–
10 उदकेन **अद्भिः** परियुताभिः सुसूक्ष्माभिः **सह** तेन कर्मणा समानम् अविशेषेण **मोदन्ते** । क । **यत्रा सप्तऋषीन् पर एकमाहुः । यत्र एतानि सप्तऋषणानि** रसानामाकर्षणानि द्रष्टृणि वा रश्मीन् **ज्योतींषि एकं भवन्ति** अविभागमुपगच्छन्ति । मण्डले ह्येतेषामविभागः । किं तत्रैव । न इति उच्यते । **यत्र पर एकमाहुः** । क्व च पुनः पर एकमाहुः । मण्डलाधिष्ठातारं योऽसौ यज्ञदानतपसां भोक्ता

15 "**हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात् सर्व एव सुवर्णः**"

–इति विज्ञायते । **एकम्** एव यमाहुर्देवतासतत्त्वविदः । **इत्यधिदैवतम्** । देवतामधिकृत्य मन्त्रस्य व्याख्यानमधिदैवतम् ।

**अथाध्यात्मम्** । आत्मानमधिकृत्य विश्वकर्मणो व्याख्यानम् अध्यात्मम् । कः पुनरयमात्मा । विज्ञानसतत्त्वमात्रं सविशेषविज्ञानप्रसवबीजं यदेकदेशाः प्रच्युता इव

2. *a. d.* व्याप्नोति for व्याप्ता; *a. d.* add च after यत एव. 4. *a. d.* परमोत्तम (*d.* मं) दृक् for परमोत संदृक्; *a. d. m.* अव्यवधानेन for अवधानेन of *bi. j.*; *a. d.* संद्रष्टा. 5. *a. d.* omit one यानि. 6. *a. d.* काम्यर्थो वा for कान्त्यर्थो वा. 7. *a. d. m.* omit वा after अभिमतानि. 8. *m.* तं विश्वकर्मणा प्रति; *a. d. m.* °प्रक्षपित° for °प्रक्षयित°. 10. *d.* मोदते for मोदन्ते of *bi. j.* 11. *m.* परमाहुः. 12. *m.* द्रष्टनि, *bi.* mss. क, ख omit रश्मीन्. 18. *d.* अथाध्यात्म for °मम्. 19. *a. d.* सविशेषविज्ञान° for सर्वविशेषविज्ञान° of *bi. j. m.*

11–12. ऋषीणानि=आकर्षणानि, द्रष्टृणि ( Durga ). The Dhatupâtha 6. 7 however, gives ' ऋषि गतौ ' as the only meaning of the root.

16. इति विज्ञायते—Chhând. Up. 1.6. 6.

सन्तस्ततः कथमप्यविद्याव्यवधानादन्यत्वमिव बिभ्रतः प्रतिशरीरं शास्त्रेण ताद्भाव्यं यावच्छिछ्यते । सोऽयमात्मा प्रतिशरीरं क्षेत्रज्ञत्वेन स्वविशेषविज्ञानशक्त्याधिकामनुभवन् हिरण्यगर्भावस्थामधिदैवमित्युच्यते । अथ पुनरन्यः शरीरावस्थासु वर्तमानः तदधिदैवतमनपेक्ष्य प्रतिशरीरं क्षेत्रज्ञत्वेन यद्विश्वकर्मभावमनुभवन् मन्त्रेण व्याख्यायते तदध्यात्ममस्य । 5

**विश्वकर्मा सर्वस्य कर्ता** परमात्मा प्रतिशरीरं क्षेत्रज्ञत्वेन वर्तमानः तत्कृतत्वाद् वायोः क्रियापरिस्पन्दस्य । न केवलं सर्वक्रियाशक्तिमान् । किं तर्हि । **विमनाः** च **विभूतमनाः** सर्वप्रज्ञानः सर्वतोमुखाभिः विशेषविज्ञानशक्तिभिः । **आद्विहायाः** । अपि च **विहायाः**—महान् । विज्ञायते हि

"स वा एष महानात्मा अन्नादो वसुदानः" 10

—इति । न केवलं महान् । कि तर्हि । **धाता**—स्रष्टा स्वशक्तिविशेषस्य । **विधाता** च तद्योग्यानां विषयाणाम् । विक्षिप्तविहितानां च तेषां **परमः**—उत्कृष्टः **इन्द्रियाणां संदर्शयिता** तत्कृतत्वाद् विषयविषयिसंबन्धस्य इन्द्रियाणां च तदधिष्ठितानां प्रतिविषयमालोकसामर्थ्योपजनात् । तस्य विश्वकर्मणः परमात्मनः **तेषां** स्वशक्तिविक्षेपात् क्षेत्रज्ञविभूतीनां यानि **इष्टानि** पूर्ववत् परमात्मज्ञानश्रद्धोपासनाभावनाप्रक्षयितदुरितानि 15 तानि **इषा—अन्नेन** सह **संमोदन्ते**—तृप्यन्ति । क्व । **यत्रा सप्तऋषीन् यत्र**

---

1. *j.* तावद्भाव्यं ? 2. *bh. j.* स्वविशेषेण विज्ञानशक्त्याधिकारमनुभवन्, *m.* स्वविशेषेण विज्ञानशक्त्याधिकार°. 3. *a.* alone omits इति before उच्यते. 4. *a. d.* omit क्षेत्रज्ञत्वेन before यत्; *m.* मंत्रेण व्यायते. 8. *a. d. m.* विभूतमनाः सर्वप्रज्ञातः सर्वतोमुखाभिः. 11. *a. d. m.* स्वशक्तिविक्षेपस्य for °विशेषस्य. 12. *a. d.* प्रकृष्टः for उत्कृष्टः. 12–13. *m.* omits इन्द्रियाणां संदर्शयिता तत्कृतत्वाद् विषयविषयिसंबन्धस्य. 14–15. *a. d.* स्वशक्तिविक्षेपक्षेत्रज्ञविभूतीनां etc. 15. *bh.* mss. क, ख omit पूर्ववत्; *a. d.* °प्रक्षपित°, *m.* °प्रक्षिपित° for °प्रक्षयित°. 16. *a. d. m.* omit तानि; *a. d. m.* मोदन्ते for संमोदन्ते.

---

1. The word बिभ्रतः leaves the sentence incomplete. It would be complete if बिभ्रति is used for बिभ्रतः.

9. **विहायाः**—Yâska explains this word by व्याप्ता. Durga renders it by महान्. For विहायाः=महान see Nigh. III. 3. 12.

10. Bṛh. Up. 4. 4. 24.

**इमानि सप्त ऋषीणानि इन्द्रियाणि** द्रष्टॄणि इन्द्रियाणि **ज्योतींषि** एकमाहुः । क । बुद्धौ । तस्यामपि ह्येतेषामेकत्वमस्त्विति । किं तत्रैव । न इति उच्यते । **पर एकमाहुः** । न यतः परतरमस्ति तस्मिन् परतरे विश्वकर्मणि यदन्नं शक्तिमात्रं यदुपविष्टम्भात् परमात्मा नित्यतृप्तः तेनान्नेन परमात्मनि तद्विज्ञानोपासनात् ताद्रात्म्यमुप-
5 गतास्तेन सहभूता मोदन्ते निरशनापिपासाः नित्यतृप्ताः अतीतशोकमोहजरामृत्यव आत्म-विद इत्येवमाहुः सतत्त्वदृशो ब्राह्मणाः । यथा चानुपक्षीणस्वधाशक्ति नित्यतृप्तं सर्वभावपरं तत्परं ब्रह्म यदात्मविदः प्रतिपद्यन्ते तथा पुराणसूक्तेऽपि परमेष्ठिन आर्षे मन्त्रो दर्शयति ।

"स्वधया तदेकं तस्माद्धान्यं न परः किं चनास"

–इति । एवं सर्वत्र संभवो यावद्विषयो मन्त्राणां योज्यः इत्युपप्रदर्शनायोभयथा मन्त्रो
10 वर्णितः ।

**इत्यात्मगतिमाचष्टे** । अमुना प्रकारेण वर्ण्यमान एष मन्त्र आत्मगतिमाचष्टे प्रख्यापयति । यथा चेयमात्मगतिवाचिका ऋक् **तत्र** एतस्मिन्नर्थे **इतिहासमाचक्षते** आत्मविदः इतिवृत्तं परकृत्यर्थवादरूपेण । यः कश्चित् आध्यात्मिक आधिदैविक आधि-भौतिको वार्थ आख्यायते दिष्ट्युदितार्थावभासनार्थं स इतिहास इत्युच्यते । स पुनरय-
15 मितिहासः सर्वप्रकारो हि नित्यमविवक्षितस्वार्थः । तदर्थप्रतिपत्तॄणामुपदेशपरत्वात् । **विश्वकर्मा ह भौवनः** । यथोदितमिदं वैदिकं कर्म संबन्धदर्शनेन यः सर्वं करोति सर्वात्मकत्वात् सर्वस्य वैश्वकर्मणीमवस्थामात्मन्युन्नीय स यजमानो विश्वकर्मा भुवनानां भूतानामात्मनि होता भूतेषु चात्मानम् । तथाहि विज्ञायते

"हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनि"

20 –इति । तथा च विदुषो दर्शनकृतः सर्वमेधसंपत्सर्वकर्मसु । विज्ञायते ह्यग्निहोत्रमधिकृत्य

---

1. *a. d.* सप्तरिषणानि, *m.* सप्तर्षणानि. 2. *a. d.* अस्ति for अस्त्विति. 3. *a. d.* परे for परतरे. 6. *a.* only reads यच्च for यथा च. 13. *m.* परिकृत्यर्थवादरूपेण. 15. *a. d.* omit हि. 19. *a.* only reads वा for च before आत्मनि. 20. *a. d.* दर्शनकृता for दर्शनकृतः.

---

8. RS. X. 129. 2; Nir. VII. 3.
14. इतिहासः—This is S'B.13. 7. 1. quoted below.
16. **विश्वकर्मा ह भौवनः**—The *bhāṣya* of Yāska has no 'ha'.
19. ŚB. 13. 7. 1. 1.

"स यत् सायं जुहोत्यग्निमेव तदनेन सर्वेणादित्ये जुहोत्यग्निमेवेदं सर्वमनु सर्वं तद्यथाऽनेन सकृत् सर्वं तेनेष्ट्वा लोकं जयेत तावदु ह प्रातराहुत्या लोकं जयते ग्स्यैते आहुती न बद्धं यावज्जीवमाप्नोति स हि बहूनि च न बद्धानि एतयोर्देवतयोरन्यतरामनु" –इति । न बद्धमित्यनन्तमुच्यते । तदेवं यस्मिन् कस्मिंश्चिन्मेधे कर्मणि अग्निहोत्रादौ सर्वः सर्वेण सर्वस्मिन् सर्वस्यै सर्वार्थं हुत्वात्मानं सर्वमेव भवतीति समासार्थः । स एषः 5 सर्वस्य विदुषः सर्वः सर्वहुत् यज्ञः सर्वभावाय संपद्यते दर्शनतः । यो हीतरः सर्वमेधो निरूढसंज्ञोऽहीनः तद्यथा त्रीण्याश्वमेधिकानि पञ्च पौरुषमेधिकानि वाजपेयाप्तोर्यामौ चेति तत्र **स आत्मानमपि अन्ततो जुहवांचकार** इति एतदात्महोमस्याविधानान्नोपपद्यते । दर्शनतस्तु सर्वमुपपद्यते ।

"सर्वभूतानि विशेषान् सामान्यात्मनि जुहाव पश्यन् सामान्यं चात्मानं विशेषे 10 जुहाव पश्यन् सर्वकर्मसु स्वयमेव ।"

अयमात्मयाजीत्युच्यते । यमधिकृत्य पृष्टं

"तदाहुः । आत्मयाजी श्रेयान् देवयाजी"

–इति । यथा चैतदेवमधिदैवविद आत्मवित् श्रेयान् यमधिकृत्य

**"विश्वकर्मा विमना आद्विहायाः"** 15

–इतीयमृक् आत्मगत्या निरुक्ता **तदभिवादिनी** तस्यैवार्थस्य इतिहासोक्तस्याभिवादिनी आभिमुख्येन वादिनी **एषा ऋक् भवति** । यथा

**"य इमा विश्वा भुवनानि जुह्वत्"**

---

4. *a. d.* न विबद्धमिति for न बद्धमिति; *a. d.* कस्मिंश्चिन्सर्वे for °मेधे. 5. *a. d.* सर्वे for सर्वः; *d.* ससर्वेण; *a. d.* सर्वमेव, *bi. j. m.* सर्वमेवं. 6. *m.* omits सर्वः before सर्वहुत्. 7. *a.* only reads हिनः for ऽहीनः. 8. *d.* वेति for चेति; *bi. j.* इति । स एतदा°, *d.* इत्येतदा°. 8–9. *bi. j. m.* °होमस्य विधा°. 10. *a. d.* भूतानि for सर्वभूतानि. 16. *a. d. m.* omit तदभिवादिनी. 17. *a.* marks verse 30 after भवति यथा, as यथा[३०].

---

1–3. The quotation is not traced. *Cf.* AB. 5. 5. 1–9.

10–11. The quotation is not traced.

13. तदाहुः—ŚB. 11. 2. 2. 13.

18. RS. X. 81. 1.

–इति। अनेकेषां समानप्रयोगदर्शनाधिकारवतां ग्रः नाम कश्चित्। किमिति। एवं न्यसीददेवं कर्मण्यङ्गभावमुपजगाम। कथम्। ऋषित्वेन होता द्रव्यगुणकर्मदेवता-याथार्थ्यद्रष्टृत्वेन। **विश्वा भुवनानि जुह्वत्** सर्वभूतान्यमुना सर्वमेधसंपद्दर्शनप्रक्रमेण जुह्वत्–ह्वावयन्। तस्य किम् इति। सः आशिषा। आशीः प्रार्थना कामः प्रयोगदर्शन-
5 हेतुः सर्वमिदमहं स्यामिति। येन प्रेर्यमाणः सर्वकर्मसु सर्वमेधं सर्वप्राप्तये प्रायुङ्क्त द्रविणमिच्छमानः प्रयोगजनितापूर्वफलं सर्वभावमिच्छन्। तत् किं नाप। न इति उच्यते। आप। कथम् इति। **प्रथमच्छत्।** प्रथमोऽग्रजत्वात्। प्रजापतिभावेन मुख्यस्य छादयिता यतः संपेदे तथा सन् अवरान् पश्चादुत्पन्नान् अस्मदादीन् विशेषान् आविवेश व्याप्तवान् व्याप। यस्यैवं प्रयोगफलयोर्वृत्तिः स नः पिता जनिता सोऽस्माकं
10 पिता–पाता जनयिता–रक्षिता चेत्येवं विजानीमः। अतः ताद्भाव्यमश्नुवीमहीति। यथा चैतदेवं नान्यथेति तथेयम् **उत्तरा ऋक् भूयसे** बहुतराय **निर्वचनाय** ॥ २६ ॥

**"विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम्।**
**मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥"**

**विश्वकर्मन् हविषा वर्धयमानः स्वयं यजस्व पृथिवीं च दिवं च।**
15 **मुह्यन्त्वन्ये अभितो जनाः सपत्नाः। इहास्माकं मघवा सूरिरस्तु प्रज्ञाता ॥**

---

1. *a. d. m.* °अधिकारतां for °कारवतां. 2. *a. d.* न्यसीददेवं, *j.* न्यसीदेवं? *bi.* mss. क, ख do not have न्यसीददेवं. 3. *a. d. m.* °याथात्म्य° for °याथार्थ्य°. 4. *a. d.* ह्वावयत् for अह्वावयत् of *bi. j. m.* 4–5. *m.* प्रयोगदर्शने हेतुः. 6. *d.* तत्किमाप for तत् किं नाप. 8. *a. d.* मुख्यच्छादयिता; *d. m.* संपेदे, *bi. j.* संपदे. 10. *d.* omits पाता; *a. d.* omit जनयिता; *a.* only adds अविता after रक्षिता; *a.* alone omits before . 15. Bi. mss. read मुह्यन्त्वन्येऽभितो जनासः.

---

12–13. RS. X. 81. 6; SV. 2. 939; VS. 17. 22; TS. 4. 3. 13. 8: 6. 2. 6; MS. 2. 10. 2: 133. 16; KS. 18. 2; 21. 13; AS'. 2. 18. 19; 3. 8. 1.

**तार्क्ष्यस्त्वष्ट्रा व्याख्यातः । तीर्णेऽन्तरिक्षे क्षियति । तूर्णमर्थं रक्ष-त्यश्नोतेर्वा । तस्यैषा भवति ॥ २७ ॥**

**विश्वकर्मन् हविषा**–इति । प्रयोगावस्थां फलावस्थां च विश्वकर्मणः प्रतीत्योच्यते । हे **विश्वकर्मन्** प्रयोगावस्थित त्वमुच्यसे । अनेन **हविषा** सर्वमेधदर्शनसंपदादियुक्तेन त्वं वर्धमानः विश्वकर्मत्वमापद्यमानः तत्फलविपरिणामकाले **स्वयं यजस्व** स्वयं संग- 5
च्छस्व–व्याप्नुहि **पृथिवीम् उत द्यां पृथिवीं च दिवं च** । सर्वव्यापी भव । अपि च । तत्रैतस्मिन् दर्शनकृते महिम्नि **मुह्यन्त्वन्ये अभितो जनासः** । मोहमुपगच्छन्तु **अभितः** सर्वतः ते **जनाः** ये त्वदुपासनापराङ्मुखाः सन्तः तव **सपत्नाः** समानं पति-त्वमिच्छन्ति । अथ पुनः **इह** त्वद्दर्शनोपासनाकर्मणि वर्तमानानां भव **अस्माकं मघवा** सर्वधनेशानः । **सूरिः**–मेधावी सर्वत्राप्रतिहतप्रज्ञानः **प्रज्ञाता** विशेषतोऽस्मा- 10
कम् **अस्तु** इत्येतदाशास्महे ।

त्वष्टा विश्वकर्मा इत्यधिभूतप्रधानाः पुराणविदः । तथापि कलाकौशलादिसर्वज्ञानहेतुको नामप्रतिलम्भ इत्यविप्रतिषिद्धम् । एवं सर्वासु देवतासु ॥

**तार्क्ष्यः** (१७) इति वक्तव्यम् । स पुनरेष **त्वष्ट्रा व्याख्यातः** । तद्यथा । **तूर्णमश्नुते** इत्येवमादि । अथवा **तीर्णे अन्तरिक्षे** सर्वतो गते **क्षियति**–निवसति । 15

---

1. C. D. तीर्णेऽन्तरिक्षे, Bi. mss. क, ख, ग and Bi. J. तीर्णे अन्त°. 2. Bi. J. conclude X. iii. 3 with भवति. 3. *a.* marks verse 31 after इति, as इति[३१]; *d. m.* mark the *pratīka* up to वावृधान इति. 5–6. *m.* गच्छस्व, *bi. j.* संगच्छस्व. 6. *a. d. m.* omit पृथिवीमुत द्यां. 7. *a. d.* तथैव तस्मिन् for तत्रैतस्मिन् of *bi. j.* 8. *a. d.* त्वदुपासापराङ्मुखाः; *a. d.* omit संतः. 9. *a. d. m.* read वर्तमानानां भव ( *d.* भवा ) and omit अस्माकम् after it, *bi. j.* वर्तमानानां अस्माकम्.

---

1. The etymologies of the word '*tārkṣya*' given after व्याख्यातः seem to be later additions. They are not after the manner of Yâska.

5. वर्धमानः—Durga renders वावृधानः in the ṛik by वर्धमानः. Yâska explains it by वर्धयमानः.

14. 'तार्क्ष्यः'—Nigh. V. 4. 17.

14. व्याख्यातः—See Nir. VIII. 13.

अथवा **तूर्णम्** उदकाख्यं **रक्षन्त्यश्नुते वा** । अर्थविकल्पेन तूर्णशब्दात् पूर्वपदं रक्षतेरश्नोतेर्वोत्तरपदम् ।

**तस्य एषा भवति ॥ २७ ॥**

**" त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् ।**

5 **अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥"**

**तं भृशमन्नवन्तम् । जूतिर्गतिः प्रीतिर्वा । देवजूतं देवगतं देवप्रीतं वा । सहस्वन्तं तारयितारं रथानामरिष्टनेमिं पृतनाजितमाशुं स्वस्तये तार्क्ष्यमिह ह्वयेमेति । कमन्यं मध्यमादेवमवक्ष्यत् । तस्यैषापरा भवति ॥ २८ ॥**

10 **त्यमू षु वाजिनम्**–इति । अरिष्टनेमेरार्षम् । विषुवति निष्केवल्ये शस्यते । " सद्यश्चित् " इति च । यः **तार्क्ष्यः–वाजी** वेजनवान् भयदाता परेभ्यः बलवान् वा **त्यं**–तं **देवजूतं** देवैर्गतं, परत्वेन ज्ञातं वा परोऽयमस्माकमिति । **देवप्रीतं** देवैर्वा समानप्रीतम् । **सहावानं** सहो–बलं तेन तद्वन्तम् । एतदेव मध्यमलिङ्गम् ।

---

6. The mss. क, ग of Bi. do not have देवगतं. 9. Bi. J. conclude X. iii. 4 with भवति. 10. *a.* marks verse 32 after इति, as इति[३२]. 11. *a. d.* add वा after भयदाता. 12. *a. d. m.* omit त्यं; *a. d.* न चापरोयमस्माकमिति for परोयमस्माकमिति. 13. *d.* सहवानं ?.

---

1. तूर्णं **रक्षत्यश्नुते वा**—is Durga's reading. The text reads तूर्णमर्थं रक्षत्यश्नोतेर्वा. See lines 1–2, page 1003.

4–5. RS. X. 178. 1; AV. 7. 85. 1; SV. 1. 382; AB. 4. 20. 22; KB. 25. 8; ṢB. 5. 1; AS. 7. 1. 13; AA. 5. 3. 1. 2.

6. सु=भृशम्, and वाजिनम्=अन्नवन्तम् ( Yâska ). But Durga does not assign the meaning अन्नवान् to वाजी and derives the latter from '*vij*', to frighten, to move. *Cf.* ओविजी भयचलनयाः—Dhâtup. 6. 9.

6. Bi. mss. क, ग do not have **देवगतं**.

6–8. The following words of this section are not explained by Durga—**भृशमन्नवन्तम्, जूतिर्गतिः प्रीतिर्वा, सहस्वन्तम्, पृतनाजितम्, तार्क्ष्यमिह** and **इति**.

10–11. सद्यश्चित्—RS. X. 178. 3, quoted in the next section.

**तरुतारं**–तारयितारं, **रथानां** रंहितॄणां भूतानाम् । गतिमतां गमयितारमित्यर्थः बलहेतुकत्वाद् गमनस्य । एवमादिगुणयुक्तम् **अरिष्टनेमिं** केनचिदप्यप्रतिहतवज्रप्रहरणम् । नेमिरिति वज्रनाम । **पृतनाजं** पृतनानां जेतारम् । **आशुं**–शीघ्रं **स्वस्तये** आत्मनः स्वस्त्ययनाय सुष्टु वयम् **इह** एतस्मिन् कर्मणि **हुवेम**–आह्वयामहे ।

**तस्य एषा अपरा भवति** । सा पुनः किमर्थम् । बलकृतिरुपप्रदर्शिता । वर्षकर्मोपप्रदर्श्यतेऽनया । सत्यामपि हि बलकृतौ पक्षिराजे गरुत्मति संदेहोऽसावपि बलवांश्च तार्क्ष्यनामा च । वर्षकर्म त्वसमानं तेनास्य । अतश्चोक्तमेतदेव विचारास्पदमपेक्ष्य **कम् अन्यं मध्यमात् एवम् अवक्ष्यत्** इति ॥ २८ ॥ 5

**सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान ।**
**सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्याम् ॥"** 10

**सद्योऽपि यः शवसा बलेन तनोत्यपः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि । सहस्रसानिनी शतसानिन्यस्य सा गतिः । न स्मैनां वारयन्ति प्रयुवतीमिव शरमयीमिषुम् ॥**

**मन्युर्मन्यतेर्दीप्तिकर्मणः । क्रोधकर्मणो वधकर्मणो वा । मन्युन्त्यस्मादिषवः । तस्यैषा भवति ॥ २९ ॥** 15

---

2. *a. d. m.* add तं before एवमादि etc. 3. *a. d. m.* omit पृतनाजं. 3–4. *d.* omits स्वस्तये आत्मनः. 4. *a. d. m.* omit इह and हुवेम. 6. *m.* गरुत्मति. 7. *a. d.* विचारात्पदं पदं अपेक्ष्य etc. 14. J. बधकर्मणो, Bi. mss. क, ख, ग do not have वधकर्मणो. 14–15. Bi. J. मन्युं त्वस्मादिषवः, C. D. and Bi. ms. च have मन्युं त्यस्मा°, R. मन्युन्त्यस्मादिषवः, Bi. ms. ख has मन्युं तस्मा°, Â. S. मन्यन्त्यस्मा°. 15. Bi. J. conclude X. iii. 5 with भवति.

---

9–10. RS. X. 178. 3; AB. 4. 20.

11–13. शवसा etc.—Durga does not read **शवसा, सहस्रसानिनी, शतसानिनी, सा, एनां** and **प्रयुवतीमिव**. He reads एतां for **एनां** and प्रतिमिश्रयन्ती for प्रयुवतीं.

14. The mss. क, ख, ग of Bi. do not read **वधकर्मणो**.

14–15. **मन्युन्त्यस्मादिषवः**—Durga does not give this etymology. Obviously it is an absurd interpolation.

**सद्यश्चिद्यः शवसा पञ्च कृष्टीः**–इति । **सद्योऽपि यः** ताक्ष्यः **बलेन तनोति अपः** वर्षभावेन । **सद्यः**–शब्दो लक्षणार्थः अद्य श्वः परश्वः परुत् परारि चेति । **चित्** इति अप्यर्थे । न कदाचिदप्यन्यः सर्वदा ताक्ष्यं एवेति । कि प्रति अपः तनोति । **पञ्च कृष्टीः पञ्च मनुष्यजातानि** प्रति ब्राह्मणप्रमुखान् निषादपञ्चमान्
5 वर्णान् प्रति । तदनुग्रहपूर्वकत्वात् सर्वलोकानुग्रहस्य कृष्टिग्रहणेन तद्विवक्षा । कथम् । **सूर्यः इव ज्योतिषा ।** यथा सूर्यो ज्योतिः–प्रकाशं लोकानुग्रहाय तनोति तथा ताक्ष्यः अपः तनोति । यथा हविषा विधेमेति नम्यते तत्र कस्मै देवायेति संप्रदान-श्रुतेः संप्रदानावैधुर्याय एवमिहाप्युपमानोपमेयकारकसंबन्धावैधुर्याय ज्योतिरिति नम्यते । कस्मात् पुनरयम**पस्ततान** इति । इतः यस्मात् **सहस्रसाः शतसा अस्य रंहिः ।**
10 बहूंश्च बहुतरांश्च प्रकारान् मेघविदारणाय भजते **अस्य** ताक्ष्यस्य **रंहिः–गतिः ।** अपि चैवमसह्यास्य गतिः **न स्मा वरन्ते नैवैतामस्य वारयन्ति** न प्रतिबद्धुं शक्नुवन्ति केचन अतिवेगवत्त्वात् । कथम् । **युवतिं न शर्याम् ।** अतिबलवता धनुष्मता मुक्तां **शरमयीम् इषुम् ।** अन्येन वान्येन वाकाशप्रदेशेन प्रतिमिश्रयन्तीमात्मानम् । य एवमादिगुणयुक्तः ताक्ष्यः स इदं नामास्माकं करोत्विति ॥

15 **मन्युः** (१८) **मन्यतेः** क्रोधार्थस्य दीप्त्यर्थस्य वा । उभयमप्युपपद्यते बलवत्त्वात् मध्यमस्य । **तस्य एषा भवति** ॥ २९ ॥

**"त्वया मन्यो सरथमारुजन्तो हर्षमाणासोऽधृषिता मरुत्वः ।**
**तिग्मेषव आयुधा संशिशाना अभि प्र यन्तु नरो अग्निरूपाः ॥"**

---

1. *a.* marks verse 33 after इति, as इति[33]. 3. *d. m.* कं प्रति for किं प्रति. 5–6. *a. d.* omit after सर्वलोकानु, ग्रहस्य etc. to तनोति. 5. *bi. j.* वृष्टिग्रहणेन. 7. *a. d.* ताक्ष्यः, *bi.* तक्ष्यः. 8. *d.* उपमानोपमेयकारसंबंधा°; *a. d.* गम्यते, *bi. j.* नम्यते. 10. *d.* मेघविहारणाय. 11. *m.* न स्मा वरंते नैवैतामस्य, *bi. j.* तस्माद् वरं तेनैव एताम् अस्य; *a. d.* प्रतिबंद्धुं. 13. अन्येन चान्येन त्वा (*d.* चा) काश-प्रदेशेन; *m.* वाकाशप्रदेशेनाप्रतिमिश्रयन्ती°. 15–16. *bi.* ms. ग reads बलवान् मध्यमश्च.

---

7. कस्मै देवाय हविषा विधेम—See Nir. X. 23.

17–18. RS. X. 84. 1; AV. 4. 31. 1; TB. 2. 4. 1. 10.

**त्वया मन्यो सरथमारुह्य रुजन्तो हर्षमाणासोऽधृषिता मरुत्वस्तिग्मेषव आयुधानि संशिश्यमाना अभिप्रयन्तु नरो अग्निरूपा अग्निकर्माणः । संनद्धाः कवचिन इति वा ॥**

**दधिक्रा व्याख्यातः । तस्यैषा भवति ॥ ३० ॥**

**त्वया मन्यो**–इति । तपसः पुत्रो मन्युर्नाम तस्यार्षम् । श्येनाजिरादिषु निष्केवल्ये 5
विनियोगः । हे भगवन् **मन्यो त्वया सरथम्** एकमेव त्वया सह रथं **समारुह्य**
**रुजन्तः** परान् अभिभवन्तः **हर्षमाणासः** तवाश्रयादविकलाः हृष्यन्तः **अधृषिताः**-
अनाधर्षिताः परैः । अपि च हे **मरुत्वः तिग्मेषवः** एते अस्मद्योधाः **आयुधा**–
**आयुधानि संशिशानाः–संशिश्यमानाः** तीक्ष्णानामिषूणामायुधानां च योऽर्थः
तमनुतिष्ठन्तः । भिन्दन्तः इषुभिः, छिन्दन्तः आयुधैः । अमुना प्रकारेण एते **नरः**– 10
नराः अस्मन्मनुष्याः योधाः **अग्निरूपाः–अग्निकर्माणः** अग्नय इवैते सेनाम् **अभि**-
भवन्तः **यन्तु** इति ॥

**दधिक्राः** (१९) इति वक्तव्यम् । स **व्याख्यातः** । 'दधत् क्रामति' इत्येवमादि
सर्वं मध्यमे योज्यम् । **तस्य एषा भवति** ॥ ३० ॥

**"आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान ।** 15
**सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि ॥"**

---

4. Bi. J. conclude X. iii. 6 with भवति. 5. *a.* marks verse 34, after इति, as इति[३४]; *d. m.* read the *pratika* up to °मारुजन्तः; *d.* तस्यार्षः for तस्यार्षम्. 7. *a. d.* रुजन्तः परान् भजन्तः हर्षमा°; *m.* रुजन्तः परान् रुजन्तः अभिभवन्तः हर्षमा°; *bi. j.* रुजन्तः अभिभवन्तः हर्षमा°; *bi.* mss. क, ख have परान् रुजन्तः. 7–8. *d. m.* हृष्यन्तः धृषिताः परैः. 8. *a.* only मरुत्व तिग्मेषवः ? 8–9. *a. d. m.* omit आयुधा and संशिशानाः. 10. *a. d. m.* omit नरः. 11. *a. d.* read अस्मन्नराः and अस्मन्मनुष्ययोधाः.; *m.* अग्नय एवैते. 16. R. वचाँसि.

---

3. Durga does not explain संनद्धाः कवचिन इति वा.
6. विनियोगः—Âśva. Śrau. 9. 8.
13. 'दधिक्राः'—Nigh. V. 4. 19.
13. व्याख्यातः, *i. e.* in Nir. II. 27.
15–16. RS. IV. 38. 10.

**आतनोति दधिक्राः शवसा बलेनापः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि। सहस्रसाः शतसा वाजी वेजनवानर्वेरणवान् संपृणक्तु नो मधुनोदकेन वचनानीमानीति। मधु धमतेर्विपरीतस्य॥**

**सविता सर्वस्य प्रसविता। तस्यैषा भवति॥ ३१॥**

5 **आ दधिक्राः शवसा**–इति। वामदेवस्यार्षम्। **आततान–आतनोति** सर्वं तत्तनोति। कोऽसौ इति। **दधिक्राः**। केन। **शवसा–बलेन**। किमातनोति। **अपः**। क्व। **पञ्च कृष्टीः पञ्च मनुष्यजातानि** प्रति। कथम्। **सूर्यः इव ज्योतिषा**। **सहस्रसाः शतसाः** बहूनां बहुतराणां च उदकानां संभक्ता **वाजी–वेजनवान्** **अर्वा–ईरणवान्**–उदकेरणक्रियायोगी। य एवमादिगुणयुक्तो दधिक्राः सोऽस्माकम्
10 **इमा–इमानि** स्तुतिवाक्यानि स्तुतिलक्षणानि **वचांसि संपृणक्तु मध्वा–मधुना–उदकेन। मधु धमतेः** आद्यन्त**विपरीतस्य**। उदकं स्तुत्यनन्तरमेव ददात्वित्यर्थः। बलकृतिः वर्षकर्म चोभयमप्यस्ति तस्मात् मध्यमः॥

**सविता** (२०) इति वक्तव्यम्। सः व्याख्यातः। 'इममेवाग्निं सवितारमाह' इत्यत्र। स पुनरिह वर्षकर्मयोगात् मध्यमः। **तस्य एषा भवति**॥ ३१॥

---

1. Bi. mss. क, ख, ग omit शवसा. 2. R. °रणवान्त्संपृणक्तु. 4. Bi. J. conclude X. iii. 7 with भवति. 5. *a.* marks verse 35 after इति, as इति [३५]; *a. d. m.* read the *pratīka* up to कृष्टीः; *a. d. m.* omit आततान. 9. *m.* उदके ईरणक्रियायोगी. 10. *a. d. m.* omit इमा; *a. d. m.* omit मध्वा. 11–13. *a. d.* omit from मधु धमतेः to इति वक्तव्यम् and only read मधुधा सविता व्याख्यातः इममेवाग्निं etc. 12. *m.* बलकृतिर्वर्षकर्म चोदकमप्यस्ति. 13. *m.* omits इति वक्तव्यम् सः.

---

1. **शवसा**—omitted by क, ख, ग mss. of Bi.

3. **नो** and **वचनानि**—not repeated in *the vritti* by Durga.

4. **सविता, सर्वस्य प्रसविता**—Durga does not give this etymology but merely refers to Nir. VII. 31. See his *vritti*, below—सविता व्याख्यातः...... इत्यत्र. The etymology, therefore, seems to be a later addition.

13. 'सविता'—Nigh. V. 4. 20; व्याख्यातः—Nir. VII. 31.

"सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत् ।
अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्धं सविता समुद्रम् ॥"

सविता यन्त्रैः पृथिवीमरमयत् । अनारम्भणेऽन्तरिक्षे सविता द्याम-दृंहत् । अश्वमिवाधुक्षद्धुनिमन्तरिक्षे मेघम् । बद्धमतूर्ते । बद्धमतूर्ण इति वा । अत्वरमाण इति वा । सविता समुदितारमिति । कमन्यं 5 मध्यमादेवमवक्ष्यत् ।

आदित्योऽपि सवितोच्यते । तथा च हैरण्यस्तूपे स्तुतः । अर्चन् हिरण्यस्तूप ऋषिरिदं सूक्तं प्रोवाच । तदभिवादिन्येषर्ग् भवति ॥ ३२ ॥

**सविता यन्त्रैः**–इति । अर्चन्नामा हैरण्यस्तूप ऋषिः उत्तरायाश्च । **सविता** मध्यमः सर्वबलेशानः । किम् इति । **यन्त्रैः पृथिवीम् अरम्णात्** । यावत् किंचित् यन्त्र्यते 10 तत् सर्वं बलेनैव । यन्त्रिता च इयं पृथिवी निश्चला । न चान्य इन्द्रात् बलवान् यन्त्रयिताऽस्ति । तस्मात् इन्द्र एवेमां संयच्छन् स्थिराकमरोत् । 'रम्णातिः संयमनकर्मा' इति उक्तम् । अथवा वर्षणोपकारेण पृथिवीलोकनिवासिनो धारयति । तदस्याः संयमनम् । किमेतावदेव । न इति उच्यते । **अस्कम्भने सविता द्यामदृंहत्** । एवमप्येतास्मिन् **अस्कम्भने–अनारम्भणे** अमूर्तेऽन्तरिक्षे यत्र पर्णमपि नालमवस्थानाय तत्रैव- 15 मप्यतिगुर्वी सौवर्णी **द्यां सविता** एव **अदृंहत्**–स्थिरामकरोत् आभूतसंप्लवात् । को हि नाम मध्यमात् सवितुरन्य एतदतिदुष्करं कुर्यात् । अपि च । **अश्वम् इव**

3. Bi. ms. क reads अनालम्भने and ख, ग read अनालम्बने for अनारम्भणे of Bi. J. 5–6. Bi. mss. क, ख, ग have कमन्यमादित्यादेवमवक्षत्. 8. Bi. J. conclude X. iii. 8 with ऋग् भवति. 9. *a.* marks verse 36, after इति, as इति ३६; *d. m.* read the *pratīka* up to °मरम्णात्; *a. d.* read आङ्गिरसः for हैरण्यस्तूपः. 10. *m.* सर्वस्येशानः for सर्वबलेशानः. 13. *a. d.* add सा before पृथिवीलोक°. 16. *a. d. m.* सौवर्णीं, *bi. j.* सौपर्णीं; *bi.* °संप्लवान् (wrong).

1–2. RS. X. 149. 1.

3–5. **अरमयत्** and **बद्धमतूर्ण इति वा**—omitted by Durga.

13. इति उक्तम्—Nir. X. 9.

**अधुक्षत्**। यथा अश्वबन्धो अश्वं धूनुयात् उपावृत्तम् अनायासेन रजः तस्मादपनेष्यन् एवं **धुनिं-समुद्रम्** उदकबन्धितारं **मेघम् अधुक्षत् सविता** अधूनोत्-अकम्पयत् उदकप्रक्षरणाय। क्व **बद्धम्**। **अतूर्ते** एतस्मिन्नन्तरिक्षे अहिंसिते। **अत्वरमाणे वा** सर्वगतत्वात्। आकाशे गमनायायोग्ये वा। वाय्वात्मनैव विष्टभ्य निश्चेष्टं बद्धमिवाधुक्षत् 5 यः **सविता** सोऽस्माकमिदं नाम करोतु इति। **समुदिता-समुद्रः-मेघः**।

**कम् अन्यं मध्यमात् एवम् अवक्ष्यत्** मेघमधूनोत् इति। कुतः संशयः। अन्योऽपि यस्मात् मध्यमात् सवितोच्यते। यत आह। **आदित्यः अपि सविता उच्यते** इति।

यथा च एतत् एवं **तथा** एतस्मिन्नेव **हैरण्यस्तूपे** सूक्ते स्तवः हैरण्यस्तूपमिदं 10 सूक्तमिति। कुत एतत्। अत आह। **अर्चन् हिरण्यस्तूप ऋषिः इदं सूक्तं प्रोवाच** इति। अर्चन्-नाम्ना हिरण्यस्तूपः तद्रूपः तद्व्रतो वा। स यथा एतत् सूक्तं प्रोवाच **तदभिवादिनी एषा ऋग् भवति** अस्मिन्नेव सूक्ते ॥ ३२ ॥

"**हिर॑ण्यस्तूपः सवितर्यथा॑ त्वाङ्गिरसो॑ जुह्वे वाजे॑ अस्मिन्।**
**एवा त्वार्च॑न्नवसे वन्द॑मानः सोम॑स्येवांशुं प्रति॑ जागराहम्॥**"

15 **हिरण्यस्तूपो हिरण्यमयः स्तूपः। हिरण्यमयः स्तूपोऽस्येति वा। स्तूपः स्त्यायतेः। संघातः। सवितर्यथा त्वाङ्गिरसो जुह्वे वाजे अन्ने अस्मिन्। एवं त्वार्चन्नवनाय वन्दमानः सोमस्येवांशुं प्रतिजागर्म्यहम्॥**

1-2. *m.* omits from यथा अश्वबन्धो etc. to अधुक्षत्; *a. d.* रसः for रजः? 2. *a. d. bi.* अधुनोत्, *j.* अधूनोत्. 4. *a.* गमनायोग्येह्यात्मनैव etc., *d. m.* गमनायायोग्ये, *bi. j.* गमनायोग्ये. 9. *a. d.* स्तुतः for स्तवः? 11. *m.* अर्चन्नात्मा; *m.* तत्थतो वा for तद्व्रतो वा. 13. R. वोजे. 15. D. and Bi. mss. क, ख, ग read हिरण्मयस्तूपो, C. Bi. J. हिरण्यमयस्तूपो; R. हिरण्यमय स्तूपो; C. R. स्तूप स्त्यायतेः. 16. Bi. mss. क, ख, ग read चाङ्गिरसो. 16-17. Bi. ms. च reads वाजेऽन्नेऽस्मिन्नेवं, C. वाजेन्नोस्मिन्नेवं.

5. समुदिता will be समुदेता in classical Sanskrit.

13-14. RS. X. 149. 5.

15-16. **हिरण्यमयः स्तूपो हिरण्यमयः स्तूपोऽस्येति वा**, and **आङ्गिरसः**—omitted by Durga.

**त्वष्टा व्याख्यातः । तस्यैषा भवति ॥ ३३ ॥**

**हिरण्यस्तूपः सवितर्यथा**–इति । हे **सवितः यथा** अन्यकालीनः **हिरण्य-स्तूपः त्वा**–त्वाम् **आजुह्वे**–आजुहाव कर्मण्याहूतवान्, एवम् **अहम्** अप्येतस्मिन् कल्पे हिरण्यस्तूपतामापन्नः **अर्चन्नामा अवसे**–अवनाय **वाजे अस्मिन् अन्ने** संस्कृते हविषि त्वामाहूय **वन्दमानः**–स्तुवन् **सोमस्य इव अंशुं** सोममिव क्रीत्वा 5
आहृतः **प्रति जागर–जागर्मि** अनन्यमनाः त्वामायागादुपासे इति ।

**स्तूपः स्त्यायतेः** । स्त्यै संघाते । तस्य स्तूपः **संघातः** इति ।

**त्वष्टा** (२१) इति वक्तव्यम् । सः **व्याख्यातः** । **तस्य एषा भवति** ॥३३॥

**"देवस्त्वष्टा सविता विश्वरूपः पुपोष प्रजाः पुरुधा जजान ।**
**इमा च विश्वा भुवनान्यस्य महद्देवानामसुरत्वमेकम् ॥"** 10

**देवस्त्वष्टा सविता सर्वरूपः पोषति प्रजा रसानुप्रदानेन ।**

---

1. Bi. J. conclude X. iii. 9 with भवति. 2. *a.* marks verse 37, after इति, as त्वेति[३७]; *a. d. m.* read the *pratîka* up to यथा त्वा; *a. d.* अन्यकल्पीनः for अन्यकालीनः of *bi. j.* 3. *d. m.* omit त्वा; *a. d. m.* omit आजुह्वे; *d. m.* आहूतवान्, *bi. j.* आहुतवान्. 3–4. *m.* अहमस्मिन्कल्पे. 4. *a. d. m.* omit अवसे. 6. *a. d. m.* omit जागर. 7. *a. d. m.* omit स्तूपः स्त्यायतेः; *d.* omits स्त्यै also; *a. d. m.* omit संघातः. 8. *a. d. m.* read त्वष्टा व्याख्यातः only and omit इति वक्तव्यम् सः.

---

7. स्त्यै संघाते—*Cf.* 'स्त्यै शब्दसंघातयोः' Dhâtup. 1. 935.

8. 'त्वष्टा'—Nigh. V. 4. 21; व्याख्यातः—Nir. VIII. 13.

9–10. RS. III. 55. 19; AV. 18. 1. 5.

9. विश्वरूपः=सर्वरूपः ( Yâska ). Durga does neither read nor explain both of these words.

11. पोषति—Durga has पुष्णाति instead.

11. रसानुप्रदानेन—not repeated by Durga in his *vritti*.

**बहुधा चेमा जनयति । इमानि च सर्वाणि भूतान्युदकान्यस्य । महच्चास्मै देवानामसुरत्वमेकं, प्रज्ञावत्त्वं वानवत्त्वं वा । अपि वासुरिति प्रज्ञानाम । अस्यत्यनर्थान् । अस्ताश्चास्यामर्थाः । असुरत्वमादिलुप्तम् ॥**

5 **वातो वातीति सतः । तस्यैषा भवति ॥ ३४ ॥**

**देवस्त्वष्टा**–इति । वैश्वामित्रस्य प्रजापतेरार्षम् । वैश्वदेवे विनियोगः । **त्वष्टा देवो** मध्यमः **सविता** सर्वस्य भूतग्रामस्य प्रसविता–उत्पादयिता उदकसंप्रदानद्वारेण । किमुत्पादयिता एव । न इति उच्यते । **पुपोष प्रजाः** पुष्णाति चासावुत्पाद्य । न केवलं पुष्णाति । किं तर्हि । **पुरुधा जजान** इति । **बहुधा चैनाः जनयति**–वर्धयति । 10 केन पुनरसौ **जनयति** पुष्णाति वर्धयति च । यत आह । **इमा च विश्वा भुवनान्यस्य । इमानि विश्वानि भुवनानि–उदकानि अस्य** यतः स्वतायां वर्तन्ते तस्मात् जनयति पुष्णाति वर्धयति च । अतश्च सर्वमिदं शक्तः कर्तुं यतः **महद्देवानामसुरत्वमेकम् । महत् असुरत्वम् । प्रज्ञावत्त्वम् । असुरिति प्रज्ञानाम** । तया तद्वत्त्वम् । तया महत्या प्रज्ञया उदकेन साधनेन सर्वमिदं जनयति पुष्णाति

---

1. Bi. mss. क, ख, ग have चेमाम् for चेमाः. 2. Bi. mss. क, ख, ग read °मसुरत्वमेकत्वं. 3. Bi. mss. क, ख, ग have °मनर्था असु° for °मर्था असु° of Bi. J.; Durga and Bi. mss. ख, ग read वसुरत्व° for असुरत्व°. 5. Bi. J. conclude X. iii. 10 with भवति. 6. *a.* marks verse 38, after इति, as °ष्टेति३८; *m.* marks the *pratīka* up to त्वष्टा. 7. *a.* सर्वभूतग्रामस्य. 8. *a. d.* पुष्णाति रसानुत्पाद्य. 9. *d.* चैनां for चैनाः. 9–10. *m.* omits वर्धयति । केन पुनरसौ जनयति. 10. *a. d.* omit the च after वर्धयति. 10–11. *m.* अत आह । इमा च विश्वान्यस्य । इमानि विश्वा भूतानि उदकानि. 12–13. *m.* यतः महद्देवानामेकं महदसुरत्वं. 13. *a. d. m.* omit प्रज्ञावत्त्वम्. 14. *a. d.* omit तया before तद्वत्त्वम्.

---

1. बहुधा **चेमाः**—Durga reads एनाः for इमाः.

1–4. **च** ( after इमानि ), **सर्वाणि भूतानि, चास्मै**, **अपि वा** and **आदिलुप्तम्.** —These are omitted by Durga. Of these चास्मै and अपि वा are not necessary, as they have no meaning in the place where they are inserted.

3. असुरिति प्रज्ञानाम—See Nigh. III. 9. 6.

6. वैश्वदेवे विनियोगः—The *viniyoga* is not traced.

वर्धयति च । अप्रज्ञो हि साधनसंपत्तावपि किं कुर्यात् । अथवा । **अनवत्त्वम्** । असुः प्राणः तेन तद्वत्त्वम् । एवमपि सति प्राणेनैव शक्यते एतत् सर्वं कर्तुम् । अप्राणो हि किं कुर्यात् । **अन्नवत्त्वम्** इति केचित् । तेषामन्नहेतुनोदकेन तद्वत्त्वम् । तथापि योज्यम् ।

**असुरिति प्रज्ञानाम** । तत् कस्मात् । **अस्यति अनर्थान्** । प्रज्ञैव हि 5 प्रज्ञावतोऽस्यति क्षिपत्यनर्थान् नाशयति । **अस्ताश्च अस्याम् अर्थाः** । न हि तदस्ति व्यक्तेयत् सर्वं प्रज्ञावतां प्रज्ञायां नास्ति । एतावांस्तु विशेषोऽभिव्यक्तमिति । अथवा । यदेत**दसुरत्वं** वसुमतो भावः वसुरत्वम् एतत् । रो मत्वर्थे । वकारलोपश्च । वसुना–उदकेन तद्वान् असौ त्वष्टा ॥

**वातः** (२२) कस्मात् । **वातीति सतः** । 'वा गतिगन्धनयो.' इत्यस्य । सत इति 10 धातुकारकावधारणम् । वायुशब्दो हि त्रयाणां धातूनां विकल्पेन । अयं तु वातेरेवेति विशेषः । **तस्य एषा भवति** ॥ ३४ ॥

**"वात आ वातु भेषजं शंभु मयोभु नो हृदे ।**
**प्र ण आयूंषि तारिषत् ॥"**

**वात आवातु भैषज्यानि शंभु मयोभु च नो हृदयाय । प्रवर्धयतु च** 15 **न आयुः ॥**

6. *d.* अनर्थाः for अर्थाः. 6–7. *d.* न हि तदस्ति व्यक्तमनभिव्यक्तमिति यत्सर्वं प्रज्ञा°. 7. *a. m.* विशेषोऽभिव्यक्तमनभिव्यक्तमिति । 11. *d.* वायुः शब्दो हि. 14. R. आयूंषि. 15. Bi. J. प्रवर्धयतु, Bi. ms. क, प्रवर्धय.

10. 'वातः'—Nigh. V. 1. 22.
10. 'वा गतिगन्धनयोः'—Dhâtup. 2. 40.
11. वायुशब्दो हि etc. Nir. X. 1.
13–14. RS. X. 186. 1; SV. 1. 184; 2. 1190; TB. 2. 4. 1. 8; TA. 4. 42. 2; Kauś. 117. 3. 4; GB. 1. 3. 13; SB. 5. 1; 5. 8; ŚS. 16. 13. 4; Svidh. 3. 5. 1; AV. 2. 46; 4. 10. 6; VS. 23. 32; TS. 1. 5. 11. 4; KS. 6. 9; AŚ. 1. 12. 2; ApŚ. 9. 3. 22.
15. **भैषज्यानि**—Durga reads **भेषजं** for this, and that is correct as the adjectives शंभु and मयोभु which follow are in the singular number.
15. **प्रवर्धयतु**—Durga and Bi. ms. क read **प्रवर्धय** for प्रवर्धयतु.

**अग्निर्व्याख्यातः । तस्यैषा भवति ॥ ३५ ॥**

**वात आ वातु**-इति । उल्वस्य वातायनस्यार्षम् । **वातः** अस्मान् आभिमुख्येन **भेषजं** यद् यत् पथ्यम् अस्माकं तत्तत् गृहीत्वा **आवातु** । तच्च अस्माकं **शंभु** अस्तु । शम् इति सुखनाम तद्भावकमस्तु । तदात्वे च आयतौ परिणामे **मयोभु** अस्तु ।
5 मयः इति सुखनाम । **हृदयाय** सुखमस्तु । स्तूयमानः प्रत्यक्षीभूत इव मनसि । यतः प्रत्यक्षमुच्यते । **प्र ण आयूंषि तारिषत्** । हे भगवन् वायो **प्रवर्धय** त्वमस्माक**मायूंषि** सपुत्रपौत्रादिवर्गाणां भैषज्यं च त्वमस्माकं नित्यमावह इत्येतदाशास्महे ॥

**अग्निः** (२३) व्याख्यातः । **तस्य एषा भवति** ॥ ३५ ॥

"**प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे ।**
10 **मरुद्भिरग्न आ गहि ॥**"

**तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे । सोऽग्ने मरुद्भिः सहागच्छेति । कमन्यं मध्यमादेवमवक्ष्यत् । तस्यैषापरा भवति ॥ ३६ ॥**

**प्रति त्यं चारुम्**-इति । मेधातिथिः ऋग्द्वये । **त्यं-तम्** अङ्गवैकल्यरहितम् **अध्वरं प्रति** हे भगवन् **अग्ने** त्वमस्माभिः **गोपीथाय-सोमपानाय प्रहूयसे**-
15 आहूयसे । **स** त्वमेतद् ज्ञात्वा **मरुद्भिः सह आगहि-आगच्छ** एतस्मि-

1. Bi. J. conclude X. iii. 11 with भवति. 2. *a.* marks verse 39, after इति, as °मिति ३९; *d. m.* read the *pratîka* up to भेषजं; *a. d. m.* read उलस्य for उल्वस्य of *bi. j.* 4. *bi. j.* तदात्वे च आयतौ परि°; *a. d.* omit च after तदात्वे; *d.* adds च after आयतौ. 5. *a.* appears to read हृदयसुखमस्तु for हृदयाय सुखमस्तु. 6. *d.* उच्यसे for उच्यते; Durga and *bi.* mss. क read प्रवर्धय for प्रवर्धयतु of Yâska. 7. *bi.* °वर्गानां, *m. j.* °वर्गाणां. 12. Bi. mss. क, ख, ग read अवक्षत्; Bi. J. conclude X. iii. 12 with अपरा भवति. 13. *a.* marks verse 40, after इति; *d.* reads प्रति त्यं४० only and omits इति; *d. m.* read the *pratîka* as प्रति त्यं only and omit the usual इति after it; *a. d.* omit अङ्गवैकल्यरहितम्. 14-15. *a. d.* omit भगवन्, प्रहूयसे and स त्वं.

8. 'अग्निः'—Nigh. V. 4. 23; व्याख्यातः—Nir. VII. 14.
9-10. RS. I. 19. 1; SV. 1. 16.

त्वस्य कर्मणि सोमं पातुम् इत्येतदाशास्महे । **गोपीथाय मरुद्भिः सहेति** मध्यमं लिङ्गम् । **तस्य एषा अपरा भवति** । सा पुनः किमर्थम् । गोपीथायेत्यव्यक्तं सोमपानम् । व्यक्तसोमपानलिङ्गा उत्तरा । तद्यथा ॥ ३६ ॥

"अभि त्वां पूर्वपींतये सृजामि सोम्यं मधुं ।
मरुद्भिरग्न आ गंहि ॥" 5

**अभिसृजामि त्वा पूर्वपीतये पूर्वपानाय सोम्यं मधु । सोममयम् । सोऽग्ने मरुद्भिः सहागच्छेति ॥ ३७ ॥**

**अभि त्वां पूर्वपींतये**–इति । हे भगवन् **अग्ने पूर्वपीतये–पूर्वपानाय** पूर्वकाले प्रवृत्ताय पानाय **त्वा**–त्वाम् **अभिसृजामि**–वदे । किम् इति । इदं **सोम्यं मधु सोममयं** तत् मधु । **स** त्वमागच्छ एतस्मिन् कर्मणि एतत् पातुम 10 इत्येतदाशास्महे ॥ ३७ ॥

**वेनो वेनतेः कान्तिकर्मणः । तस्यैषा भवति ॥ ३८ ॥**

**वेनः** (२४) इति वक्तव्यम् । स एषः **वेनतेः कान्तिकर्मणः** । सर्वलोककान्तो हि मध्यमः सर्वस्योपकारित्वात् । **तस्य एषा भवति** ॥ ३८ ॥

1. *a. d. m.* अस्मत्कर्मणि for अस्य कर्मणि. 1-2. *d.* मध्यमलिङ्गं. 7. Bi. J. conclude X. iii. 13 with °गच्छेति ॥ १३(३७) ॥. Here ends the *third páda* of the tenth adhyâya—इति **दशमाध्यायस्य तृतीयः पादः** ॥ १०,३ ॥ 8. *a.* marks verse 41, after इति, as इति [४१]; *d. m.* read the *pratîka* as अभि त्वा पूर्वपीतय इति; *m.* omits पूर्वपीतये पूर्वपानाय. 8-9. *a. d.* omit from पूर्वपीतये to त्वा and read as अग्ने त्वाम् अभिसृजामि; *m.* omits पूर्वपीतये पूर्वपानाय and त्वा. 9. *bi.* mss. क, ख read पूर्वकाले प्रवृत्तपानाय; *a. d.* omit किमिति. 10. *a. d.* add अस्मात् before आगच्छ; *d.* reads तत् for एतत्. 11. After °स्महे ॥ १३ (३७) ॥ *bi. j.* read इति ऋज्वर्थायां निरुक्तवृत्तौ **पञ्चदशस्य** ( दशमस्य ) **अध्यायस्य तृतीयः पादः** ॥ १०।३ ॥. 12. Bi. J. read **चतुर्थः पादः** before वेनो वेनतेः; Bi. J. conclude X. iv. 1 with भवति. 14. *m.* सर्वतोपकारित्वात्.

4-5. RS. I. 19. 9; VIII. 3. 7; AV. 20. 99. 1; SV. 1. 256; 2. 923.
12. वेनो वेनतेः—*Cf.* 'वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु' Dhâtup. 1.902.
13. 'वेनः'—Nigh. V. 4. 24.

"अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति ॥"

अयं वेनश्चोदयत् पृश्निगर्भाः । प्राष्टवर्णगर्भा आप इति वा । ज्योतिर्जरायुर्ज्योतिरस्य जरायुस्थानीयं भवति । जरायुर्जरया गर्भस्य । जरया यूयत इति वा । इममपां च संगमने सूर्यस्य च शिशुमिव विप्रा मतिभी रिहन्ति । रिहन्ति लिहन्ति स्तुवन्ति वर्धयन्ति पूजयन्तीति वा । शिशुः शंसनीयो भवति । शिशीतेर्वा स्याद्दानकर्मणः । चिरलब्धो गर्भ इति ॥

असुनीतिः । असून्नयति । तस्यैषा भवति ॥ ३९ ॥

10 अयं वेनः–इति । भार्गवस्य वेनस्यार्षम् । शुक्रोऽनया गृह्यते । अन्तर्भावितप्रज्ञानः

3. Bi. mss. ख, ग read प्राष्ठवर्णगर्भा. 4. C. जरायुः स्थानीयं; C. R. जरायु जरया. 6. Bi. रिहन्ति (रिहन्ति) लिहन्ति, Bi. ms. च reads रिहन्ति लिहान्ति; Bi. mss. क, ख, ग omit स्तुवन्ति. 7-8. C. D. R. and Bi. ms. च read चिरलब्धो गर्भो भवति, Bi. J. चिरलब्धो गर्भ इति. 9. D. असुं नयति for असून् नयति; Bi. J. conclude X. iv. 2 with भवति. 10. *a.* marks verse 42, after इति; *m.* reads the *pratîka* as अयं वेन इति; *a. d.* add इयं after भार्गवस्य; *d.* आन्तर्भावित°.

1-2. RS. X. 123. 1; VS. 7. 16; TS. 1. 4. 8. 1; MS. 1. 3. 10: 34. 1-2; KS. 4. 3; ŚB. 4. 2. 1. 8. 10; AB. 1. 20. 2; 3. 30. 3; KB. 8. 5; AS'. 4 6. 3; 5. 18. 5.

1. रजसो विमाने—Yâska omits these words in his *bhâṣya.* Durga, however, reads them in his *vritti.*

3. चोदयत्—Durga reads चोदयति instead.

3. इति वा—Durga does not read this. The words are superfluous as only one etymology is stated.

5. संगमने—Durga has संगमे instead.

6. Bi. mss. क, ख, ग omit स्तुवन्ति.

7-8. Yâska has चिरलब्धो गर्भ इति; Durga reads अचिरात् लब्धो मे गर्भः इति ( v. l. अचिरलब्धो मे etc. ).

10. शुक्रोऽनया गृह्यते—MS. 1. 3. 10.

तस्मिन्मनसि प्रत्यक्षीभूतमभिनयेन दर्शयन्निव कस्मैचित् ब्रवीति **अयं वेनः** इति । किं करोति । **चोदयति पृश्निगर्भाः** । पृश्निः–आदित्यः । प्रकृष्टो ह्यनेन **वर्णः प्राष्टः** प्राप्तः । यास्तस्य **गर्भ**त्वमुपगताः रश्म्यन्तर्गताः परिपक्वाः **आपो** मासाष्टकेन संभृताः ताः वेनश्चोदयति प्रावृषि वर्षभावेन प्रेरयति । किंलक्षणः । **ज्योतिः जरायुः** । **ज्योतिः अस्य** विद्युदाख्यं कर्मात्मलक्षणं **जरायुस्थानीयं** प्रज्ञावतः तदधिष्ठातुः 5 मध्यमस्य गर्भस्येव परिवेष्टनं **भवति** । क्वावस्थितश्चोदयति । **रजसो विमाने** । रजः उदकं तद्यत्र निर्मीयते तत्रावस्थितः । अन्तरिक्षलोके इत्यर्थः । योऽयमेवमादिगुणयुक्तो वेनः तम् **इमं** वेनम् **अपां च संगमे सूर्यस्य च संगमे** समागमनस्थाने यत्र सूर्यस्य रश्मिभिः आपः संगच्छन्ते तत्र वर्तमानं मध्यस्थाने **विप्राः** मेधाविनः स्तोतारः **मतिभिः** स्तुतिभिः प्रज्ञापूर्विकाभिः **शिशुम् न–इव रिहन्ति** । यथा हि 10 शिशुर्नित्यं स्तूयते एवं स्तूयते । यदेतत् **रिहन्ति** इति एतत् **लिहन्ति** लिहेः धातोः । **वर्धयन्ति पूजयन्ति** वेत्यर्थः ।

**जरायुः** कस्मात् । तद्धि **जरया गर्भस्य** भवति । यथा यथा गर्भो भवति तथा त**॰** तदुत्पद्यते । **जरया यूयते इति वा** । यच्चैतत् जरेति प्रसिद्धं प्रसूताया गोः स्त्रिया वा पश्चात् पतति सा जरेत्युच्यते तया च यूयते मिश्र्यते तज्जरायुरित्युच्यते । **शिशुः** 15 कस्मात् । स हि **शंसनीयो भवति** । प्रयोजनेऽप्रयोजने वा अर्चन्ति यत्किचनप्रलापेषु । **शिशीतेः वा स्यात्** धातोः दानार्थस्य । दीयते हि स पुरुषेण स्त्रियै धारणाय । भवति च वादः स्त्रीणामभिनवगृहीतगर्भाणाम् **अचिरात् लब्धो मे गर्भः इति** ।

**असुनीतिः** (२५) इति एतत् देवतापदम् । स पुनरयमिन्द्रः मध्यमः, प्राणः ।

---

2. *a. d. m.* add प्राष्टवर्णः after आदित्यः; *a. d. m.* आष्टः आप्तः, *bi. j.* प्राष्टः प्राप्तः. 5. *a. d.* कर्मत्वलक्षणं. 7. *bi. j.* निमीयते, *m.* निर्मीयते; *m.* योयमादिगुण°. 9. *a. d.* add प्रज्ञाः after मेधाविनः; *d.* सोतारः. 10. *a.* only omits स्तुतिभिः; *m.* प्रज्ञापूर्वकाभिः; *a. d. m.* omit न; *d.* omits हि. 10–11. *d.* यथा शिशुर्नित्यं स्तूयते यदेतत् etc. 11. *a. m.* एवं स्तुव; *d. m.* omit इति after रिहन्ति. 12. *a. d.* इत्यर्थवचनं for इत्यर्थः. 13. *m.* जरायु कस्मात्. 14. *d.* omits वा after इति. 15. *d.* तया यः यूयते, *m.* तया यद् यूयते, *bi. j.* तया च यूयते. 16. *a. d.* प्रयोजने वाप्रयोजनेर्चति, *m.* प्रयोजने वाऽप्रयोजने वाऽर्चति; *a. d. m.* यत्किञ्चनप्रलापेषु, *bi. j.* किञ्चन प्रलापेषु. 18. *d.* अचिरलब्धो मे etc.

---

19. ‘असुनीतिः’—Nigh. V. 4. 25.

स पुनर्यदेतस्मात् शरीरादुत्क्रामति, अथेतरान् प्राणान् **असून्** अन्यत्र **नयति** । विज्ञायते हि

" प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति "

-इति । **तस्य एषा भवति** ॥ ३९ ॥

5 **" असुनीते मनो अस्मासु धारय जीवातवे सु प्र तिरा न आयुः ।**
**रारन्धि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्धयस्व ॥"**

**असुनीते मनोऽस्मासु धारय । चिरं जीवनाय प्रवर्धय च न आयुः । रन्धय च नः सूर्यस्य संदर्शनाय । रध्यतिर्वशगमनेऽपि दृश्यते । " मा रधाम द्विषते सोम राजन् " इत्यपि निगमो भवति । घृतेन त्वमात्मानं 10 तन्वं वर्धयस्व ॥**

**ऋतो व्याख्यातः । तस्यैषा भवति ॥ ४० ॥**

**असुनीते मनो अस्मासु**-इति । श्रुतबन्धोरार्षम् । हे **असुनीते**-प्राण **मनः अस्मासु धारय** । मन.प्रभृतीनेतान् प्राणान् आत्मनोऽवस्थानेनास्मच्छरीर एव धारय । मा त्वमुत्क्रमीः त्वदनुत्क्रमेण अवस्थास्यन्ते इति । **जीवातवे चिरम्** 15 अस्माकं **जीवनाय** मनो धारय । **सु प्र तिरा न आयुः** । अमुना प्रकारेण सुष्ठु प्रतिर प्रकर्षेण **वर्धयास्माकमायुः** । किञ्च । **रारन्धि नः** संसाधय । अस्माकं तथा

---

1. *m.* स पुनर्यदैतस्मात्. 3. *d.* reads as प्राणमनूत्क्रामन्तं सर्वे प्राणाः स पुनर्यदे-तस्मात् etc., *a. m. bi. j.* as text. 3. *m.* अनुक्रामंतीति. 7. Bi. मनो अस्मासु; J. मनः अस्मासु, Bi. ms. च and R. मनोऽस्मासु, C. मनोस्मासु; C. चिरंजीवनाय, all others चिरं जीवनाय. 7-8. C. R. आयू रन्धय. 11. Bi. J. conclude X. iv. 3 with तस्यैषा भवति. 12. *a.* marks verse 43, after इति as धारयेति ४३; *d. m.* read the *pratīka* up to °धारयेति. 14. *a. d.* उत्क्रामीः.

---

2. विज्ञायते हि—The following quotation is from Bṛh. Up. 4. 4. 2.
5-6. RS. X. 59. 5.
8. रन्धय— Omitted by Durga.
8-9. RS. X. 128. 5; AV. 5. 3. 7.
11. ऋतो व्याख्यातः—See Nir. II. 25; III. 4; IV. 9; VI. 22.

अनुगृहाण यथा **सूर्यस्य संदृशि**-**संदर्शनाय**-सम्यग्दर्शनाय अलं स्याम। दिव्यं नः चक्षुरुत्पादय येन सम्यक् सूर्यं पश्येम। सर्वं चैतदन्नप्राचुर्ये सति भवति। यतो ब्रूमः। **घृतेन त्वं तन्वं वर्धयस्व**। **घृतेन**-उदकेन **त्वमात्मानं** यथाकालं **वर्धयस्व**। त्वय्युदकं ददति सर्वमिदं भवति। अर्हावर्भाक्त्वादमुनीतैर्घृतमित्युदकनामेत्यत्रोपपद्यते।

**रध्यतिः वशगमने अपि दृश्यते**। तद्यथा। **मा रंधाम द्विषते** 5 इत्यत्र

"देवीः षडुर्वीरुरु नः कृणोत विश्वेदेवास इह वीरयध्वम्।
मा हास्महि प्रजया मा तनूभिर्मा रंधाम द्विषते सोम राजन्॥"

–इति। वैश्वदेवी। विहव्यस्यार्षम्। वैहव्यं सूक्तम्। तत्रैषा दर्शपूर्णमासादिषु हविषामभिमर्शने विनियुज्यते। 10

**देवीः षट्** द्यौश्च पृथिवी च अहश्च रात्रिश्च आपश्च ओषधयश्चेति। ता उच्यध्वे। हे देव्यः उर्व्यः षट्, सर्वमिदम् ऊर्णुवत्यः यूयमुच्यध्वे। **उरु**–बहु यद् यद् वयं युष्माभिः बहु क्रियमाणमिच्छामः तत्तत् **उरु** बहु कुरुध्वे। हे **विश्वेदेवासः** विश्वे देवाः यूयमपि **इह** एतस्मिन् कर्मणि अस्माकमङ्गभावमुपगताः सन्तः **वीरयध्वम्** वीरान् पुत्रान् इच्छत दातुम्। अपि च। जातपुत्राः सन्तः **मा हास्महि प्रजया**। मा अस्मान् 15 प्रजा कदाचित् अपि हासीत्। कष्टं हि पुत्रमरणम्। **मा तनूभिः वयं स्वाभिः हास्महि**। मास्माकमायुषश्छेदो भूत् युष्मदनुध्यानात्। अपि च। **मा रंधाम द्विषते सोम राजन्**। हे भगवन् **सोम राजन्** विशेषतः त्वमुच्यसे। सर्वस्या अस्या आशिषः त्वदनुध्यानात् **मा रंधाम**। मा वशं गच्छेम **द्विषते**। द्विषन्त एवास्माकमर्थसंप्रदानादिना वश्यतामुपयान्तु यतः अनिष्टं हि द्विषतो विधेयत्वमिति। 20 सामर्थ्यादिह **रध्यतिर्वशगमने**॥

1. *d.* सूर्यस्य दृशि. 5–6. *a. d. m.* read द्विषत इत्यत्र and mark verse 44 after it, as इत्यत्र ४४. 7. *d.* षळुर्वी°, *m.* षळुर्वी°; *d. m.* read the ṛik up to कृणोत only; *a.* marks verse 41 as कृणोतेति ४४. 9. *a.* marks section § 40 after इति, here; *a. d. m.* read वैहवं for वैहव्यं. 13. *a. d.* read बहु उरु कुरुध्वे and omit विश्वेदेवासः. 19. *d* वश्यं for वशं of *bi. j.*

5. रध्यतिर्वशगमनेऽपि दृश्यते—*Cf.* 'रध हिंसासंराद्ध्योः' Dhātup. 4. 87.
9–10. दर्शपूर्ण°... विनियुज्यते—The *viniyoga* is not traced.

ऋतः (२६) इति एतत् पदम् । तत् **व्याख्यातं** निर्वचनतः ' ऋतमित्युदकनाम प्रत्यृतं भवति ' इति । इह त्वभिधेयो मध्यमः । **तस्य एषा भवति** ॥ ४० ॥

**" ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति ।**

**ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ॥ "**

5 **ऋतस्य हि शुरुधः सन्ति पूर्वीः । ऋतस्य प्रज्ञा वर्जनीयानि हन्ति । ऋतस्य श्लोको बधिरस्यापि कर्णावातृणत्ति । बधिरो बद्धश्रोत्रः । कर्णौ बोधयन् दीप्यमानश्चायोरयनस्य मनुष्यस्य । ज्योतिषो वोदकस्य वा ॥**

इन्दुरिन्धेः । उनत्तेर्वा । **तस्यैषा भवति** ॥ ४१ ॥

ऋतस्य हि शुरुधः-इति । वामदेवस्यार्षम् । संपातसूक्ते निष्केवल्ये पृष्ठ्याभिप्लवयोः 10 शस्यते । **ऋतस्य**-मध्यमस्य । किम् इति । **शुरुधः**-आपः **सन्ति**-विद्यन्ते । किंलक्षणाः । **पूर्वीः**-अनेककालसंभृताः । यतश्चासाविद्धोऽद्भिरतस्तस्य **ऋतस्य** उदकसंप्रदानद्वारेणानाकालं नाशयन्ती **धीतिः-प्रज्ञा** सर्वलोकस्य **वृजिनानि-वर्जनीयानि**

1. *d. m.* तदेतव्द्याख्यातम्; *a.* only निर्वचनेन. 2. *a.* concludes section 41 here, while *bi. j.* and the rest conclude ॥ ३ (४०) ॥. 4. R. श्लोका (the mâtrâ of को is obliterated in printing). 5. C. D. हन्ति ऋतस्य, Bi. J. हन्त्यृतस्य. 6. C. बधिरो बद्धः श्रोत्रः कर्णौ. 7. Bi. mss. क, ग read दीप्यमानश्चायनस्य and ख reads दीप्यमानश्चायमानस्य. 8. Bi. J. conclude X. iv. 4 with भवति. 9. *a.* marks verse 45, after इति, as इति[४५]. 11. *a. d. m.* read °संभृताः for °संभूताः of *bi. j.*

1. ' ऋतः '—Nigh. V. 4. 26; व्याख्यातम्—Nir. II. 25; III. 4; IV. 9; VI. 22.

3–4. RS. IV. 23. 8; cf. Nir. VI. 16.

5. हि—Not explained by Durga.

7. आयोः—omitted by Bi. mss. क, ख, ग.

7. ज्योतिषो वा उदकस्य वा—Durga explains this as ज्योतिषः च उदकस्य च श्लोकः.

9–10. संपातसूक्ते...शस्यते—See Âśva. S'rau. 9. 7.

अयशांसि **हन्ति**-नाशयति । अकाले हि क्षुत्परिगृहीतानामयशस्करेषु जिह्वादिषु प्रवृत्तिर्भवति । ददतश्चोदकं सर्वलोकत्वृजिनापघाताय तस्य **ऋतस्य** एवमतिमहान् **श्लोकः**-शब्दः स्तनयित्नुलक्षणो भवति यः **बधिरस्यापि बद्धश्रोत्रस्य** विधात्रापि निसर्गतः अपिहितश्रोत्रस्य **आयोः-अयनस्य-मनुष्यस्य** बोधयत्यस्मृत इति । **कर्णौ** अति-दुर्भेदौ **आततर्द-आतृणत्ति**-आभिनत्ति । **शुचमानः-दीप्यमानः ज्योतिषः** 5 च **उदकस्य** च **श्लोकः** । एवं सतत्त्वो ह्यसावृत इति ।

**इन्दुः** (२७) इति एतत्पदम् । स कस्मात् । **इन्धेः** दीप्त्यर्थस्य । **उनत्तेः वा** क्लेदनार्थस्य उभयमपीन्दौ उपपद्यते चन्द्रमसि । **तस्य एषा भवति** ॥ ४१ ॥

"प्र तद्वोचेयं भव्यायेन्दवे हव्यो न य इषवा-
न्मन्म रेजति रक्षोहा मन्म रेजति । 10
स्वयं सो अस्मदा निदो वधैरजेत दुर्मतिम् ।
अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत् ॥"

**प्रब्रवीमि तद्भव्यायेन्दवे, हवनार्ह इव य इषवानन्नवान् कामवान् वा मननानि च नो रेजयति । रक्षोहा च बलेन रेजयति । स्वयं सोऽस्मदभिनिन्दितारं वधैरजेत दुर्मतिम् । अवस्रवेदघशंसः । ततश्चावतरं** 15 **क्षुद्रमिवावस्रवेत् ।**

---

1. *a. d. m.* and *bi.* ms. ग read अनाकाले for अकाले; the meaning, however, of both the readings is the same. 2. *a. d. m.* सर्वलोकत्वृजिनापघाताय, *bi. j.* सर्वलोकत्वृजिनाय वाताय. 5. *a. d. m.* omit आततर्द. 6. *d.* लोकः for श्लोकः; and *a.* only reads एवं सत्त्वो for एवं सतत्त्वो. 8. *a. d.* omit तस्य एषा भवति, by mistake. 14. R. सोऽस्मदभि°, Bi. J. सो अस्मदभि°.

---

4. बोधयत्यस्मृत इति—This seems to be an interpolation as the preceding word मनुष्यस्य is connected with the following words कर्णौ...आततर्द.

7. 'इन्दुः'—Nigh. V. 4. 27.

9-12. RS. I. 129. 6.

अभ्यासे भूयांसमर्थं मन्यन्ते। यथा। अहो दर्शनीयाहो दर्शनीयेति। तत् परुच्छेपस्य शीलम्। परुच्छेप ऋषिः। पर्ववच्छेपः, परुषि परुषि शेपोऽस्येति वा॥

इतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि। सूक्तभाञ्जि 5 हविर्भाञ्जि। तेषामेतान्यहविर्भाञ्जि, वेनोऽसुनीतिर्ऋत इन्दुः॥

प्रजापतिः प्रजानां पाता वा पालयिता वा। तस्यैषा भवति॥४२॥

**प्र तद्वोचेयम्**–इति। अतिच्छन्दाः। पारुच्छेपी। षष्ठेऽहनि मरुत्वतीये शस्यते। यद्यदिष्टं तस्येन्दोः **तत्** तदहं **प्रब्रवीमि** अस्मै **इन्दवे** प्रीत्यर्थम्। किलक्षणः **यः** इन्दुः। **भव्यः** भवनार्हः आत्मवान्। अभिप्रेतानां पात्रभूत इत्यर्थः। **भव्यो** भावनार्हः इव। 10 यो हविषा भावनमर्हति न च भाव्यते अहविर्भाक्त्वात्। **हव्यो न** हवनार्ह **इव यो** यज्ञेन च पुनराहूयते अहविर्भाक्त्वादेव। **इषवान्** नित्यम् **अन्नवान्। कामवान् वा।** कामिनां होतॄणां नित्यमभिमतफलसंप्रदानोन्मुखः। तत्संप्रदानोन्मुखतया च नित्यमस्माकं **मन्म रेजति** मननानि–प्रज्ञानानि **रेजयति**–आकम्पयति। आकम्पितहृदया-नुपकारितया नित्यमस्मान् करोति, कथं नाम एतं नित्यं स्तुयामेति। अपि च। **रक्षोहा** 15 रक्षांसि **बलेन** घ्नन् सुतरामस्माकं **मन्म रेजति**। किंच **स्वयं सो अस्मदानिदः**।

---

2. Bi. mss. क, ख, ग do not read पर्ववच्छेपः. 6. Bi. J. conclude X. iv. 5 with भवति. 7–8. *a. d.* omit the words up to यद्यदिष्टं, through mistake and begin the paragraph with तस्येन्दोः; *a.* reads ब्रवीमि for प्रब्रवीमि and marks verse 46, after it. 9. *d.* भव्याय for भव्यः, and *a. d.* भावनार्हः for भवनार्हः. 10. *d.* omits न after हव्यो. 11. *a. d. m.* read आहूयते for आह्वयते of *bi. j.* 12. *a. d.* स्तोतॄणां for होतॄणां; *a. d.* read अभिमतफलकामसंप्र॰ and omit तत् after it. 13. *d.* omits प्रज्ञानानि. 14. *m.* स्तुयामिति.

---

1. अभ्यासे etc. cf. with this जामि, section§ 16, above.

2. परुच्छेप ऋषिः—For the story of Parucchepa and Nṛmedha, See TS. ii. 5. 8. 3.

2. पर्ववच्छेपः—omitted by Bi. mss. क, ख, ग.

5. हविर्भाञ्जि—Cf. Nir. VIII. 129.

7. मरुत्वतीये शस्यते—See Âśva. Śrau. 8. 1.

11. यज्ञेन च पुनराहूयते—Is this यज्ञे न च पुनराहूयते ?

**स्वयम्** आदरवान् भूत्वा **सः** इन्दुः **अस्मदानिदः**–**अस्मदभिनिन्दितारं वधैः**–वज्रप्रहारैरतिदुःसहैः **अजेत**–जयेत् क्षिपेद्वा **दुर्मतिं** पापमतिं योऽस्मान् प्रति । तेन चातिबलवतेन्दुना हन्यमानोऽस्मद्**घशंसः** अस्माकं यः पापानां शंसिता कथयिता स्वल्पानामपि स्फीतिकर्ता जनपदे असौ **अवस्रवेत्** । अधोगतिः स्यात् । **अवतरमवं क्षुद्रमिव स्रवेत्** । यावच्च प्रथमं स्रुतः अधोगतः **ततोऽवतरं** ततोऽप्यवरतरमिति 5 तावत् **स्रवेत् क्षुद्रमिव** द्रव्यं किंचित् यावदामूलतो नष्टम् इत्येतदाशास्महे । बलकृतेर्मध्यम इति ॥

इहाभ्यासबाहुल्यं दृष्ट्वा **रेजति रेजति, स्रवेत् स्रवेत्** इति प्रतिसमाधत्ते **अभ्यासे भूयांसम् अर्थं मन्यन्ते** इति । शब्दाभ्यासे यत्रान्यो विशेषो नास्ति तत्रैवं विशेषमाचार्या मन्त्रार्थसतत्त्वविदो मन्यन्ते यदुतार्थभूयस्त्वमिति । न ह्यक- 10 स्मात् स एव शब्दः पुनरभ्यस्यते । लोकेऽपि चैतद् दृष्टं शब्दाभ्यासेऽर्थभूयस्त्वमिति **यथा अहो दर्शनीय अहो दर्शनीय इति** । गुणातिशये हि क्रियाः शब्दाभ्यासः । तस्मान्मन्त्रेष्वपि तद्वदेवेति न्याय्यम् । **तत् च** पुनरेतत् **परुच्छेपस्य** मन्त्रदृशः **शीलम्** । स हि नित्यमभ्यस्तैः शब्दैः स्तौति । मन्त्रदृशोऽपि स्वभाव उपेक्ष्य इत्युपप्रदर्शनायेदमुक्तम् । अथ पुनः **परुच्छेपः** कस्मात् । **परुच्छेप ऋषिः** । तस्य हि 15 **पर्ववत्**–महान् **शेपः**–प्रजननम् । **परुषि परुषि शेपोऽस्येति वा** । सर्वाङ्गसन्धिषु शेपः कृतो योगसुखात् किल । तस्य शेपोऽस्येति वा ॥

---

1. *a. d. m.* omit वधैः. 4. *a. d.* read स्फीतीकर्ता, and अस्मद् for असौ. 5. *a. d. m.* श्रुतः, *bi. j.* स्रुतः; *m.* omits ततोऽवतरं; *a. d.* ततोऽप्यवतरमिति for ततोऽवतरमिति of *bi. j.* 9. *m.* स्वशब्दाभ्यासे. 9–10. Bi. mss. क, ख omit from शब्दाभ्यासे यत्रान्यो...to °भूयस्त्वमिति. 10. *d.* तत्रैव for तत्रैवं of *bi. j.*; *a. d.* add after °र्थभूयस्त्वमिति, — स्रवेदिति प्रथमं स्रुतः ततोऽवरं ततोऽप्यवरतरमिति तावत्स्रवेत्क्षुद्रमिव द्रव्यं किंचिद्यावदामूलतो नष्टमिति एवं न ह्यक°. 11. *a. d.* read उच्यते for अभ्यस्यते. 12. *d.* omits अहो after यथा; *a.* appears to read दर्शनीया in both the places and omits हि before क्रियाः. 17. *a. d.* °सन्धिशेपः कृतो योगमुखात्किल, *bi. j.* शेपकृतो योगः सुखात्किल.

---

13. तस्मान्मन्त्रेष्वपि तद्वत्—Cf. the *jāmyajāmi* discussion in section X. 16, above.

17. शेपः कृतो योगसुखात् किल etc.—This does not yield any clear sense. The other readings also are not satisfactory.

**इति इमानि सप्तविंशतिः देवतानामधेयानि अनुक्रान्तानि ।** इतिकरणः प्रकारवचनः । एवमेतानि यथासमाम्नातानि **सप्तविंशतिः** सप्ताधिका विंशतिः **देवतानामधेयानि** वायुः इत्यत आरभ्य यावत् इन्दुः इति । तेषां पुनः किमर्थमनुकीर्तनम् । विशेषविवक्षया । कः पुनरसौ इति । तेषां कानिचित् **सूक्तभाञ्जि**
5 **हविर्भाञ्जि** च । सूक्तं च हविश्चोभयं भजन्ते । कानिचित् सूक्तमेव न हविः । **तेषाम् एतानि अहविर्भाञ्जि ।** तद्यथा **वेनः असुनीतिः ऋतः इन्दुः** इति । एभ्यो यान्यन्यानि त्रयोविंशतिः तान्युभयं भजन्ते सूक्तं हविश्च । देवतास्वभावोपप्रदर्शनार्थमिदमुक्तम् । घृतेन उदकेन त्वमात्मानं वर्धयस्वेत्येवमाद्यभिधानार्थं विशेषप्रविभागप्रज्ञप्तये अहविर्भाक्त्वादुदकमत्र घृतमित्येवमादि तद्वतेषु मन्त्रेषु विशेष उपेक्ष्य इति ॥

10 **प्रजापतिः (२८) प्रजानां पाता वा पालयिता वा । तस्य एषा भवति** ॥ ४२ ॥

**"प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो विश्वा॑ जा॒तानि॒ परि॒ ता ब॑भूव ।**
**यत्का॑मास्ते जुहु॒मस्तन्नो॑ अस्तु व॒यं स्या॑म॒ पत॑यो रयी॒णाम् ॥"**

**प्रजापते न हि त्वदेतान्यन्यः सर्वाणि जातानि तानि परिबभूव ।**
15 **यत्कामास्ते जुहुमस्तन्नो अस्तु । वयं स्याम पतयो रयीणाम् । इत्याशीः ॥**

**अहिर्व्याख्यातः । तस्यैषा भवति ॥ ४३ ॥**

5. *d.* omits च after सूक्तं. 9. *d.* reads उपेक्ष्यत इति for उपेक्ष्य इति. 11. *a.* concludes section § 43 as ॥ ४३ ॥, here, while *bi. j.* and others conclude as ॥ ५ (४२) ॥. 12. The mss. क, ख, ग of Bi. read जातानि पार तानि बभूव. 16. Bi. ms. च reads °मित्याशि°. 17. Bi. J. conclude X. iv. 6 with भवति.

10. 'प्रजापतिः'—Nigh. V. 4. 28.

12–13. RS. X. 121. 10; AV. 7. 80. 3; VS. 10. 20; 23. 65; TS. 1. 8. 14. 2; MS. 2. 6. 12; KS. 15. 8; ṢB. 1. 6. 19; TB. 2. 8. 1. 2; TAA. 10. 54; SMB. 2. 5. 8; ApMB. 2. 22. 19; ApG. 8. 23. 9; ŚB. 5. 4. 2. 9; TB. 2. 8. 1. 2; Bṛh. U. 6. 3. 3; AŚ. 2. 14. 12; AG. 1. 4. 4.

14. हि and जातानि—Omitted by Durga.

**प्रजापते न**–इति । प्राजापत्यस्य हिरण्यगर्भस्यार्षम् । पितृयज्ञ उपस्थाने विनियुक्ता । राजसूये च विनियोगो होमे । हे **प्रजापते न त्वत् अन्यः** न कश्चिदपि **एता-एतानि** सर्वदेवतारूपाणि **परिबभूव** परिगृह्य भवति । त्वमेवैतानि **सर्वाणि** सर्वतः परिगृह्य सर्वतो भवसि । यत एव त्वां वयं सर्वतो विभूतं पश्यामः सर्वस्येशानम् अतो ब्रूमः । **यत्कामाः ते** येन येन युक्ताः सन्तो वयं तुभ्यं **जुहुमः तत् नः अस्तु ।** 5 स कामोऽस्माकं त्वदनुध्यानात् समृध्यताम् । नित्यमेव च **वयं स्याम पतयो रयीणाम् । रयीणां**–धनानां **पतयः । इति** इयम् अपरा **आशीः** द्वितीया । यत्कामा इति प्रथमा । अथवा । **आशीः** इति आचार्यो दर्शयति । इयं मन्त्रगतैव यत्रापि न स्यात् तत्राप्यध्याहार्येति स्तुत्याशिषोर्नित्यसंबन्धादिति ॥

**अहिः** (२९) **व्याख्यातः** निर्वचनतः अहिरयनात् इति । इह त्वभिधेयो मध्यमः ॥ 10 **तस्य एषा भवति** ॥ ४३ ॥

**" अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु सीदन् ॥ "**

**अप्सुजमुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसूदकेषु सीदन् । बुध्न-**

---

1. *a.* marks verse 47, after इति as °न त्वदेतानीति[४७]; *d.* reads the *pratīka* up to एतानीति; *d.* reads प्रजापत्यस्य. 2. *d.* omits न before त्वत अन्यः; *m.* omits एता. 6. *d.* समुध्यताम् for समृध्यताम्. 7. *d.* इमं for इयं. 11. *a.* concludes here section 45, as ॥ ४५ ॥; *bi. j.* and others conclude here ॥ ६ (४३) ॥. 12. R. and Bi. mss. क, ख, ग read रजंसु षीदंन्, Bi. C. रजंःसु षीदंन्, J. रजंःसु सीदंन्. 13. Bi. J. अप्सुजमुक्थै°, Bi. mss. क, ख, ग read अप्सुजामु°; R. रजस्सूदकेषु षीदन्, Bi. J. रजःसु उदकेषु सीदन्, C. रजःसूदकेषु सीदन्; Bi. mss. क, ख, ग omit उदकेषु and read as रजःसु षीदन् only.

---

1. पितृयज्ञे...विनियुक्ता—See MS. 1. 10. 19.
2. राजसूये च विनियोगः—MS. 2. 6. 12.
10. 'अहिः'—Nigh. V. 4. 29; व्याख्यातः—Nir. II. 17.
12. RS. VII. 34. 16.
13. उदकेषु—Omitted by the Bi. mss. क, ख and ग.

**मन्तरिक्षं, बद्धा अस्मिन् धृता आप इति वा । इदमपीतरद् बुध्नमेतस्मादेव, बद्धा अस्मिन् धृताः प्राणा इति ॥**

**योऽहिः स बुध्न्यो, बुध्नमन्तरिक्षं तन्निवासात् । तस्यैषा भवति ॥ ४४ ॥**

5 **अब्जामुक्थैः**–इति । वशिष्ठस्यार्षम् । दशरात्रस्य चतुर्थेऽहनि वैश्वदेवे विनियोगः । हे स्तोतः त्वमेतम् **अहिम् अब्जाम्**–अप्सुजम्–उदकजन्मानम् **उक्थैः गृणीषे**–स्तौषि, **बुध्ने नदीनां** नदनानाम् अपां बन्धने एतस्मिन्नन्तरिक्षे वर्तमानं **रजःसु सीदन् उदकेषु** लब्धव्येषु निमित्तभूतेषु एतस्मिन् कर्मणि अङ्गभावमुपगच्छन् ॥

10 **बुध्नम्–अन्तरिक्षं, बद्धा अस्मिन् धृता आपः इति । इदम् अपि इतरत्** शरीरं **बुध्न**मित्युच्यते । **बद्धा अस्मिन् धृताः प्राणाः इति । यः अहिः सः बुध्न्यः ।** एतावांस्तु विशेषः **बुध्नम् अन्तरिक्षं तन्निवासात्** अहिर्बुध्न्यः (३०) । **तस्य एषा भवति** ॥ ४४ ॥

**"मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्रिधदृतायोः ॥"**

---

1. Bi. mss. क, ख, ग omit इति वा. 1–2. Bi. mss. क, ख, ग read बुद्धा for बद्धा in both the lines. 2. C. reads बुद्धा for बद्धा in this place only. 3. C. योहिः. 4. Bi. J. conclude X. iv. 7 with भवति. 5. *a.* marks verse 48, after इति, as °रिति ४८; *a. d.* read वासिष्ठस्य पराशरस्यार्षम्. 6. *a. d. m.* omit हे स्तोतः and अब्जाम्. 9. *m.* उपागच्छन्. 10–11. *a. d.* °तरद् बुध्नशरी°. 12. *m.* बुध्नः. 14. C. मा नोहिर्बु°.

---

1. इति **वा**— Bi. mss. क, ख and ग omit **वा**. It is not wanted as only one etymology is stated. Durga, too, does not read **वा** (see line 10, below).

1–2. **एतस्माद् एव**—Not repeated by Durga.

5–6. दशरात्रस्य...विनियोगः—Âśva. Śrau. 8. 8.

13. 'अहिर्बुध्न्यः'—Nigh. V. 4. 30.

14. RS. VII. 34. 17; cf. RS. V. 41. 16.

**मा च नोऽहिर्बुध्न्यो रेषणाय धात्। मास्य यज्ञोखा च स्त्रिधद्यज्ञकामस्य ॥**

**सुपर्णो व्याख्यातः। तस्यैषा भवति ॥ ४५ ॥**

**मा नोऽहिर्बुध्न्यः**–इति । पूर्वया समानं सर्वमिति । **मा** अस्मान् **अहिर्बुध्न्यः रिषे धात्** मा **रेषणाय**–हिंसनाय कस्मैचित् **धात्** । किंच । **मा यज्ञो अस्य स्त्रिधदृतायोः** । मा **यज्ञोऽस्य ऋतायोः** अस्य यजमानस्य **यज्ञकामस्य मा स्त्रिधत्** मा सुस्रवत् । नित्यमविनाशेन वर्ततामिति ॥ 5

**सुपर्णः** (३१) **व्याख्यातः** सुपतनः इति । इह त्वभिधेयो मध्यमः । **तस्य एषा भवति** ॥ ४५ ॥

**"एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे।** 10
**तं पाकेन मनसापश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम्॥"**

**एकः सुपर्णः, स समुद्रमाविशति। स इमानि सर्वाणि भूतान्यभिविपश्यति। तं पाकेन मनसापश्यमन्तितः। इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्या-**

---

1. C. मा नोहिर्बु°. 3. Bi. J. conclude X. iv. 8. with भवति. 4. *a.* marks verse 49, after इति, as इति४९. 5. *a. d.* omit मा after धात and they omit धात् after कस्मैचित्. 5–6. *a.* only omits मा यज्ञो अस्य सृधदृतायोः. 7. *a. d.* मा विस्त (स्र?) वतु for मा सुस्रवत्. 11. R. रेळ्हि स उ रेळ्हि, Bi. mss. क, ख, ग—रेळ्हि स उ रेळ्हि, Bi. J. रेळ्हि स उ रेळ्हि.

---

1. च and यज्ञोखा—Durga in his *vritti* does not repeat these words. The *vritti* reads यज्ञः for यज्ञोखा; the latter therefore does not seem to be the reading of Durga's ms. of *Yâskabhâṣya*.

8. 'सुपर्णः'—Nigh. V. 4. 31; व्याख्यातः—Nir. III. 12; IV. 3; VII. 24.

10–11. RS. X. 144. 4; AA. iii. 1. 6. 15.

13. अन्तितः—Durga renders this by अन्तिकम् इव.

13. इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता—Durga explains this by—ऋषिर्दृष्टदेवतासतत्त्वः कस्मैचिदाचक्षाणो ब्रवीति.

**ख्यानसंयुक्ता । तं माता रेढि वागेषा माध्यमिका । स उ मातरं रेढि ॥**

**पुरूरवाः । बहुधा रोरूयते । तस्यैषा भवति ॥ ४६ ॥**

**एकः सुपर्णः**–इति । सप्ते: घर्मस्य वेयमार्षम् । **एकः** एव अद्वितीयः । यस्य पतने गमने प्रतिमानम् अन्यत् द्वितीयं नास्ति । **सः सुपर्णः** सुपतनो वायुः **समुद्रम्**–
5 अन्तरिक्षं नित्यम् **आविवेश–आविशति ।** न कदाचिदप्यनाविष्टस्तत्र । **सः** च पुनः सर्वभूतानुप्रवेशी तदाविश्य **विश्वं भुवनं सर्वाणि इमानि भूतानि विचष्टे–अभिविपश्यति** यथा द्रष्टव्यानि । **तम्** एवं वर्तमानं अहं **पाकेन मनसा** विपक्वप्रज्ञानेन सर्वगतमपि सन्तम् अन्तिकम् इव **अपश्यम् ।** ऋषिर्दृष्टदेवतासतत्त्वः कस्मैचिदाचक्षाणो ब्रवीति । **तं माता रेळ्हि स उं रेळ्हि मातरम् ।**

10 **माता, माध्यमिका वाक्, तम्** उपजीवति परस्पराश्रयत्वात्तयोर्वृत्तेरध्यात्मवदिति ॥

**पुरूरवाः** (३२) मध्यमः । विज्ञायते हि 'प्राण एव हि पुरूरवाः' इति । सः **बहुधा रोरूयते** स्तनयति । तेन पुरूरवाः । **तस्य एषा भवति** ॥ ४६ ॥

**" समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्यः[1] स्वगूर्ताः ।**

**महे यत्त्वा पुरूरवो रणायावर्धयन्दस्युहत्याय देवाः ॥ "**

---

1. C. तं माता रेल्हि...स उ मातरं रेल्हि; Bi. mss. क, ख, ग read रेल्हि both in the ṛik and in the bhâṣya here; D. has रेळ्हि and Bi. J. R. have रेढि here. 2. D. पुरुरवा ब°, C. पुरूरवा ब°; Bi. J. conclude X. iv. 9 with भवति. 3. *a.* marks verse 50, after इति; *a. d.* वामदेवस्य for घर्मस्य. 4. *a. d.* प्रतिमानन्यद्द्वितीयं नास्ति, *bi. j.* प्रतिमायानम् अन्यं द्वितीयं, *m.* प्रतिमयानम्. 5. *a. d. m.* omit आविवेश. 6. *d. m.* तदाविश्य for तदाविपश्यं of *bi. j.*; *a. d. m.* omit विचष्टे. 8. *a. d.* अंतिक इव. 9. रेल्हि. 10. *d.* omits वाक् and reads ताम् for तम्. 13. R. नद्य १: स्वगूर्ताः.

---

1. एषा—not repeated by Durga.

10. वृत्तेरध्यात्मवत्—This is not very clear.

11. 'पुरूरवाः'—Nigh. V. 4. 32.

11. विज्ञायते हि—The following quotation is not traced. *Cf.* 'पुरूरवा असीति प्राण एव तत्'—MS. 3. 9. 5.

13–14. RS. X. 95. 7.

**समासतास्मिञ्जायमाने ग्रा गमनादापो, देवपत्न्यो वा। अपि चैनमवर्धयन्नद्यः स्वगूर्ताः स्वयंगामिन्यो महते च यत्त्वा पुरूरवो रणाय रमणीयाय संग्रामायावर्धयन्, दस्युहत्याय च, देवा देवाः ॥ ४७ ॥**

**समस्मिञ् जायमानः**–इति । उर्वश्या आर्षम् । **अस्मिन्**–एतस्मिन् पुरूरवसि **जायमाने** वर्षकर्मणि आत्मानं प्रतिलभमाने प्रावृट्काले। 'कर्मजन्मानः' इति ह्युक्तम् । 5 **समासत ग्राः । आपः** समागम्य तं परिवार्य तद्विधेयतामुपगम्य **आसते**–तिष्ठन्ति । **उत** अपि च यथा यथैवमृतुवशात् वर्षासु नद आरोहति तथा तथैनं ताः **नद्यः** नदनाः आपः **स्वगूर्ताः**–**स्वयंगामिन्यः** भूत्वा सुतरां तद्विधेयतामुपगच्छन्त्यः तदधिकारोद्भवेन **ईम्**–**एनम् अवर्धन्**–वर्धयन्ति । अतः परं स्तूयमानः प्रत्यक्षीभूतः । प्रत्यक्षकृत उत्तरोऽर्धर्चः । हे **पुरूरवः यत् त्वा महे रणाय** यस्मात् त्वां **महते रणाय** 10 मेघेन सह **रमणीयाय संग्रामाय अवर्धयन्**–वर्धयन्ति माध्यमिकाः **देवाः दस्युहत्याय**–मेघवधाय **चे**ति तस्मात् त्वामवश्यं ग्राः समागम्यासते वर्धयन्ति च नद्यः । सर्वथापि महानुभावः त्वं सर्वमेव त्वय्युपपद्यते इति ॥

---

1. C. जायमानेऽग्रा गमना°. 2. Bi. J. C. स्वगूर्त्ताः; the mss. क, ख, ग of Bi. do not read स्वगूर्ताः. 3. D. adds च after रमणीयाय, C. as text; Bi. ms. च and others, and R. read देवाः once only; Bi. J. C. read as देवा देवाः; Bi. J. conclude X. iv. 10, ॥ १० ( ४७ ) ॥ with देवाः. With देवाः ends the fourth pâda of the tenth adhyâya; Bi. J. conclude as **इति दशमाध्यायस्य चतुर्थः पादः** ॥ १०, ४ ॥ ; R. **इति दशमोऽध्यायः**; C. D. have ॥ ४७ ॥; they do not mark the pâda, but have the chain immediately after this and then conclude the adhyâya as:—C. इति चतुर्थोऽध्यायः, D. इति नैरुक्ते उत्तरषट्के चतुर्थोऽध्यायः. 4. *a.* marks verse 51, after इति; *a. d. m.* omit अस्मिन्. 6. *a. d.* add after ग्राः,—समासतास्मिन् क्रि (*d.* क्र) यमाणं य आपः. 7. *d.* यथायथितमृतुवशात् ? 9. *a. d. m.* omit ईम् and अवर्धन्; *bi.* mss. क, ख, ग and *m.* omit प्रत्यक्षीभूतः. 10. *d.* omits यत् त्वा महे रणाय and reads यस्त्वां महते रणाय ? for यस्मात् त्वां etc. 12. *a. d.* add च before मेघवधाय.

---

1. ग्राः **गमनात्**—Durga does not give this derivation.

2. **स्वगूर्ताः**—omitted by Bi. mss. क, ख, ग.

2. महते **च**—The **च** after महते is omitted by Durga.

5. उक्तम्—See Nir. VII. 5.

**देवपत्न्यः वा** इति पृथक्त्वेन दर्शयति। तथापि योज्यते। समागम्यैतस्मिन्नैडे पुरूरवसि **आसत ग्नाः** सर्वा देवपत्न्यः। स हि स्त्रीणां स्वभावो यत् प्रजायमानां स्त्रियं परिवार्यासते। **उत ईम् अवर्धन्। अपि चैतमवर्धयन्।** नदना ग्नाः स्तुतिपराः तस्य। **स्वगूर्ताः–स्वयंगामिन्यः** अपरप्रणेयाः ईश्वराः। अपि च। सर्वमेतदुपप-
5 द्यते पुरूरवस्त्वयि यस्मात् तस्मात् **महते रणाय रमणीयाय संग्रामाय** असुरैः सह **दस्युहत्याय** शत्रुवधाय अवर्धयन्। स्वैर्महिमभिः त्वं नः असुरान् जेष्यसीति पुरश्चक्रुर्देवा इति ॥ द्विरभ्यासोऽध्यायपरिसमाप्तौ यस्माल्लक्ष्यते समाप्तम् ॥ ४७ ॥

इति श्रीजम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ

ऋज्वर्थायां निरुक्तवृत्तौ

10 दशमोऽध्यायः परिसमाप्तः ॥ १० ॥

**(अथातो[१] मध्यस्थाना वायवा[२] याह्यासस्त्राणासो[३] नीचीनबारं[४] तमू[५]-ष्विमा[६] रुद्राय[७] या ते दिद्युज्जरावोधाद्दैरुद्यो[८] जात[९] एव[१०] वि[११] वृक्षानश्वा[१२]-पिनद्धमश्यास्यं[१३] क्षेत्रस्य पतिः[१४] क्षेत्रस्य पतिना[१५] क्षेत्रस्य पतेऽमीवहा[१६][१७] पुनरेहि[१८] यो[१९] अनिध्मो[२०] परेयिवांसं[२१] सेनेव[२२] मित्रो[२३] हिरण्यगर्भो[२४] ये
15 ते[२५] विश्वकर्मा सर्वस्य[२६] विश्वकर्मा विमना[२७] विश्वकर्मन्[२८] त्यमू षु**

---

1. *d.* दर्शयन्ति for दर्शयति. 3. *d.* उतेमं वर्धन्तां चैनमवर्धयन् etc.; *d.* नदनास्ताः स्तु° for नदना ग्नाः स्तु.° 5. *a. d.* यस्मात् तस्मात् महते; *bi. j.* यस्मात् महते. 7. *d.* यस्मात्तल्लक्ष्यते; *a.* concludes here after समाप्तम् as ॥ ४६ ॥ section 46; *bi. j.* read after समाप्तम् ॥ १० (४७) ॥ इति ऋज्वर्थायां निरुक्तवृत्तौ पञ्चदशस्य (दशमस्य) अध्यायस्य चतुर्थः पादः ॥ १०।४ ॥; *a. d.* read as श्रीऋज्वर्थायां निरुक्तपद्धतौ पंचदशोध्यायः समाप्तः ॥ स्वस्ति ॥ खंड ४६ ? पाद ४ मंत्र ५१ सं. ७०० पान २९; *m.* इति श्रीमज्जम्बू° as text. 10. *bi.* पञ्चदशोऽध्यायः (दशमोऽध्यायः) परिसमाप्तः ॥१०॥. 11. Bi. mss. क, ख, ग do not have the खण्डशृङ्खला which begins with अथातो. 12-15. C. D. °जरावोधाद्दैर्यो[८] जातो[९] वि[१०] वृक्षा°[११]; °मश्मास्यमवतं[१३]; यो[१९] आनिध्मः; सेनेव[२१] स्रष्टा; मित्रो[२२] जनान्; ये[२४] ते सरस्व; विश्वकर्मा[२५] सर्वस्य कर्ता विश्व°; विश्वकर्मन्ह्विषा[२७].

---

6. नः असुरान्—The नः has no meaning.

२९ सद्यश्चिद्यस्त्वया ३० मन्यवा ३१ दधिक्राः ३२ सविता ३३ यन्त्रैर्हिरण्यस्तूपो ३४ देवस्त्वष्टा ३५ वात आ वातु ३६ प्रति ३७ त्यमभि त्वा ३८ वेनो ३९ वेनतेरयं ४० वेनोऽसुनीत ४१ ऋतस्य हि ४२ प्र ४३ तद्वोचेयं ४४ प्रजापतेऽब्जामुक्थैर्मा ४५ नोऽहिरेकः ४६ सुपर्णः ४७ समस्मिन् सप्तचत्वारिंशत् ॥)

इति निरुक्ते (उत्तरषट्के) दशमोऽध्यायः समाप्तः ॥ १० ॥ 5

---

1-4. C. D. २९ सद्यश्चित्त्वया ३० मन्यो ३१ आदधिक्राः ३२ सविताहिरण्य; ३३ ४० सुनीते ४१ ऋतस्य; ४३ प्रजापतेब्जा- ४४ मुक्थैर्मा नोहिरेकः. 5. C. D. इति चतुर्थोध्यायः.

## अथ एकादशोऽध्यायः।

श्येनो व्याख्यातः। तस्यैषा भवति ॥ १ ॥

श्येनः (१) व्याख्यातः। 'श्येनः शंसनीयं गच्छति'–इति। इह त्वभिधेयो मध्यमः। तस्य एषा भवति ॥ १ ॥

5 "आदाय श्येनो अभरत्सोमं सहस्रं सवाँ अयुतं च साकम्।
अत्रा पुरंधिरजहादरातीर्मदे सोमस्य मूरा अमूरः ॥"

आदाय श्येनोऽहरत्सोमम्। सहस्रं सवानयुतं च सह। सहस्रं सहस्रसाव्यमभिप्रेत्य। तत्रायुतं सोमभक्षाः। तत्संबन्धेनायुतं दक्षिणा इति वा। तत्र पुरन्धिरजहादमित्रान्। अदानानिति वा। मदे सोमस्य मूरा
10 अमूरः इति। ऐन्द्रे च सूक्ते सोमपानेन च स्तुतः। तस्मादिन्द्रं मन्यन्ते ॥

ओषधिः सोमः सुनोतेः। यदेनमभिषुण्वन्ति। बहुलमस्य नैघण्टुकं वृत्तम्। आश्चर्यमिव प्राधान्येन। तस्य पावमानीषु निदर्शनायोदाहरिष्यामः ॥ २ ॥

---

2. D. हरिः ॐ म्। श्ये°, Bi. J. ॐ३म्। श्ये°, C. R. do not have ॐ; Bi. J. conclude XI. i. 1 with भवति. 3. *m.* begins the commentary as अथ निरुक्तवृत्तौ षोडशोऽध्यायः ॥ श्रीगणेशायनमः ॥ श्येनो व्या°, *bi. j.* ॥ श्रीः ॥ श्ये°. 6. Bi. J. R. अमूरः, D. अमूंरः. 9. Bi. mss. क, ख, ग read °दानानीति वा. 9-10. Bi. ms. च and C. D. read अमूर इत्यैन्द्रे, R. अमूर इति। ऐन्द्रे, Bi. J. अमूरः। ऐन्द्रे. 11. C. बहुळमस्य. 13. Bi. J. conclude XI. i. 2 with °दाहरिष्यामः.

---

3. 'श्यैनः'—Nigh. V. 5. 1; व्याख्यातः—Nir. IV. 24.

5-6. RS. IV. 26. 7.

7. **अहरत्**—Yâska renders अभरत् in the *ṛk* by अहरत्; Durga by अपिबत्.

7-8. सहस्रं सहस्रसाव्यम्—Durga omits **सहस्रं**.

8. **तत्रायुतं सोमभक्षाः**—omitted by Durga.

10. **इति**—omitted by Durga.

10. **ऐन्द्रे च सूक्ते......मन्यन्ते**.—Durga omits this sentence. He does not comment on it also.

**आदाय श्येनः**–इति । वामदेवस्यार्षम् । श्येनाजिरादिषु मरुत्वतीये शस्यते । ऋत्विग्भिर्विधानतः प्रत्तं **श्येनः**–इन्द्रः **सोमम् आदाय अभरत्**–अपिबत् । क्व । **सहस्रं सवान्** सहस्रं सुत्यानां यत्र कुर्वन्ति, **अयुतं च दक्षिणाः** प्राप्नुवन्ति, नतु दीयन्ते सत्रत्वात् । पृष्ठ्यशमनाभिप्रायं वा दक्षिणादानं स्यात्, **सहस्रसाव्ये** सत्रे तेषां **तत्संबन्धात्** । **अत्रा पुरन्धिः** अत्र–अस्मिन् सहस्रसाव्ये सत्रे सः श्येनः **पुरन्धिः** 5 बहुनो धनस्य दाता **मदे सोमस्य** तृप्तौ सोमस्य प्राप्तायाम् **अजहात् अरातीः**–असुरा**नमित्रान्** पृथक्त्वपक्षे अभ्यजयत् प्राणैर्मूढान्–अप्रतिपत्तिकान् कृत्वा विषादमुपनीय अमूढो–निःसाध्वसः । त्रित्वपक्षे तु **अदानान् इति वा ।** रातिर्दानार्थः । तत्प्रतिषेधेनारातिः । प्राक् सोमपानमदप्राप्तेः अदानानिति न दास्यामीत्येवंधियः **मूराः**–मूढमतयः कार्पण्यसंयुक्ताः ये आसन् तान् प्रति **सोमस्य मदे** प्राप्ते **अमूरः**–अमूढः 10 अकृपणो भूत्वा **अजहात्**–अत्यजत् । दाता संपेदे ।

**सहस्रसाव्यमभिप्रेत्य तत्संबन्धेनायुतं दक्षिणा इति वा । इति वा**–शब्देन किं विकल्प्यते । **सहस्रसाव्यं** वा सत्रं यत् पठन्ति याज्ञिकाः । तद्यथा । अतिरात्रयोर्मध्ये सहस्रमहानि शतकृत्वो दशरात्रस्यावृत्तिरग्नेः सहस्रसाव्यमिति । तदह्नां सहस्रं दशभिश्चमसैर्गुणितं चमसपरिसंख्ययोपलक्ष्यमाण**मयुतं सोमभक्षाणां** संपद्यते । 15 सोमभक्षनिष्क्रयणश्रुतिश्च दक्षिणानामस्ति ।

" यां सदस्येभ्यो ददाति सोमपीथं तया निष्क्रीणीते "

–इति । न चासति प्रश्लेषे रूढिबाधो न्याय्य इति । असत्यपि ऋत्विग्दक्षिणादानसंबन्धे

---

1. *a.* marks verse 1 after इति, as इति¹. 2. *a. d. m.* प्रत्नं, *bi. j.* प्रत्तं. 3. *a. d.* omit सहस्रं सवान्; *bi. j.* सुत्यानां, *m.* सुत्यायां. 4. *a. d.* and *bi.* mss. क, ख read पृष्ठ्यशमनीयाभिप्रायेण वा etc. 7. *a. d.* पृथक्पक्षे. 8. *m.* adds इति again after वा. 9. *a. d.* omit मूराः. 10. *a. d.* read कर्मण्यभिसंयुक्ताः for कार्पण्यसंयुक्ताः; *d.* omits ये; *a. d.* omit अमूरः. 16. *a. d.* सोमभक्षनिष्क्रयश्रुतिः. 17–18. *a. d.* निःक्रीत इति for निष्क्रीणीत इति. 18. *a. d.* दक्षिणादानसंबंधे for ऋत्विग्दक्षिणा etc.

---

1. शस्यते—See Âśva. Śrau. 9. 7.

13–14. अतिरात्रयोर्मध्ये ......सहस्रसाव्यमिति—See Âśva. Śrau. 12. 5.

17. The quotation is from MS. 4. 8. 3.

सहस्रसाव्यमेव सत्राणाम् । प्रासर्पकाभिप्रायं वा अयुतम् । अथवा । सहस्रमिति बहु-
नाम । **सहस्रं सवान्** । अभिषवा बह्वः प्रतिसवनमभिषवमभिप्रेत्य । यस्मिन्
कस्मिंश्चिद्दक्षिणावति सोमे **अयुतं च दक्षिणाः** बह्वय इत्यर्थः । अस्ति हि प्राप्तिः ।
विशेषशब्दाः सामान्येषु भवन्तीति । तद्यथा । हिमेनोदकेनेति । अदक्षिणत्वात् सत्राणा-
5 मेवं वेत्यभिप्रेत्य **वा**-शब्दं चकार ॥

**सोमः** (२) इति वक्तव्यम् । स पुनरेषः **ओषधिः सोमः** । हैमवतो मौजवतो
वा । स कस्मात् । **सुनोतेः** । 'षुञ् अभिषवे' इत्यस्य । अभिषूयते ह्यसौ यज्ञे ।
**यदेनमभिषुण्वन्ति** इति कर्मकारकं दर्शयति । स कथं मध्यमस्थानः । भवति हि
तमधिकृत्य

10 "यत्ते सोम दिवि ज्योतिः"

-इति ।

"सोमो वै वाजस्तस्य चन्द्रमास्तृतीयमयं यः पवते स तृतीयमिति स तनूकरणे
तं सर्वं स्वतनूभूतमाप्याययति"

-इति । तस्मादस्यैव स्वा तनूर्यच्चन्द्रमाः रसात्मकत्वात् । वायुर्वा सोममेवमात्मान-
15 मापाद्याभिषूयत इति भवति स मध्यमः । **बहुलमस्य नैघण्टुकं वृत्तम्** । अस्वार्था
स्तुतिः परार्था । तद्यथा । प्रायः पावमानं मण्डलम् । **आश्चर्यमिव प्राधान्येन** ।
स्वप्रधाना स्तुतिः क्वचिदाश्चर्यं चित्रतः स्तुतिः स्यात् । **तस्य पावमानीषु** ऋक्षु
**निदर्शनाय** उभयम् **उदाहरिष्यामः** परार्थत्वं स्तुतेः स्वार्थत्वं च । परार्थं तावदुदा-
ह्रियते । तद्यथा ॥ २ ॥

---

2. *m.* अभिषवावहतः for अभिषवा बह्वः of others; *a. d.* omit अभिषवं after प्रतिसवनं. 8. *a. d. m.* मध्यस्थानः. 12. *d.* पर्वते; *d.* तनुकरणे. 13. *d.* सुतनूभूतं for स्वतनू°. 14. *d. m.* अस्यैषैव स्वा; *a. d.* सोममेतमा°, *bi. j. m.* सोऽयमेवमा°.

---

1. प्रासर्पकः—प्रसर्पका नाम ऋत्विग्विशेषाः । ते सोमयागे ब्रह्माणमनु प्रसर्पन्ति । तेभ्यो दीयमानः सोमः प्रासर्पकः ( Âs'va. Śrau. 5. 3. )

4. हिमेनोदकेनेति—See Nir. VI. 36.

6. 'सोमः'—Nigh. V. 5. 2.

7. 'षुञ् अभिषवे'—Dhâtup. 5. 1.

10. यत्ते सोम दिवि ज्योतिः—MS. 1. 3. 3; VS. 6. 33.

12. सोमो वै वाजः etc.—Cf. MS. 4. 5. 4; ŚB. 3. 9. 4. 12.

" स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
इन्द्राय पातवे सुतः ॥ "

**इति सा निगदव्याख्याता । अथैषापरा भवति चन्द्रमसो वैतस्य वा ॥ ३ ॥**

**स्वादिष्ठया मदिष्ठया**–इति । मधुच्छन्दस आर्षम् । ग्रावस्तोत्रे विनियोगः । हे 5
**सोम स्वादिष्ठया**–स्वादुतमया **मदिष्ठया**–मादयितृतमया च त्वं **धारया पवस्व**–
प्रक्षर । किमर्थम् । **इन्द्राय**–इन्द्रार्थं **पातवे**–पानाय **सुतः**–अभिषुतः । इन्द्रार्थं पवस्वे-
त्यस्वार्थता लक्ष्यते ।

**अथ एषा अपरा भवति चन्द्रमसो वा एतस्य वा** इति । **अथ**–शब्देन
विशेषाधिकारवाचिना स्वप्रधानतां स्तुतेरधिकरोति । चन्द्रमसो वेति चन्द्रत्वमापन्नस्या- 10
प्यौषधिसोमस्य वा । यथोक्तं ' स तनूकरणे ' । इतरथा ह्यप्राकृतप्रक्रिया स्यादनधिकारा-
दस्मिन् प्रक्रमे चन्द्रमसः । चन्द्रमसो वाधिदैवमापन्नस्य । ओषधिसोमस्य वाधियज्ञमाप-
न्नस्य । तदेतदुभयथा प्रदर्शयति ॥ ३ ॥

" सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिम् ।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ॥" 15

---

4. Bi. J. conclude XI. i. 3 with वैतस्य वा. 5. *a.* marks verse 2, after इति, as इति[२]; *m.* मधुछंदस आर्ष; *a. d.* omit विनियोगः. 6. *a. d. m.* मदयितृतमया ? 9. *a. d. m.* omit इति. 10. *m.* स्वप्रधानतां, *bi. j.* स्वप्रधानता. 10–11. *a. d.* आपन्नस्याप्योषधिसोमस्य । य°, *bi. j.* °औषधिसोमस्य वा । य°. 11. *d.* °प्रक्रियास्मादनाधिकारात् etc. 12. *m.* औषधिसो°, *bi. j.* ओषधिसो°. 13. *d.* दर्शयति for प्रदर्श° of *bi. j.*

---

1–2. RS. IX. 1. 1; SV. 1. 468; 2. 39; VS. 26. 25.
3. **इति सा निगदव्याख्याता**—Not noticed by Durga.
5. ग्रावस्तोत्रे विनियोगः—See Âśva. S'rau. 5. 12.
11. स तनूकरणे—See last page, line 12.
14–15. RS. X. 85. 3; AV. 14. 1. 3; GB. 1. 2. 9.

**सोमं मन्यते पपिवान् यत्संपिंषन्त्योषधिम्। इति वृथासुतमसोममाह। सोमं यं ब्रह्माणो विदुरिति न तस्याश्नाति कश्चनायज्वेत्यधियज्ञम्।**

**अथाधिदैवतम्। सोमं मन्यते पपिवान् यत् संपिंषन्त्योषधिमिति 5 यजुःसुतमसोममाह। सोमं यं ब्रह्माणो विदुश्चन्द्रमसम्। न तस्याश्नाति कश्चनादेव इति॥**

**अथैषापरा भवति चन्द्रमसो वा। एतस्य वा॥ ४॥**

**सोमं मन्यते**-इति। सूर्याया आर्षम्। विवाहे विनियोगः। **यत् संपिंषन्ति**-संचूर्णयन्ति अभिषुत्य पिबन्ति सोमम् **ओषधिं** केचिद्रासायनिकाः। ते **मन्यन्ते सोमं** 10 **पपिवांसः** सोममपास्म इति। न च पुनस्ते सोमपाः। वृथासोमः स इति। अनेन तावदर्धर्चेनायं मन्त्र एवं **वृथासुतमसोममाह** पातॄंश्च। अथ कः सोमः के च सोमपाः। यतो ब्रवीति। **सोमं यं ब्रह्माणो विदुर्न तस्यांश्नाति कश्चन। यं** ब्राह्मणाः **सोमं विदुः** अधियज्ञे अङ्गभूतं **न तस्य अश्नाति कश्चन अयज्वा** अनधिकृतो यजमानत्वेन। **इति अधियज्ञम्** इति विषयमुपप्रदर्शयति।

15 **अथाधिदैवतम्** इति विषयान्तरमधिकरोति। उक्तं हि 'चन्द्रमसो वा' इति। तदुपप्रदर्शनार्थमाह। **सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिम् इति यजुःसुतम्** अधियज्ञं चन्द्रमसमपेक्ष्य **असोममाह**। यथा पूर्वस्मिन् रासायनिकसोमस्यासोमत्वमधियज्ञमपेक्ष्य, एवमिहाप्यधियज्ञसोमस्यासोमत्वमाधिदैवसोमं चन्द्रमसम-

---

7. Bi. J. conclude XI. i. 4 with वैतस्य वा. 8. *a.* marks verse 3 after इति, as इति[३] and reads the *pratîka* up to पपिवानिति; *m.* यत्सर्पिंषंति ?. 10. *a. d.* and *bi.* mss. क, ख read सोममपास्म इति, *bi. j.* सोममपास्यमिति, *m.* सोममपास्य इति. 11. *d.* omits च after के. 12. *m.* यं ब्रह्माणाः. 17. *a. d.* °मुपेक्ष्य। सोममाह ?

---

8. विवाहे विनियोगः—Âśva. Gr. 1. 8. 13. For the story of the marriage of Sûryâ with Soma, see AB. 4. 1. 7 (प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् सूर्यां सावित्रीम्).

15. उक्तं हि—Nir. XI. 3.

पेक्ष्य । एवं कृत्वा **सोमं यं ब्रह्माणः विदुः चन्द्रमसं न तस्य अश्नाति कश्चन अदेवः इति** । देवानां हि भक्ष्यत्वेन विपरिणतश्चन्द्रमाः ।

" सोमो नूनमेष तद्देवानामन्नम् "

–इति ह विज्ञायते । एवमस्य स्वप्रधाना सोमस्य स्तुतिः ॥

**अथ एषा अपरा भवति चन्द्रमसो वा एतस्य वा** । सा किमर्थम् । 5
'आश्चर्यमिव प्राधान्येन' इत्युक्तम् । तथा चेयम् **अपरा** अन्या स्वार्थप्राधान्या स्तुतिरप्यस्ति सोमस्येत्युपप्रदर्शनार्थमाह ॥ ४ ॥

**" यत्त्वा देव प्र पिबन्ति तत आ प्यायसे पुनः ।**

**वायुः सोमस्य रक्षिता समानां मास आकृतिः ॥"**

**यत् त्वा देव प्रपिबन्ति तत आप्यायसे पुनरिति नाराशंसानभि-** 10
**प्रेत्य । पूर्वपक्षापरपक्षाविति वा । वायुः सोमस्य रक्षिता । वायुमस्य रक्षितारमाह । साहचर्याद्रसहरणाद्वा । समानां संवत्सराणां मास आकृतिः, सोमो रूपविशेषैरोषधिश्चन्द्रमा वा ।**

**चन्द्रमाः । चायन् द्रमति । चन्द्रो माता । चान्द्रं मानमस्येति वा । चन्द्रश्चन्दतेः कान्तिकर्मणः । चन्दनमित्यप्यस्य भवति । चारु द्रमति ।** 15
**चिरं द्रमति । चमेर्वा पूर्वम् । चारु रुचेर्विपरीतस्य । तस्यैषा भवति ॥ ५ ॥**

**यत्त्वा देव**–इति । यदा त्वां हे **देव**–सोम **प्रपिबन्ति** प्रारभन्ते पातुमृत्विग्यज-

1. *d.* omits यं. 4. *a. d.* सोमस्तुतिः. 6. *a. d.* प्रधानस्तुतिर°, *bi. j.* स्वार्थप्राधान्या स्तुतिर°, *m.* स्वार्थप्राधान्यस्तुतिर°. 15. Mss. क, ख, ग of Bi. read चारु द्रवति. 17. Bi. J. conclude XI. i. 5 with भवति. 18. *a.* marks verse 4 after इति, as इति ४; *d.* reads the *pratīka* up to प्रपिबन्तीति; *d.* पिबन्ति for प्रपिबन्ति; *bi. j.* add सोमं after प्रारभन्ते, *m.* omits it.

4. इति ह विज्ञायते—*Cf.* 'एष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः'—ŚB. 1. 6. 4. 5; 'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति—Chând. Up. 5. 10. 4.

6. उक्तम्—Nir. XI. 2.

8-9. RS. X. 85. 5; AV. 14. 1. 4.

10-11. Durga omits **इति नाराशंसानभिप्रेत्य । पूर्वपक्षापरपक्षाविति वा ।**

मानाः त्रिषु सवनमुख्येषु तदा किमिति । **तत आ प्यायसे पुनः** । **ततः**–अनन्तरं **पुनः आप्यायसे** । तदुक्तमधियज्ञे

"आप्यायनमाप्यायस्व 'सं ते पयांसि' इति भक्ष्यशेषान्"

–इति । **वायुः सोमस्य रक्षिता** इति । वायव्येष्वसौ पात्रेषु गृहीतो रक्ष्यत
5 इति **वायुमस्य रक्षितारमाह** मन्त्रदृक् । **साहचर्यात् रसहरणात् वा** ।
वायुसहचरितो ह्यसौ । तेन नित्यं सहचरणादविनाभावात्कर्मणः । रसहरणात् वा सर्व-रसापहारी वायुः समर्थः सन् यत्र शोषयति सोमं, तेन सोमो रक्षितो भवति । **समानां मास आकृतिः** । समानां संवत्सराणां **मासः–माता**–निर्माता **सोम ओषधिः** । सर्वस्य किलौषधिसोमस्य चन्द्रमसः कलोपचयमनु प्रत्यहमेकैकश्येन कला इव चन्द्रमसः
10 पर्णान्युपचीयन्ते । स पौर्णमास्यां पञ्चदशपर्णः संपद्यते । पौर्णमास्याः पुनः परतः कलाहानौ चन्द्रमस इव एकैकं पर्णमपचीयते इति ओषधेः सोमस्य चन्द्रमसः संपद्यते । तदायुर्वेदविदः सोमलक्षणं रसायनतन्त्रे स्मरन्ति । अमुना प्रकारेणोपचयापचयाभ्यां पर्णानां मासोपलक्षणद्वारेण **समानां–संवत्सराणाम् आकृतिः**–आकर्ता भवति **सोमः रूपविशेषैः** । तदेवं पर्णानामुपचयापचयाभ्यामन्यदन्यद्रूपं प्रतिपद्यते ।
15 एवमधियज्ञेऽपि स एव ओषधिः सोमः ।

---

1. *m.* सवनमुखेषु. 3. *a. d.* omit आप्यायस्व; *d.* adds इति once more after इति. 4–5. *a.* रक्षत इति. 6. *d.* वायुः सहचरितो etc., *a.* omits from वायुसहचरितो etc. to रसहरणाद्वा. 7. *d.* omits सोमं and reads सोमरक्षितो for सोमो रक्षितो; 7–8. *a. d.* समानां संवत्सराणां for समानां मास आकृतिः; *m.* omits the *pratîka*—समानां मास आकृतिः and adds समानां संवत्सराणां before मासो माता, *bi. j.* do not have समानां संवत्सराणां before मासो माता. 9. *bi. j.* किलौषधिः । सोमस्य चन्द्रमसः, *d.* किलौषधिसोमस्य. 11. *m.* चन्द्रमस एव, *bi. j.* चन्द्रमस इव. 12. *d.* सोमलक्षणं रसायनं तंत्रैः स्मरान्ति. 13. *a. d.* मासोपलक्षणद्वारेण *bi. j. m.* सोमलक्षणद्वारेण. 15. *d.* ओषधिसोमः.

---

3. सं ते पयांसि—See RS. I. 91. 18; VS. 12. 113.

3. Cf. 'आप्यायस्व सं ते पयांसीति भक्षशेषान्' (आप्याययन्ति)—Mânava S'rau. 2. 4. 1. 46; Âśva. S'rau. 1. 10; 5. 6.

12. तदायुर्वेदविदः......स्मरन्ति—See Suśruta XXIX. 20–22.

अथाधिदैवे । **यत्त्वा देव प्र पिबन्ति** इति अपरपक्षेषु पीयते रश्मिभिः । तदुक्तं 'यमक्षितिमक्षितयः पिबन्ति' इति । **तत आ प्यायसे पुनः** । तं पूर्वपक्ष आप्यायय-न्तीति । तदप्युक्तम् । 'यथा देवा अंशुमाप्याययन्ति' इति । वायुं सोमस्य चन्द्रमसो रक्षितारमाह । एष ह्येनं सूक्ष्मया रश्मिनाख्या सुषुम्नाख्यया पुनर्यथाकालमापूरयति । **समानां-संवत्सराणां मासः** । चन्द्रमाः-सोमः, लक्षणत्वात् मासः । द्वादशकृत्वो 5 मासभूतमात्मानमावर्तयन् संवत्सराणां कर्ता भवति । **रूपविशेषैः** इति कलानामुपच-यापचयविशेषाभ्यां रूपविशेषाश्चन्द्रमसः प्रतितिथि भवन्ति ।

'स्वादिष्ठया मदिष्ठया' इत्यस्यामपि केचित् अधिदैवमर्थं व्याचक्षते । तन्मतेनोच्यते । हे भगवन् सोम चन्द्र स्वादिष्ठया अतिशयेन स्वादुतमया मदिष्ठया अतिशयेन मदयितृत-मया पवस्व प्रक्षर धारया प्रत्यहमेकैकया कलया इन्द्राय सूर्याय पातवे सुतः आपूरितः 10 सुषुम्नेन रश्मिना ॥

**चन्द्रमाः** (३) कस्मात् । स हि **चायन्**-पश्यन् सर्वभूतानि उपर्यवस्थितः **द्रमति**-गच्छति । चायतेः पूर्वपदं, द्रमतेरुत्तरपदम् । अथवा । **चन्द्रो माता** । चन्द्रश्चासौ माता च निर्माता सर्वस्येति चन्द्रमाः । चन्द्रः पूर्वपदं, मातोत्तरपदम् । **चान्द्रं मानमस्य इति वा** । चन्द्रमाः चन्द्रः पूर्वपदं, तदेवोत्तरपदम् । केवलं तु समानाधिकरणः पूर्वः 15 बहुव्रीहिरुत्तरः ।

अथ **चन्द्रः** कस्मात् । **चन्दतेः कान्तिकर्मणः** । नित्यकान्तो ह्यसौ । **चन्दनम्** इत्यप्यस्यैव चन्दतेर्भवति । तदपि हि कान्तम् । अथवा । **चारु द्रमति** ।

---

1. *d. m.* read the *pratîka* up to तत आ प्यायसे पुनः. 2–3. *a. d. m.* read तं पूर्वपक्ष आप्याययन्ति and omit इति after it, *bi. j.* तं पूर्वपक्षमाप्याययन्तीति. 8. *d.* इत्यस्यापि, *bi. j.* इत्यस्यामपि; *a. d.* अधिदैवतमर्थं, *bi. j.* अधिदैवमर्थं. 10. *d.* क्षरस्व, *bi. j.* प्रक्षर; *a. d.* प्रत्येकं; *bi. j.* प्रत्यहं; *bi. j.* एकैककलया, *m.* एकैकया कलया. 11. *d.* सुषु पश्यन् रश्मिना, *bi. j.* सुषुम्नेन रश्मिना. 19. *a. d.* चायन् पश्यन् सर्वभूतानि etc., *bi.* य प्यन्, पण्यन्. 15. *a. d.* omit चन्द्रमाः चन्द्रः पूर्वपदं. 17. *a.* only reads चदतेः, *m.* चन्द्रतेः.

---

1. पीयते रश्मिभिः—*Cf.* चन्द्रमा वै सोमो देवानामन्नम् VS.

1. तदुक्तं—See Nir. V. 11.

3. तदप्युक्तम्—See Nir. V. 11.

12. 'चन्द्रमाः'—Nigh. V. 5. 3.

12–13. द्रमति गच्छति—Dhâtup. I. 467 'द्रम गतौ'.

चारुशब्दात्पूर्वपदं, द्रमतेः उत्तरपदम्। चार्विति द्रमतिक्रियाविशेषणम्। अथवा। **चिरं द्रमति**। तदेवोत्तरपदं चिरशब्दात्पूर्वपदम्। **चमेर्वा पूर्वं**, द्रमतेरेवोत्तरपदम्। कोऽर्थः। चम्यमानो भक्ष्यमाणो देवैरसौ द्रमतीति चन्द्रमाः।

अथ **चारु** कस्मात्। **रुचेः** आद्यन्तविपरीतस्य दीप्तिकर्मणः। **तस्य एषा** 5 **भवति** ॥ ५ ॥

"**नवोंनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम्।**

**भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः॥**"

**नवो नवो भवति जायमान इति पूर्वपक्षादिमभिप्रेत्य। अह्नां केतुरुषसामेत्यग्रमित्यपरपक्षान्तमभिप्रेत्य। आदित्यदैवतो द्वितीयः** 10 **पाद इत्येके। भागं देवेभ्यो विदधात्यायन्नित्यर्धमासेज्यामभिप्रेत्य। प्रवर्धयते चन्द्रमा दीर्घमायुः॥**

**मृत्युर्मारयतीति सतः। मृतं च्यावयतीति वा शतबलाक्षो मौद्गल्यः। तस्यैषा भवति ॥ ६ ॥**

**नवोंनवो भवति**–इति। सूर्याया आर्षम्। दूणाशे चान्द्रमसे चरौ विनियोगो 15 राजयक्ष्मगृहीतेष्टौ च। **नवों नवो भवति जायमानः**। चन्द्रमाः प्रतीच्यां दिशि **पूर्वपक्षाद्यु**पक्रम्य उपक्रान्तवृद्धिः अस्तं गते आदित्ये पश्चादादित्यस्य प्रतिमासं जायमानो

---

1–2. *m.* चिरं द्रमिति. 4. *d.* अथवा for अथ. 12. The mss. क, ख, ग of Bi. omit वा after च्यावयतीति. 13. Bi. J. conclude XI. i. 6 with भवति. 14. *a. m.* mark verse 5, after इति; *d.* reads the *pratîka* up to जायमान इति; *a. d.* द्रूणांशे for दूणाशे; *d.* चन्द्रमसे.

---

6–7. RS. X. 85. 19; AV. 7. 81. 2; TS. 2. 3. 5. 3; 4. 14. 1; MS. 4. 12. 2; 181. 5; KS. 10. 12; TB. 3. 1. 3. 1; AS'. 9. 8. 3; HG. 1. 16. 1.

10. **इत्यर्धमासेज्यामभिप्रेत्य**—Not explained by Durga.

12. वा—Omitted by the Bi. mss. क, ख, ग.

14. विनियोगः—See Âsva. Srau. 9. 8.

15. राजयक्ष्मगृहीतेष्टौ—See Mânav. Srau. 2. 2. 7.

नवो नवो भवति । **अह्नां केतुरुषसामेत्यग्रम् इति अपरपक्षान्तमभिप्रेत्य ।** अपरपक्षान्तेषु प्राच्यां दिशि प्रक्षीणः कलामात्रावशेषः **अह्नां केतुः**–लक्षणम् । तत्कलोपचयापचयाभ्यां हि प्रतिपत्प्रभृतीन्यहानि लक्ष्यन्ते । अथवा **अह्नां केतुः**–कर्ता स्वगतिविशेषैः । **उषसामेत्यग्रम्** इति । उषसो यः प्रकाशः तस्य प्रान्ते, पुरस्तात् उद्यतः सूर्यस्य दृश्यते । स पुनरेष एवं पर्यायेण प्रतीचीप्राच्यौ दिशौ **आयन्** पूर्वपक्षापरपक्ष 5 एकैकशोऽपि पूर्णमास्यमावास्ययोः आगत्य कालौ भिन्दन् हविर्भागं वा विभागेन यथाविभागं **देवेभ्यो भागं विदधाति** । एककर्मेऽपि पूर्वपक्षात् पौर्णमास्यमावास्ययोः स्वगत्या काले तिथिं विभज्य देवेभ्यो ददाति । विभागदाने हेतुर्भवति ।

"पूर्णे चन्द्रमसि उपचये पौर्णमास्यदर्शनेऽमावास्यायाम्"

इति ह विज्ञायते । य एवं करोति **चन्द्रमाः** सः **प्रतिरते–प्रवर्धयते** ईजानानां 10 **दीर्घम् आयुः** । वयमपि च यजामहे तमनेन हविषा । अतः सोऽस्माकमप्येतत् करोतु इत्येतदाशास्महे ।

**आदित्यदैवतो द्वितीयः पाद इत्येके ।**

"पूर्वापरं चरतो माययैतौ"

इत्यतोऽनन्तरमेवेयम् । मैत्रावरुणीये समाने हविषि विनियोगः इत्यपेक्ष्येयमपि सौर्याचन्द्रमसीति अह्नां केतुरित्यतो विशेषलिङ्गात् ब्रवीति **आदित्यदैवतो द्वितीयः पादः** 15 इति । तदर्थयोजना । यः **चन्द्रमाः नवो नवो भवति जायमानः** यश्च **भागं**

---

3. *a. d.* omit हि before प्रतिपत्, *bi. j. m.* have it. 4. *a. d.* तस्यान्ते for तस्य प्रान्ते. 5. *a. d.* एव for एवं. 5–7. *a. d.* read पूर्वपक्षापरपक्षविभागेन यथाविभागं देवेभ्यो विदधाति and omit the middle portion; *d.* omits भागं after देवेभ्यो. 6. *m.* and *bi.* ms. क omit एकैकशोऽपि पूर्णमास्यमावस्ययोः आगत्य कालौ भिन्दन् हविर्भागं वा. 9–10. *a. d.* पूर्णे चन्द्रमसि उपवासात् पौर्णमासीमेवमदर्शने अमावास्याम् इति ह विज्ञायते etc., *m.* पौर्णमास्यादर्शने. 10. *a. d. m.* य एतत् for य एवं. 14–15. *a. m.* °यैतो इत्यतो°, *bi. j.* °यैतौ–इति । इत्यतो°. 15. *a. d. m.* मैत्रायणीये समाने for मैत्रावरुणीये समाने.

---

9. For the quotation 'पूर्णे चन्द्रमस्युपवसेत्पौर्णमासीमदर्शनेऽमावास्यायाम्' *cf.* Mânav. S'rau. 1. 4. 1. 1.

14. RS. X. 85. 18.

15. समाने हविषि विनियोगः—MS. 2. 2. 7; 4. 12. 2.

**दे॒वेभ्यो॒ विद॑धात्याय॒न्** यश्च **प्रतिरते दी॒र्घमायुः** सोऽस्माकमप्येतत् करोतु। अयं यश्च सूर्यः **अह्नां केतुः**–कर्ता उदयास्तमयाभ्याम् **उषसां च अग्रम् एति** मुख्यत्वमागच्छति तत्कृतत्वादुषसो जन्मनः। तद्रश्मिप्रान्तप्रोत्सार्यमाणे हि तमस्युषसो जायन्तेऽतः स तासां जनयितेति मुख्यः। अतः सोऽस्माकमेतदेवं करोतु इत्येतदाशा-
5 स्महे।

इह कथं चन्द्रमा मध्यस्थानः। ननु सूर्यात् परतः शतसहस्रे योजनानां चन्द्रमसः स्थानमिति पौराणिकाः स्मरन्ति। सत्यं स्मरन्ति। कर्मसंयोगेन तु, द्युस्थानत्वे सति सर्वदेवतानां, विशेषस्थाननियमो विवक्षितः। तदेतदैन्द्रं कर्म रसानुप्रदानं वृत्रवधो बलकृतिरिति। तथा बाहुल्येनैन्द्रेषु दृष्टत्वात्। बलकृतिश्च चन्द्रे दृष्टा। यथा 'व॒धैर्र॑जेत दु॒र्मति॑म्।'
10 प्रसिद्धं चेदम् इन्दुः चन्द्रः इति। रसात्मकत्वाच्चन्द्रमसो रसानुप्रदानसंबन्धः। एवं चेदिन्द्रश्चन्द्रमाः। तस्य मेघवधाधिकारसंबन्धात्कर्तृत्वेन सूर्यादर्वागिति युक्तं मध्यस्थानश्चन्द्रमाः। अपि च। ओषधिसोमश्चन्द्रमा भवति अधियज्ञमापन्नः। स चेन्द्रस्यान्नम्। अन्नं चान्नादस्यात्मसाद्भवति अद्यमानस्यानन्यत्वेनावस्थानात् इत्यतो युक्तं मध्यस्थान इति। यथा च सर्वगतो वायुर्विशेषतो मध्यस्थान इति। एवम्। इत्यतोऽदोषः॥

15 **मृत्युः** (४) इति वक्तव्यम्। स कस्मात्। **मारयतीति सतः**। मध्यमो हि प्राणो मृत्युः। उत्क्रामन् शरीरादितरैः प्राणैः प्राणिनो वियोजयति। एवं मारयति। विज्ञायते हि।

---

2. *a. d. m.* omit केतुः before कर्ता; *a. d.* read वा for च after उषसां. 4. *a. d.* omit अतः before स तासां. 6. *a. d.* इह तु कथं, *bi. j.* इह कथं; *a. d.* शतसहस्रं for °सहस्रे. 7. *a. d.* omit सत्यं स्मरन्ति. 8. *a. d.* विशेषस्थाननियमो, *bi. j.* विशेषतः स्थाननियमो. 9. *d.* reads तथा for यथा and adds इति after दुर्मति. 10. *a. d. m.* चन्द्रमाः for चन्द्रः. 11. *a. d.* मेघवधाधिकारसंबंधाकर्तत्वेन ? *bi. j. m.* तस्य मेघवधाधिकारसंबन्धः कर्तृत्वेन; *d.* मध्यमस्थानः. 13. *d.* अविद्यमानस्यानन्यत्वेनादित्यतो युक्तं मध्यस्थान इति. 14. *bi. j.* वायुर्विशेषतो, *m.* वायुर्विशेषतो. 16. *m.* omits एवं मारयति. 17. *a. d.* omit हि after विज्ञायते.

---

7. इति पौराणिकाः स्मरन्ति—Cf. भूमेर्योजनलक्षे तु सौरं विप्रास्तु मण्डलम्। लक्षे दिवाकराच्चापि मण्डलं शशिनः स्मृतम्॥ Brahmapurâṇa 23. 5.

9. See Nir. X. 42.

15. 'मृत्युः'—Nigh. V. 5. 4.

" प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति "

इति । अथवा । **मृतं च्यावयति** । य एवोपक्षीणायुर्भवति उपक्षीणकर्मा तमेवासावपगमनेन प्रच्यावयति । **शतबलाक्षो मौद्गल्यः** आचार्यो मन्यते । बहुबलानि अक्षाणि इन्द्रियाणि यस्य स शतबलाक्षः बहिन्द्रियः । मुद्गलस्यापत्यं मौद्गल्यः ।

**तस्य** मृत्योः **एषा भवति** ॥ ६ ॥ 5

**" परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् ।**
**चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥ "**

**( परं मृत्यो, ध्रुवं मृत्यो, ध्रुवं परेहि मृत्यो । कथितं तेन मृत्यो । मृतं च्यावयते भवति मृत्यो । मदेर्वा मुदेर्वा । तेषामेषा भवति ॥ ७ ॥**

**" त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति ।** 10
**या मर्त्याय प्रतिधीयमानमित् कृशानोरस्तुरसनामुरुष्यथः ॥" )**

---

2–3. *d.* उपक्षीणकमानामवापसावाच्यापगमनेन च्यावयति etc. 3. *m.* च्यावयतीति । for प्रच्यावयति । of *bi. j.* 8. C. D. R. ध्रुव परेहि for ध्रुवं परेहि. 9. Bi. J. conclude XI. i. 7 with तेषामेषा भवति.

---

1. The quotation is from Bṛh. Up. 4. 4. 2.

6–7. परं मृत्यो—RS. X. 18. 1; AV. 12. 2. 21; VS. 35. 7; ŚB. 13. 8. 3. 4; TB. 3. 7. 14. 5; TA. 3. 15. 2; 6. 7. 3; TAA. 10. 46; APS'. 21. 4. 1; SMB. 1. 1. 15; MG. 2. 18. 2.

8–9. **परं मृत्यो ध्रुवं मृत्यो......तेषामेषा भवति**—This prose passage and the following *ṛik* **त्वेषमित्था** are regarded as spurious by Roth. Durga does not comment on them and it is possible that they were not in the *niruktapâṭha* of Durga. They are given however by all our Mss. Cf. Roth, *op. cit.*, page 147.

10–11. **त्वेषमित्था**—RS. I. 155. 2.

**इति सा निगदव्याख्याता ॥**

**विश्वानरो व्याख्यातः । तस्यैषा भवति ८ ॥**

**परं मृत्यो अनु परेहि**–इति । सङ्कुसुको नाम । तस्यार्षम् । आज्यहोमे पुत्रकामके कर्मणि स्थालीपाकविधाने षडाहुतिः । हे **मृत्यो परम्**-अन्यम् **अनुपरेहि**–अनुपरा-
5 गच्छ त्वं **पन्थाम्**-पन्थानं **यः ते स्वः** । कतमः सः । **इतरो देवयानात्** । यस्मात् देवयाने पथि वयं स्थिताः अनाधृष्याः तव । पितृयानं पन्थानम् अनुपरेहि त्वम् । अपि च । **चक्षुष्मते शृण्वते च ते**-तुभ्यं **ब्रवीमि** । **मा** त्वम् **नः**–अस्माकं **प्रजां**–पुत्रान् पौत्रांश्च **रीरिषः**–हिंसीः । **मा उत वीरान्** अन्यानपि, येऽस्मदाश्रयाः पुरुषास्तानपि मा हिंसीरिति ॥

10 **विश्वानरः** (५) **व्याख्यातः** अभिधानतोऽभिधेयतश्च । **तस्य एषा भवति** ॥ ७, ८ ॥

**"प्र वो महे मन्दमानायान्धसोऽर्चा विश्वानराय विश्वाभुवे ।**
**इन्द्रस्य यस्य सुमखं सहो महि श्रवो नृम्णं च रोदसी सपर्यतः ॥"**

---

2. Bi. J. conclude XI. i. 8 with तस्यैषा भवति. 3. *a* marks verse 6 after इति; *d.* reads the *pratîka* up to पन्थाम् इति; *a. d. m.* आज्यहोमः for आज्यहोमे. 5. *m.* omits पन्थाम्; *a. d.* omit पन्थानं. 7. *a. d. m.* omit ते and नः. 8. *a. d.* omit पौत्रान्, *bi. j. m.* read पुत्रान् पौत्रांश्च. 9. *a.* concludes after हिंसीरिति section 7 as ॥ ७ ॥ and then adds त्वेषमित्थेति । 11. *a.* concludes sect. 8, as ॥ ८ ॥, after भवति.

---

1. इति सा निगदव्याख्याता—This sentence is misplaced. It should come immediately after the *ṛk* परं मृत्यो which is too easy to require any explanation. The stanza त्वेषमित्था, after which this sentence is placed, is inexplicable.

4. षडाहुतिः—See Mânav. Gṛ. 2. 18. 2.

10. 'विश्वानरः'—Nigh. V. 5. 5; व्याख्यातः—Nir. VII. 21.

12-13. RS. X. 50. 1; VS. 33. 23.

**प्रार्चत यूयं स्तुतिं महते, ऽन्धसोऽन्नस्य दात्रे, मन्दमानाय मोदमानाय, स्तूयमानाय शब्दायमानायेति वा, विश्वानराय सर्वं विभूताय। इन्द्रस्य यस्य प्रीतौ सुमहद् बलं, महच्च श्रवणीयं यशो, नृम्णं च बलं नृन्नतम्। द्यावापृथिव्यौ वः परिचरत इति। कमन्यं मध्यमादेवमवक्ष्यत्। तस्यैषापरा भवति ॥ ९ ॥** 5

**प्र वो महे**–इति। वैकुण्ठस्यार्षम्। जगती। महाव्रते विनियोगः। हे स्तोतारः **प्र अर्च प्रार्चत**–प्रोचारयत **स्तुतिम्**, उच्चार्यमाणां चान्यैः प्रपूजयत। कस्मै। **विश्वानराय**। किंलक्षणाय विश्वानराय। **महे–महते अन्धसः–अन्नस्य दात्रे मन्दमानाय**–हृष्यमाणाय। अथवा **शब्दाय्यमानाय** स्तोतृभिः। **विश्वाभुवे**–सर्वप्रकारविभूतियुक्ताय। **इन्द्रस्य** ईश्वरस्य **यस्य** विश्वानरस्य **सुमखं सहः, सुमहद्** 10 **बलं, महि श्रवः महच्च श्रवणीयं यशः** बलमायतिर्महती, **नृम्णं च नॄन्**–मनुष्यान् प्रति यद् **नतं बलं** तच्च यस्य महत्। अपि चैतां **वः** स्तुतिं यस्य विश्वानरस्य प्रोच्यमानां **द्यावापृथिव्यौ परिचरतः**–पूजयतः–अभिनन्दतः। सर्वभूतानामियमभिमता स्तुतिरस्त्वित्यभिप्रायः।

**तस्य एषा अपरा भवति**। सा पुनः किमर्थम्। द्युस्थानोऽपि हि विश्वानरः 15

---

2. C. D. शब्दाय्यमानायेति वा, Bi. J. R. शब्दायमानायेति वा; D. सर्वविभूताय, C. as text. 5. Bi. J. conclude XI. i. 9 with अपरा भवति. 6. *a.* marks verse 7, after इति. 6–7. *a. d. m.* omit प्र अर्च. 7. *a. d. m.* उच्चार्यमाणां, *bi. j.* उच्चार्यमाणं. 9. *a. d. m.* शब्दाय्यमानाय, *bi. j.* शब्दायमानाय. 11. *m.* वलं for बलं; *d. m.* omit श्रवः; *bi.* ms. ग does not read बलमायतिर्महती, *m.* बलमायति°. 12. *m.* यद् विशेषतो नतं for यद् नतं; *a. d.* स्तुतिमस्य, *bi. j.* स्तुति यस्य. 15. *a. d.* द्युस्थानेऽपि, *bi. j.* द्युस्थानोऽपि.

---

1. **यूयं**—Omitted by Bi. mss. क, ख, ग.

2–3. Durga omits **मोदमानाय स्तूयमानाय, सर्वं विभूताय,** and **प्रीतौ.**

4–5. कमन्यं मध्यमादेवमवक्ष्यत्—Durga does not comment on this line in this *Khaṇḍa* but he takes it up in the next section, see page 1046, line 11.

7. विनियोगः—Ait. Âraṇ. 5. 3. 1.

15. द्युस्थानोऽपि हि विश्वानरः समाम्नातः—Nigh. V. 6. 12.

समाम्नातः । अस्यां तु परस्यां व्यपदेशादुत्तमेन ज्योतिषा, विश्वानरस्यासंशयं मध्यमत्व-मित्येवमुदाह्रियते ॥ ९ ॥

**" उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो अश्रेत् ॥ "**

**उदशिश्रियज्ज्योतिरमृतं सर्वजन्यं विश्वानरः सविता देव इति ॥**
5 **धाता सर्वस्य विधाता । तस्यैषा भवति ॥ १० ॥**

**उदु ज्योतिः**–इति । वसिष्ठस्यार्षम् । प्रातरनुवाके विनियोगः । **उत् अश्रेत्** उच्छ्रयति ऊर्ध्वम् उपनयति **विश्वानरः** मध्यमो वायुः । **सविता** । किम् एतत् **ज्योतिः अमृतं** सूर्याख्यम् । सर्वगन्तॄणां वायुपूर्वकत्वाद् गमनस्योपपद्यते । **विश्वजन्यं**–सर्वलोकहितम् ॥

10 एवमत्र विश्वानरो ज्योतिरुच्छ्रयतीति व्यपदेशान्मध्यमो विश्वानरः । एवं चाभिप्रेत्योक्तं '**कमन्यं मध्यमादेवमवक्ष्यत्**' इति ।

ओषस्योऽर्धर्च उत्तरः–

" क्रत्वा देवानामजनिष्ट चक्षुराविरकर्भुवनं विश्वमुषाः "

---

2. *a. d.* omit इति before एवम्. 4. Bi. mss. क, ख, ग read उदाशिश्रयत् for उदशिश्रियत्. 5. Bi. J. conclude XI. i. 10 with तस्यैषा भवति. 6. *a.* marks verse 8, after इति; *m.* omits उत् अश्रेत्. 7. *a. d.* omit सविता. 8. *a. d.* वायुपूर्वत्वाद्. 10. Bi. mss. क, ख read व्यपदेशान्मध्यन्दिनो. 13. *d.* omits from क्रत्वा etc. to इति ( line 1, next page ).

---

3. RS. VII. 76. 1; AV. 7. 17. 2; TS. 3. 3. 11. 3; MS. 4. 12. 6; 195, 12-13; AS'. 6. 14. 16; ŚS. 9. 28. 3; ŚG. 1. 22. 7; AG. 1. 14. 3.

4. उदाशिश्रियत्—This is grammatically a wrong form. The other reading उदाशिश्रयत् is correct.

4. **उदशिश्रियत्** and **सविता देव इति**—not noticed by Durga.

6. विनियोगः—Âśva. S'rau. 4. 14.

11. कमन्यं etc.—Nir. XI. 9, see last page, lines 4-5 and the foot-note thereon.

13. क्रत्वा देवानां—This is the second half of RS. VII. 76. 1, the *ṛik* quoted in this section.

इति भाष्यकारो नाधिजगे। प्रसङ्गतस्तु निर्भ्रमः। यदा तत् ज्योतिः द्युस्थानमुपनीयते विश्वानरेणाथ तदा कृत्वा तत्कर्मणा देवानां रश्मीनां चक्षुः ख्यानं प्रकाशः अजनिष्ट जायते उषाः। सा च पुनः जाता आविरकः भुवनं विश्वं सर्वमाविःकरोति भूतजातमित्यर्थः॥

**धाता** (६) कस्मात्। स हि **सर्वस्य विधाता** स्रष्टा। उदकपूर्वकत्वात् सर्वविधानस्य मध्यमः। **तस्य एषा भवति** ॥ १० ॥ 5

"**धाता द॑दातु दा॒शुषे॒ प्राचीं॑ जी॒वातु॑मक्षि॑ताम्।**
**व॒यं दे॒वस्य॑ धीमहि सु॒म॒तिं स॒त्यध॑र्मणः॥**"

**धाता ददातु दत्तवते प्रवृद्धां जीविकामनुपक्षीणाम्। वयं देवस्य धीमहि सुमतिं, कल्याणीं मतिं सत्यधर्मणः॥**

**विधाता धात्रा व्याख्यातः। तस्यैष निपातो भवति बहुदेवतायामृचि ॥ ११ ॥** 10

**धा॒ता द॑दातु**-इति। वामदेवस्यार्षम्। देविकासु धात्रे हविषि विनियोगः। य एकः कश्चित् धात्रे दत्तवान् हविर्भवति तस्मै **दा॒शुषे** स ददाति। किं ददाति। **प्राचीं॑ जी॒वातु॑मक्षि॑ताम्। प्राचीं-प्रवृद्धां** महतीं **जीवातुं-जीविकाम्**

1. *a. d.* add उद्यं before उपनीयते, *bi. j.* तज्ज्योतिः द्युस्थानमुपनीयते. 2. *a. d.* omit रश्मीनां; *d.* ख्यातं, *bi. j.* ख्यानं. 3. *a. d.* read सा च पुनः, *bi. j.* सा न पुनः. 6. Bi. mss. क, ख, ग read °मक्षितिम्. 8. Bi. mss. क, ख, ग have जीविताम्, Bi. J. जीविकाम्. 11. Bi. J. conclude XI. i. 11 wtih देवतायामृचि. 12. *a.* marks verse 9, after इति; *d. m.* read the *pratîka* up to दाशुष इति. 12-13. *a. d. m.* य एव क° for य एकः क° of *bi. j.* 13. *a. d.* omit किं ददाति.

4. 'धाता'—Nigh. V. 5. 6.

6-7. Cf. AV. VII. 17. 2; MS. 4. 12. 6; TS. 3. 3. 11; AS'. 6. 14. 14. The AV. reads द॑धातु for द॑दातु and वि॒श्वरा॑धसः for स॒त्यध॑र्मणः.

12. विनियोगः—MS. 4. 3. 5.

13. ददाति—Durga reads ददाति for ददातु of the text.

**अक्षिताम्**–**अनुपक्षीणाम्**। यत एवमतो ब्रूमः। **वयं देवस्य** धातुः **धीमहि**–धारयामहे **सुमतिं कल्याणीं मतिं** नित्यं हविर्दानयुक्तां **सत्यधर्मणः** नित्यमवितथार्थकारिणः।

**विधाता** (७) **धात्रा व्याख्यातः**। धातैव विधाता।

5 **तस्य एष निपातो भवति** स्तुतिसाधारण्येन **बहुदेवतायामृचि** ॥ ११ ॥

"सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि।
तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयम् ॥"

**इत्येताभिर्देवताभिरभिप्रसूतः सोमकलशानभक्षयमिति । कलशः कस्मात्। कला अस्मिञ्छेरते मात्राः। कलिश्च कलाश्च किरतेर्विकीर्ण-**
10 **मात्राः** ॥ १२ ॥

**सोमस्य राज्ञः**–इति । विश्वामित्रस्यार्षम्। **सोमस्य राज्ञः धर्मणि**–कर्मणि यत्र सोम इज्यते तस्योपस्तुतौ प्रवर्तमानः तेन **प्रसूतः कलशान्**–**सोमकलशान् अभक्षयम्। वरुणस्य** च एवमेव। **बृहस्पतेः** च **अनुमत्याः** च **शर्मणि**–शरणे–आश्रये वर्तमानः ताभ्याम् **अभिप्रसूतः। तव अहं** हे **मघवन् अद्य**
15 **उपस्तुतौ** युवयोश्च हे **धातः** हे **विधातः** सर्वैर्भवद्भिरनुज्ञातः एतान् **सोमकलशान् अभक्षयम् इति**।

---

1. *a. d. m.* अक्षितां अक्षीणां, *bi. j.* अक्षिताम् अनुपक्षीणां. 2. *a. d.* read सामं for नित्यं after सत्यधर्मणः. 9. Bi. mss. क, ख, ग omit कस्मात्. 9–10. Bi. mss. क, ख, ग, C. and D. read किरतेर्विकीर्णा मात्राः ॥ १२ ॥, and do not mark the pâda. 10. With विकीर्णमात्राः, Bi. J. conclude XI. i. 12. Here ends the *first pâda* of the eleventh adhyâya; Bi. J. read **इत्येकादशाध्यायस्य प्रथमः पादः** ॥ ११,१ ॥. 11. *a.* marks verse 10, after इति. 12. *a. d.* वर्तमानः for प्रवर्तमानः; *a. d. m.* omit कलशान्. 14–15. *a.* तवाहमद्य मघवन्नुपस्तुतौ.

---

1. अनुपक्षीणाम्—Mss. *a. d. m.* of the *Durgavritti* read **अक्षीणाम्** for अनुपक्षीणाम्.

4. 'विधाता'—Nigh. V. 5. 7; व्याख्यातः—Nir. XI. 10, above.

6–7. RS. X. 167. 3.

9. **कस्मात्**—Omitted by Bi. mss. क, ख, ग.

**कलशः कस्मात् । कलाः अस्मिन् शेरते मात्राः । कलाः** अवयवाः सोमसमुदायात् केचित् पृथक्कृताः । ते **शेरते** आसते **अस्मिन्** । कलाशब्दात् पूर्वपदं, शीङः उत्तरपदम् । अथ कलाः कस्मात् । अत आह कलानिर्वचनप्रसङ्गेन ।
**कलिश्च कलाश्च किरतेर्विकीर्णमात्राः ।**

" कॄ विक्षेपे " इत्यस्य । कलौ वचांसि परस्परं विक्षिप्यन्ते । कला अपि विक्षिप्ता 5
भवन्ति कुतश्चित् समुदायादिति ॥ १२ ॥

**अथातो मध्यस्थाना देवगणाः । तेषां मरुतः प्रथमागामिनो भवन्ति । मरुतो मितराविणो वा मितरोचिनो वा, महद् द्रवन्तीति वा । तेषामेषा भवति ॥ १३ ॥**

**अथातो मध्यस्थाना देवगणाः ।** अथातःशब्दावुक्तार्थौ । तयोः पुनरुपन्यासो 10
बहुवचनविशिष्टोऽयमपरोऽधिकारः इति । मध्यस्थाना देवगणा इतीदमपि प्रसिद्धमेव ।

**तेषां मरुतः** (८) **प्रथमागामिनः भवन्ति** । कस्मात् । वायुरेव हि भेदेनापेक्ष्यमाणो मरुदभिधानो बहुवचनभाग् भवति । तेषां प्राथम्यं वायुना व्याख्यातम् । एतावांस्तु विशेषः । बहुसाध्ये कर्मणि बहुधा मध्यमो भवति । पृथक्त्वेन तु विज्ञाता मरुतः शुक्रज्योतिश्च चित्रज्योतिश्चेत्येवमादयः सप्तसप्तका देवगणाः मारुतेषु 15

---

2. *a.* यंते for शेरते. 3. *a.* कलानिर्वचनप्रसङ्गेन, *bi. j. m.* कलानिर्वचनानिर्वचनप्र°. 4. *m.* किरतेर्विकीर्णामात्राः. 6. *a. m.* conclude after समुदायादिति ॥ १२ ॥, as **षोडशाध्यायस्य प्रथमः पादः** ॥ ११,१ ॥; *bi. j.* इति ऋज्वर्थायां निरुक्तवृत्तौ षोडशस्य (एकादशस्य) अध्यायस्य प्रथमः पादः ॥ ११, १ ॥. 7. Bi. J. read **द्वितीयः पादः ॥**, before अथातो मध्य°; R. प्रथमगामिनो, others प्रथमागा°. 8. C. R. महद्रवन्तीति वा. 9. Bi. J. conclude XI. ii. 1 with भवति. 10. *m.* °शब्दा उक्तार्थौ. 13. Bi. ms. ग reads मन्दनापेक्षमाणो for भेदेनापेक्ष्यमाणो of *bi. j.*

---

5. कॄ विक्षेपे—Dhâtup. VI. 128.

8. Durga gives **अमितराविणो** and **अमितरोचिनो** as variants for मितराविणो and मितरोचिनो.

8. Sâyaṇa reads **महद् द्रवन्ति.** Roth's and *m.*'s reading is **महद् रवन्ति.**

12. 'मरुतः'—Nigh. V. 5. 8.

गणेषु सप्तकपालेषु । अग्नौ पुराणे चैत एव प्रसिद्धाः सप्तधा वायुविचारिणः मारीचात् कश्यपाददित्यां ये जज्ञिरे । नैरुक्तसमयस्तु सर्व एव गणा मरुतः । उक्तं च वार्तिके

" मध्यमा वाक् स्त्रियः सर्वाः पुमान् सर्वश्च मध्यमः ।
गणाश्च सर्वे मरुतो गणभेदाः पृथक्कृतेः ॥ "

5 इति ।

अथ **मरुतः** (८) कस्मात् । **मितराविणो वा** । मितं नाम सुश्लिष्टम् । यथा तेषां योग्यं रवितुं तथा रुवन्ति–स्तनयन्ति । अथवा । **मितरोचिनः** । तथैव सुश्लिष्टं रोचन्ते । **अमितराविणः** इति केचिदिच्छन्ति **मरुतोमितराविणः** इति समानसंहितत्वात्-भाष्यस्य तेषाम् । बहुप्रकारं च ते रुवन्तीत्यर्थः । **अमितरोचिनः** 10 इत्यत्राप्येवमेव । **महद् द्रवन्ति इति वा** । इह शब्दमहत्ताभिप्रेता । पूर्वत्र बाहुल्यं बहुप्रकारता च । **तेषाम् एषा भवति** ॥ १३ ॥

**" आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः ।**
**आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः ॥ "**

---

1. *d.* चैन एव, *bi. j.* चैत एव; Bi. mss. क, ख and *d.* सप्तस्कन्धवायुविचारिणः, *bi. j. m.* सप्तधा पुत्रत्वविचारिणः, *a.* सप्तधा वायुविचारिणः. 3. *d.* माध्यमा वाक्. 4. *a. d.* गणभेदात्पृथक् कुरुते ? 6. *d.* अथा for यथा. 9. *d.* मितरोचिनः, *bi. j.* अमितरो°. 10. *a. d.* महद्रुवंतीति वा, *m.* महद्रवन्तीति वा; *m.* इति शब्दमहताभिप्रेता.

---

3–4. The present *Bṛhaddevatá* reads this verse differently from Durga as:—

" मध्यमा वाक् स्त्रियः सर्वाः पुमान्सार्धं च मध्यमः ।
गणाश्च सर्वे मरुतो गुणभेदात्पृथक्पृथक् ॥ "

Bṛh. D. 5. 48.

The reading of one of the mss. of Nirukta, written in the margin, and also of Sâyaṇabhâṣya is :—

" सर्वा स्त्री मध्यमस्थाना पुमान्वायुश्च सर्वगः ।
गणाश्च सर्वे मरुत इति वृद्धानुशासनम् ॥"

6. ' मरुतः '--Nigh. V. 5. 8.

7. **वा**—Durga omits the **वा** after मितरोचिनो.

12–13. RS. I. 88. 1.

**विद्युन्मद्भिर्मरुतः स्वर्कैः । स्वश्चनैरिति वा । स्वर्चनैरिति वा । स्वर्चिभिरिति वा । रथैरायात । ऋष्टिमद्भिरश्वपर्णैरश्वपतनैः । वर्षिष्ठेन च नोऽन्नेन वय इवापतत । सुमायाः कल्याणकर्माणो वा । कल्याणप्रज्ञा वा ॥**

**रुद्रा व्याख्याताः । तेषामेषा भवति ॥ १४ ॥** 5

**आ विद्युन्मद्भिः**–इति । गोतमस्यार्षम् । आस्तारपङ्क्तिः । हे **मरुतः आयात** यूयम् । केन कीदृशेन वा । **विद्युन्मद्भिः** विद्योतनं विद्युत्, विशिष्टदीप्तियुक्तैः । **स्वर्कैः रथेभिः** रंहणैः मेघैः **स्वश्चनैः**–सुगमनैः । यद्वा, **स्वर्चनैः** शोभनमर्चनं येषां तैः । सुष्ठु पूजितैः । अथवा, **स्वर्चिभिः**–अनुपरतविद्युत्संपातैः । **ऋष्टिमद्भिः**–रेषणवद्भिः अनाकालस्य नाशनैः । पृथक्त्वे । विद्युन्मद्भिरिव ऋष्टिमद्भिः–आयुधोपेतैः । अशनपतनैः 10 आप्नुवन्तो ये अन्तरिक्षे मेघाः पतन्ति । पृथक्त्वे । समं समेता अश्वयुग्भिरिति । अपि च । किमेवमेव यथाकथंचिदागच्छतेत्यागमनमात्रे वयमर्थिनः । न इत्युच्यते । **आ वर्षिष्ठया०—०सुमायाः** । हे **सुमायाः**–**सुकर्माणः**–**सुप्रज्ञाः** वा **आपप्तत**–**आपतत**–आगच्छतेत्यर्थः । कथम् । **वर्षिष्ठया इषा**–**अन्नेन** अस्मत्प्रदेयेन संयुक्ताः । किं शनकैः आपतत । न इत्युच्यते । **वयः न वय इव** पक्षिण इव 15 शीघ्रमापतत इत्येतदाशास्महे ।

**रुद्राः** (९) **व्याख्याताः । तेषाम् एषा भवति** ॥ १४ ॥

**“आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन ।**

**इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे ॥”**

---

5. Bi. J. conclude XI. ii. 2, with भवति. 6. *a.* marks verse 11, after इति. 7. *a. d.* omit विद्योतनं विद्युत् विशिष्टदीप्तियुक्तैः, *m.* reads °विशिष्टदीप्तियुक्तैः. 8. *d.* रकौहणैः for रंहणैः. 9. *m.* सुष्टु पूजितैः. 11. *a. d. m.* व्याप्नुवन्तो. 14. *d.* omits आपतत; *a. d.* omit आगच्छतेत्यर्थः; *a.* वर्षया for वर्षिष्ठया, *d.* वर्षष्ठया for वर्षिष्ठया here, as also in the text above.

---

1-4. **इति वा, अश्वपतनः,** and the word **कल्याण** in कल्याणकर्माणो and कल्याणप्रज्ञाः—These are omitted by Durga.

17. ‘रुद्राः’—Nigh. V. 5. 9; व्याख्याताः—Nir. X. 5.

18-19. RS. V. 57. 1.

आगच्छत रुद्रा इन्द्रेण सहजोषणाः सुविताय कर्मणे। इयं वोऽस्मदपि प्रतिकामयते मतिस्तृष्णज इव दिव उत्सा उदन्यवे इति। तृष्णक् तृष्यतेरुदन्युरुदन्यतेः॥

ऋभव उरु भान्तीति वर्तेन भान्तीति वर्तेन भवन्तीति वा। तेषा-
5 मेषा भवति॥ १५॥

आ रुद्रास इन्द्रवन्तः—इति। श्यावाश्वस्यार्षम्। जगती। आग्निमारुते शस्यते। हे रुद्राः आगच्छत यूयम्। इन्द्रवन्तः। "इदि परमैश्वर्ये"। सजोषसः परमैश्वर्येण नित्यमासेविताः। पृथक्त्वपक्षे तूपपद्यत एव इन्द्रेण सह प्रीयमाणाः इति। हिरण्यरथाः उदकहरणार्थे रंहणाः। पृथक्त्वपक्षे तु हिरण्यविकृतरथाः।
10 सुवितायैतस्मै कर्मणे सुष्ठु सगुणाय यथाशास्त्रं क्रियमाणाय प्राप्त्यर्थम्। किमिति आगच्छत। वः—युष्मान् इयम् अस्मन्मतिः प्रतिहर्यते—प्रतिकामयते। युष्मद्विनाकृतमिदं कर्म गुणवदप्येतैरङ्गैर्मा भूद् विगुणमित्येवमर्थं प्रतिहर्यते। अपि च। हविः पूर्वं देवताः प्रेप्सन्ति ब्राह्मणा इवोपनिमन्त्रणम्। ततो यजमानः संस्कृते हविषि तदव्यापत्तये यागकालानतिक्रमणाय चान्नपतिरिवान्ने संस्कृते तदव्यापत्तये भोजनकालानति-
15 क्रमणाय च देवताः प्रतिप्रेप्सति। विज्ञायते हि।

---

1–2. Bi. ms. ख has वो अस्मदभि, Bi. J. वो अस्मदपि, Bi. ms. च and others वोऽस्मदपि. 2. All mss., except ख of Bi., omit इति after उदन्यवे; Bi. J. R. have इति. 5. Bi. J. conclude XI. ii. 3 with भवति. 6. *a.* marks verse 12, after इति. 7. *a.* only reads इंदि for इदि. 9. *a. d.* °हरणार्थ for °हरणार्थे. 10. *a. d.* सुवितायैतस्मिन्कर्मणि सुष्ठ सुग(*d.* गु)णाय, *m.* सुवितायैतस्मै कर्मणे। सुष्ठ सगणाय, *bi.* ms. ग reads सुष्ठु सगणाय. 11. *a. d.* read after आगच्छत,—युष्माभिर्यस्मिन्मतिः प्रतिहर्यते। अपि च etc.; *m.* omits वः. 12. *a. d.* अन्यैः for एतैः.

---

1. सहजोषणाः—Omitted by Durga.

2. इति—Durga, C. and D. omit इति after उदन्यवे.

2–3. तृष्णक् तृष्यतेः। उदन्युः उदन्यतेः—These etymologies are not given by Durga.

7. इदि परमैश्वर्ये—Dhâtup. I. 63.

7. सजोषसः—Cf. 'जुषी प्रीतिसेवनयोः' Dhâtup. 6. 8.

9. हिरण्यरथाः—Yâska takes no notice of this word.

" देवता वै सर्वा आशंसन्ति ग्रहे गृह्यमाणे मह्यं ग्रहं गृह्णाति "

इति । अत इदमुक्तम् **इयं वो अस्मत्प्रति हर्यते मतिः**–इति । कथं पुनः प्रतिहर्यते । **तृष्णजे न तृष्णजे इव** । तृडुपजायते यस्मिन् विशेषतः काले स तृडुपजः कालो घर्मान्तः । तस्मिन् यथा **दिवः उत्साः** द्युलोकात् उत्साः उत्सप्रभवा मेघ्या आपः **उदन्यवे** उदकमिच्छते लोकाय आगच्छन्ति प्रावृषि तथास्मन्मत्या प्रतिहर्यमाणा 5 आगच्छतेति । **उदन्युश्चातक** इति केचित् । तस्य प्रेप्सतो यथा दिव उत्सा मेघा आगच्छन्ति तथास्माकमागच्छतेति एवं तेषां योजना ।

**ऋभवः** (१०) कस्मात् । **उरु भान्ति इति वा** । ते हि बहु भान्ति दीप्यन्ते । उरुशब्दात्पूर्वपदं भातेरुत्तरपदम् । **ऋतेन भान्ति इति वा** । यज्ञेन सत्येन वा भान्ति । तदेवोत्तरपदम् । पूर्वपदे विकल्पः । **ऋतेन भवन्ति इति वा** भवतेर्वोत्तरपदम् । 10 ते हि ऋतेन सत्येन वा भवन्ति यज्ञेन वा भवन्ति । भूत्या देवत्वेन सर्वे युज्यन्ते । **तेषाम् एषा भवति** ॥ १५ ॥

" **विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः ।**
**सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः ॥** "

**कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा । मर्तासः सन्तो** 15 **ऽमृतत्वमानशिरे सौधन्वना ऋभवः । सूरख्याना वा, सूरप्रज्ञा वा । संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः ।**

---

1. *a. d. m.* add ग्रहं after मह्यं, *m.* has गृहं for ग्रहं, *bi. j.* do not have it. 5. *m.* प्रतिहर्षमाणा for प्रतिहर्यमाणा. 11. *a. m.* भूत्या for भूत्वा of *bi. j.* 15. Bi. mss. क, ख, ग read वोल्हारो, Bi. J. R. and C. वोढारो 15-16. Bi. J. सन्तो अमृत°, C. R. Bi. mss. च and others सन्तोऽमृत°. 17. The mss. क, ख, ग of Bi. omit धीतिभिः.

---

1. देवता वै सर्वा—MS. 4. 8. 7.

8. 'ऋभवः'—Nigh. V. 5. 10.

13-14. RS. I. 110. 4.

16. सूरप्रज्ञाः—Durga does not repeat this word in his *vritti*, but he explains it.

17. धीतिभिः—omitted by Bi. mss. क, ख, ग.

ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः । तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति, न मध्यमेन । तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति । आदित्यरश्मयोऽप्यृभव उच्यन्ते ।

5 "अगो॑ह्यस्य॒ यदस॑स्तना गृ॒हे तद॒द्येदमृ॑भवो॒ नानु॑ गच्छथ ॥"

अगोह्य आदित्योऽगूहनीयस्तस्य यदस्वपथ गृहे । यावत्तत्र भवथ न तावदिह भवथेति ॥

अङ्गिरसो व्याख्याताः । तेषामेषा भवति ॥ १६ ॥

वि॒ष्ट्वी शमी॑–इति । कुत्सस्येयमार्षम् । आर्भवे विनियोगः । विष्ट्वी शमी 10 इति द्वे अपि कर्मनामनी । यतोऽजामितायै भाष्यकारः पूर्वं तावत् निराह कृत्वा इति । किं कृत्वा । शमी–कर्माणि । कथम् । तरणित्वेन–क्षिप्रत्वेन–क्षिप्रकारित्वेन सर्वयज्ञसंपद्दर्शनेन । वाघतः–वोढारः यज्ञस्यानुष्ठातारः मेधाविनो वा । न ह्यमेधाविनः संवत्सरेण सकलं कर्म समापयितुं शक्ताः । ते तु संवत्सरेऽखिलं कृत्वा मर्तासः–मनुष्याः सन्तः अमृतत्वम् अमृतभावं देवत्वम् आनशुः–आनशिरे 15 प्राप्तवन्तः । के पुनस्ते । सौधन्वनाः सुधन्वनः पुत्राः ऋभवः । सूरचक्षसः–

---

2. C. प्रथमोत्तमोत्तमाभ्यां. 6. C. आदित्योगूहनीय°, Bi. J. आदित्योऽगूह°; Bi. mss. ख, ग read यदस्वपत. 8. Bi. J. conclude XI. ii. 4 with भवति. 9. *a.* marks verse 13 after इति. 10. *m.* अजामित्वायै for °मितायै. 11. *a. d. m.* omit क्षिप्रत्वेन. 12. Bi. ms. ग does not read वा after मेधाविनो. 14. *a. d. m.* मर्ताः for मर्तासः; *m.* omits मर्तासः; *m.* अमृतत्वभावं for अमृतभावं; *a. d. m.* omit आनशुः. 15. *m.* सुधन्वः पुत्राः.

---

1. सुधन्वन आङ्गिरसस्य—Ṛgveda does not mention that Sudhanvâ belonged to the *aṅgiras* family.

5. अगोह्यस्य etc.—RS. I. 161. 11 ( the second half ).

6. यदस्वपथ गृहे—omitted by Durga.

9. विनियोगः—Âśva. S'rau. 7. 7.

10. कर्मनामनी—See Nigh. II. 1.

**सूरख्यानाः**–सूर्यविख्याताः–सूर्यसमानदर्शनाः सूर्यसमानप्रज्ञाः **वा** । यत ईदृशास्ते अतः **संवत्सरे** संवत्सरावयवे वसन्तादिकाले **समपृच्यन्त**–समयुज्यन्त **धीतिभिः**–**कर्मभिः** । अतश्च देवा अभवन्निति ।

**ऋभुः विभ्वा वाजः इति सुधन्वनः आङ्गिरसस्य त्रयः पुत्राः बभूवुः** इति । आर्भवाणां मन्त्राणां स्वभावोपप्रदर्शनार्थमाह । **तेषां प्रथमोत्तमाभ्याम्** ऋभुणा 5 वाजेन च **बहुवन्निगमाः भवन्ति । न मध्यमेन** विभ्वा । स हि आर्भवाणां मन्त्राणां स्वभावः । **तदेतत्** उच्यते **ऋभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति** । तद्यथा

" इदं तृतीयं सवनं कवीनामृतेन ये चमसमैरयन्त "

–इति । 10

**आदित्यरश्मयोऽप्यृभव उच्यन्ते**–इति । अभिधेयव्यभिचारमुपप्रदर्शयति । क्व च पुनस्ते उच्यन्ते । यतः पठति । **अगोह्यस्य यदसस्तना** इति ।

" उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वपः स्वपस्यया नरः ॥ "

इति । दीर्घतमस आर्षम् । जगती । उद्वत्सु ये उन्नताः प्रदेशाः भुवः अद्भिरनाक्रान्ताः तेषु अस्मै लोकाय उपकरिष्यन्तो यूयम् ऋभवः अकृणोतन प्रतिसंवत्सरं कुरुध्वे 15 तृणकुशादि वर्षेणादित्यमण्डलादौ वर्तमानाः । निवत्सु पुनर्निम्नेषु भुवः प्रदेशेषु अपः उदकं कुरुध्वे स्वपस्यया लोकानुग्रहप्रवृत्तया वर्षक्रियया हे नरः । किंच । **अगोह्यस्य** । योऽयम् **अगोह्यः आदित्यः अगूहनीयः** न गूहितुं शक्यः केनचिदपि

1. *a. d. m.* omit सूरख्यानाः; *a. d.* read सूर्यविख्यानाः for सूर्यविख्याताः; *a. d.* सूर्यसमानसंज्ञा वा for सूर्यसमानप्रज्ञा वा. 2. *a. d.* omit संवत्सरावयवे वसंतादिकाले; *a. d.* समयुंज्यंताम्. 2–4. *m.* omits the words from धीतिभिः to त्रयः (inclusive). 5. *m.* आर्भवानां. 9. *a. d.* read ऐरयंति for ऐरयंत and omit इति after it. 12. *a.* marks verse 14 after पठति; *a. d.* omit अगोह्यस्य यदसस्तना इति । 13. *d. m.* read the *pratīka* up to अकृणोतनेति. 16. *m.* तृणंकुशादित्यमण्डलादावर्तमानाः, *a. d.* °आदित्यमंडलादावर्तमानाः.

9. The quotation is from TS. 3. 19.

13. उद्वत्स्वस्मा etc.—This is the first half of RS. I. 161. 11, quoted above in the text ( page 1054, line 5 ).

**यस्य यदसस्तना गृहे** यावदस्य मण्डले सुप्ता इव निगूढा भवथ । **तदद्येदमृभवो नानुगच्छथ** । हे ऋभवः **यावत् तत्र** निगूढा **भवथ** रात्रौ **न तावदिह भवथ** । ततश्च युष्मद्विनाभावे निरालोकोऽयं लोकः संपद्यते । एतद् वो माहाभाग्य-महमनुकीर्तयामि । ते यूयमिदं नामास्माकं कुरुतेति ॥

5 **अङ्गिरसः** (११) **व्याख्याताः** एकवचनेन 'अङ्गारेष्वङ्गिराः'-इति । **तेषाम् एषा भवति** ॥ १६ ॥

**"विरूपास इदृषयस्त इद्गम्भीरवेपसः ।**
**ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे ॥"**

**बहुरूपा ऋषयः । ते गम्भीरकर्माणो वा गम्भीरप्रज्ञा वा । तेऽङ्गि-**
10 **रसः पुत्राः । तेऽग्नेरधिजज्ञिर इत्यग्निजन्म ॥**

**पितरो व्याख्याताः । तेषामेषा भवति ॥ १७ ॥**

**विरूपासः**-इति । नाभानेदिष्ठस्यार्षम् । अनुष्टुप् । पाष्ठिके षष्ठेऽहनि विनियोगः । **विरूपाः**-नानारूपाः । के पुनस्ते इति । **ऋषयः** अवितथस्य ब्रह्मणो द्रष्टारः । न केवलं पश्यन्ति, अपि च **गम्भीरवेपसः** अप्रमेयकर्माणः अप्रमेयबुद्धयो वा ।
15 ऋष्यनेकत्वे कतमास्ते इति । **ते अङ्गिरसः सूनवः** । येऽङ्गिरसः सूनवस्त एते

1. *a. d. m.* अस्य यदसस्तना गृहे, *bi. j.* यस्य य°; *d.* निरूढा भवथ for निगूढा भवथ. 2. *a.* only reads अनुगच्छथः; *d.* adds भवथ after यावत्तत्र; *d.* निरूढा for निगूढा. 3. *m.* भवथा for भवथ; *d.* महाभाग्यं. 4. *d.* omits अहं. 9-10. Bi. ms. च and others have तेऽङ्गिरसः पुत्रास्तेऽग्ने°; Bi. J. ते अङ्गिरसः पुत्रास्ते अग्ने°. 11. Bi. J. conclude XI. ii. 5 with भवति. 12. *a.* marks verse 15 after इति; *m.* नाभावेदिष्ठस्य, *bi. j.* नाभाने°; *m.* पाष्ठिके. 15. *a. d.* omit ते after कतमाः; *a. d.* omit ते before अङ्गिरसः.

5. 'अङ्गिरसः'—Nigh. V. 5. 11; व्याख्याताः—Nir. III. 17.

7-8. RS. X. 62. 5.

9. Durga reads **नानारूपाः** for बहुरूपाः, **अप्रमेयकर्माणः** for गम्भीरकर्माणः, and **अप्रमेयबुद्धयः** for गम्भीरप्रज्ञाः.

10. **इत्यग्निजन्म**—Durga omits this.

12. विनियोगः—Âśva. Śrau. 8. 1.

विवक्षिताः । कदा पुनस्ते अङ्गिरसो जज्ञिरे । अत आह, **ते अग्नेः परिजज्ञिरे** इति । अग्नित्वमापन्नस्याङ्गिरसोऽधि सकाशात् ये जज्ञिरे ते एते विरूपाः गम्भीरवेपसश्च ममेदं नाम कुर्वन्त्विति ॥

**पितरः** (१२) **व्याख्याताः** 'द्यौर्मे पिता'-इत्यत्र । **तेषाम् एषा भवति** ॥ १७ ॥ 5

**"उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।**
**असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥"**

**उदीरतामवर उदीरतां पर उदीरतां मध्यमाः पितरः सोम्याः, सोमसंपादिनस्तेऽसुं ये प्राणमन्वीयुः । अवृका अनमित्राः, सत्यज्ञा वा यज्ञज्ञा वा । ते न आगच्छन्तु पितरो ह्वानेषु ।** 10

**माध्यमिको यम इत्याहुस्तस्मान्माध्यमिकान् पितॄन्मन्यन्ते ।**

**अङ्गिरसो व्याख्याताः । पितरो व्याख्याताः । भृगवो व्याख्याताः । अथर्वाणोऽथनवन्तः । थर्वतिश्चरतिकर्मा, तत्प्रतिषेधः । तेषामेषा साधारणा भवति ॥ १८ ॥**

---

1. *a. d.* यत आह. 2. *a.* गभीरवेपसश्च, *m.* गंभीरवेयसश्च. 3. *a. d.* कुरुध्वं for कुर्वन्तु. 7. Bi. mss. क, ख, ग read असुं य इयु°. 9. Bi. mss. ख, ग have प्राणमुन्नीयुरवृका. 11. Bi. mss. क, ख, ग read माध्यमको; Bi. mss. क, ख, ग—माध्यमकान्. 14. Bi. J. conclude XI. ii. 6 with साधारणा भवति.

---

1. ते अग्नेः परिजज्ञिरे—Cf. येऽङ्गारा आसन् तेऽङ्गिरसोऽभवन्—AB. 3. 3. 10.
4. 'पितरः'—Nigh. V. 5. 12; व्याख्याताः—Nir. IV. 21.
6-7. RS. X. 15. 1; AV. 18. 1. 44; VS. 19. 49.
9-10. **प्राणमन्वीयुः** and **सत्यज्ञा वा यज्ञज्ञा वा**—omitted by Durga.
10. ह्वानेषु—Durga reads **आह्वानेषु** for ह्वानेषु.
12-13. भृगवो व्याख्याताः । अथर्वाणोऽथनवन्तः—In Nighaṇṭu the word *atharvāṇas* comes before *bhṛgavas*. The order there is:—अङ्गिरसः, पितरः, अथर्वाणः, भृगवः.

**उदीरतामवरे**–इति । शङ्खस्यार्षम् । पितृमेधे विनियोगः । ये तावत् **अवरे पितरः** पृथिवीमाश्रिताः ते तावत् **उदीरताम्** ऊर्ध्वं गच्छन्तु । अथ पुनर्ये **परासः**–**परे** द्युलोकमाश्रिताः तेऽप्युदीरताम् । तेषामप्यप्रच्युतिरस्तु । मुच्यन्तां वा तदधिकारप्रक्षये । **उन्मध्यमाः पितरो** येऽपि **मध्यमाः**–मध्यस्थानाश्रयाः तेऽप्यु**दीरताम्**
5 उत्तमं लोकमाश्रयन्ताम् । **सोम्यासः**–**सोमसंपादिनः** कर्मण्यङ्गभावमुपगच्छन्तो ये सोमं संपादयन्ति । किंप्रकाराः । **असुं य ईयुः** प्राणमात्रमूर्तयः अस्थूलविग्रहाः । **अवृकाः**–**अनमित्राः** परं साम्यमुपगताः । **ऋतज्ञाः** यथावत् सत्यवेदितारः यज्ञस्य वा । य एवमादिगुणयुक्ताः **पितरः ते नः**–अस्माकम् **अवन्तु** नित्यम् **आगच्छन्तु हवेषु**–**आह्वानेषु** इत्येतदाशास्महे ।

10 **माध्यमिको यम इत्याहुः** नैरुक्ताः । **तस्मात् पितॄन् माध्यमिकान् मन्यन्ते** स हि तेषां राजेति । अत उत्तरे **अथर्वाणः** (१३), **भृगवः** (१४) इत्येते पदे समाम्नाते । न चैतयोः समस्तयोः प्रत्येकं वा स्तुतिरस्ति । अस्ति तु पित्रङ्गिरोभृगुभिः साधारणस्तुतिः । यतस्तादृङ्निर्वचनाय प्रसङ्क्ष्यमाणानभिप्रेत्याथर्वशब्दनिर्वचनप्रसङ्गात् ब्रवीति । **अङ्गिरसः व्याख्याताः** येऽस्यामृचि वक्ष्यमाणाः । **पितरः**
15 **व्याख्याताः । भृगवः व्याख्याताः ।**

**अथर्वाणः** कस्मात् । ते ह्येते **अथनवन्तः** । किमिदमथनं येन ते तद्वन्तः ।

---

1. *a.* marks verse 16 after इति; *d.* शषस्य for शंखस्य. 2. *a. d. m.* omit परासः. 4. *d.* पितरोपि मध्यमाः. 5. *d.* आश्रियंतां, *m.* आश्रयंताम्. 7. *d.* सौम्यं for साम्यं; *a. d.* सत्यस्य वेदितारः. 8. *a. d. m.* omit नः. 10. *m.* यममित्याहुः. 11. *a. d.* omit स हि; *a.* only reads अथ for अतः. 12. न चैतयोः; *a. d.* अस्ति पितुभृग्वङ्गिरोभिः साधारणा स्तुतिः; *bi. j.* अस्ति तु पित्राङ्गि° साधारणस्तुतिः. 13. *a.* only reads यतस्त ईदृङ्निर्वचनाय प्रसंक्षमाणामभिप्रेत्य etc., *bi. j. m.* यतस्तदृङ्निर्वचनाय प्रसङ्क्षमाणानभि°. 14–16. *a. d.* वक्ष्यमाणाः पितरो व्याख्याताः अथर्वाणः कस्मात् etc., *m.* वक्ष्यमाणाः यां पि°, *bi. j.* वक्ष्यमाणायाम्;—पितरः व्याख्याताः भृगवः व्याख्याताः ॥ अथर्वाणः कस्मात्. 15. *m.* omits भृगवः व्याख्याताः.

---

1. विनियोगः—Âśva. S'rau. 2. 19.

11. 'अथर्वाणः'—Nigh. V. 5. 13; 'भृगवः'—Nigh. V. 5. 14.

14–15. अङ्गिरसः व्याख्याताः—Nir. III. 17; पितरः व्याख्याताः—Nir. IV. 21; भृगवः व्याख्याताः—Nir. III. 17.

अत आह । **थर्वतिः चरतिकर्मा** गच्छत्यर्थः । ततः किम् । **तत्प्रतिषेधः ।** पुरस्तादकारः । न थर्वन्ति इति अथर्वाणः । स्थिरप्रकृतयो हि ते । **तेषाम् एषा साधारणा भवति** अङ्गिरःप्रभृतीनाम् ॥ १८ ॥

"अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।

तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥" 5

**अङ्गिरसो नः पितरो नवगतयो, नवनीतगतयो वा । अथर्वाणो भृगवः सोम्याः, सोमसंपादिनः । तेषां वयं सुमतौ कल्याण्यां मतौ यज्ञियानाम् । अपि चैषां भद्रे भन्दनीये भाजनवति वा कल्याणे मनसि स्यामेति । माध्यमिको देवगण इति नैरुक्ताः । पितर इत्याख्यानम् । अथाप्यृषयः स्तूयन्ते ॥ १९ ॥** 10

**अङ्गिरसो नः पितरः**–इति । यमस्यार्षम् । त्रिष्टुप् । **अङ्गिरसः नः**–अस्माकं **सोम्यासः–सोमसंपादिनः** नित्यं **सुमतौ कल्याण्यां मतौ** वर्तन्ते । **पितरः** च **नवग्वाः–नवगतयः** पितृयज्ञानागन्तुं येषां प्रतिमासं नवा गतिर्भवति । **नवनीतगतयो वा ।** नवनीतं प्रति येषां मनसो गतिरिदमस्माकमिति ते नवग्वाः । विज्ञायते हि ।

"स्वयं विलीनं पितृणाम्" 15

–इति । पितरश्चैवंलक्षणाः **अथर्वाणः** च **भृगवः** च य एते **सोमसंपादिनः ।** अस्माकं **कल्याण्यां मतौ वयम् अपि तेषां सुमतौ कल्याण्यां मतौ** उपकारप्रवृत्तायां **यज्ञियानां**–यज्ञसंपादिनां **स्याम** । **अपि च** । **तेषां भद्रे–भन्दनीये–**

---

1. *d. m.* यत आह; *m.* आथर्वतिः, *bi. j.* थर्वतिः; *d.* गच्छतीत्यर्थः. 7-8. Bi. mss. क, ख, ग have कल्याण्यां मतौ सुमतौ यज्ञियानाम्. 9. Bi. mss. क, ख, ग read माध्यमको देवगणः. 10. Bi. J. conclude XI. ii. 7, with स्तूयन्ते. 11. *a.* marks verse 17, after इति. 11-12. *a. d. m.* omit नः, सोम्यासः and सुमतौ. 14. *d.* मनसा, *bi. j.* मनसो. 15. *d.* बलीनं, *bi. j.* विलीनं. 16. *d.* पितरस्यैवंल°.

---

4-5. RS. X. 14. 6; AV. 18. 1. 58.

15. The quotation is from MS. 3. 6. 2.

18. Durga reads अपि च तेषाम् for अपि चैषां.

स्तुत्ये **सौमनसे कल्याणे मनसि स्याम । भाजनवति वा ।** येन मनसा भाजयन्ति अभिमतैरर्थैः स्तोतॄंस्तस्मिन् शोभने च संकल्पे शोभने वा अध्यवसाये स्याम इत्यर्थः ।

**माध्यमिको देवगणः इति नैरुक्ताः ।** ऋभवः अङ्गिरसः भृगवः अथर्वाणः
5 इति स्तुत्युपपत्तेः देवतापदमध्ये समाम्नानादेकैक एषां देवगण इति नैरुक्ता मन्यन्ते । **पितर इत्याख्यानम् ।** को विशेषः । अग्न्यादिदेवताविपर्ययस्तद्धर्मदेवताप्रकार एवायं य एते पितरो नाम । त एव ऋभुसनत्कुमारादयः इत्याख्यानविदः स्मरन्ति । असावपि मन्त्राणां विषय इत्युपेक्ष्यः । अपि च । देवगणा एते उत पितरः इति । कुतो विचारः । ऋभवः अङ्गिरसः भृगवः इत्येवमादीनामभिधानानामृषिषु प्रसिद्धेः ।
10 **अथापि** इदमपरं कारणमृषय एवैत इति । यतोऽन्येऽपि **ऋषयः स्तूयन्ते** । तद्यथा । वसिष्ठाः ॥ १९ ॥

**" सूर्यस्येव वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गंभीरः ।**
**वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवे वः ॥ "**

**इति यथा ॥**

15 **आस्या आप्नोतेः । तेषामेष निपातो भवत्यैन्द्र्यामृचि ॥ २० ॥**

**सूर्यस्येव वक्षथः**–इति । इन्द्रस्यार्षम् । **सूर्यस्येव ज्योतिः** यथा सूर्यस्य दीप्तिरवभासिकार्थानाम् एवम् **एषाम्** वसिष्ठानां **वक्षथः** वचनस्य दीप्तिः अधिदेवादि-

5. *bi. j. m.* °देकैकश एषां देवगण इति, *a. d.* °देवकैक एषां देवगणा इति. 6–7. *bi. j. m.* अग्न्यादिदेवतापदविपर्ययस्तद्धर्म°, *bi.* ms. क reads अग्न्यादिदेवताविपर्ययधर्मदेवताप्रकार एवायं. 10. *a. m.* add हि after ऋषयः. 14–15. Bi. ms. ग—इति । यथास्या. 15. Bi. J. conclude XI. ii. 8 with ऋचि. 16. *a.* marks verse 18, after इति; *a. d. m.* omit सूर्यस्येव ज्योतिः. 17. *a. d.* omit एवं; *a. d.* अधिदैवादि°.

12–13. RS. VII. 33. 8. Yâska writes no comment ( bhâṣya ) on this ṛik.

16. इन्द्रस्यार्षम्—The *ṛṣi* of this Sûkta is not Indra but Vasiṣṭha. Cf. Sâyaṇa on this:—"आदितो नवानां वसिष्ठ ऋषिः । वसिष्ठपुत्राणां स्तूयमानत्वात् त एव देवताः ".

गतानामर्थानामसंदेहेनावभासिका वाच्येऽर्थे । अपि च । न केवलमेषामसंदिग्धार्थानि वचांसि गम्भीराणि च महार्थवन्ति गम्भीरार्थतया दुरवगाहानि । यत आह । **समुद्रस्येव महिमा गंभीरः** । यथा उदकमपरिमेयं समुद्रे एवमपरिमेयार्थानि । सत्यपि च महार्थत्वे नैते विलम्बितस्तुतयः । किं तर्हि । **वातस्येव प्रजवः** । प्रकृष्टो जव आशुप्रतिपत्तिः । तुष्टूषतां वर्णपदवाक्येषु निर्मलमनोवाग्वृत्ती शब्दार्थावसङ्गेन प्रतिपद्येते । 5
अपि चैवमतिमहानुभावा एते नैतेषामन्यस्तोता वचनपदवीमनुगन्तुं शक्तः । यतो ब्रवीमि । **नान्येन** केनचित् स्तोत्रा हे **वसिष्ठाः** । प्रत्यक्षीकृत्योत्तरेण पादेन ब्रवीति । एषः **स्तोमः** इयं स्तुतिः भावत्की असंदिग्धार्था गम्भीरा अविलम्बिता च **न अन्येन अन्वेतवे** नानुगन्तुमन्येन शक्या । क एनामनुकरिष्यतीति स्तुतिपरितुष्ट इन्द्रो वसिष्ठानस्तौत् । 10

एवमृषयोऽपि स्तूयन्ते इति प्रदर्शयति अयमप्यस्तीति मन्त्राणां विषय इति ।

अपरे पुनः । **सूर्यस्येव वक्षथः** सूर्यतेजःसमानदीप्तोरस एते वसिष्ठाः तेजस्विनः समुद्रोपमगम्भीरस्वभावाश्च शीघ्रगतयश्च सर्वत्राप्रतिहतजवाः । नैतेषामन्येन गतिरनुगन्तुं शक्येति वर्णयन्ति ॥

**आप्त्याः** (१५) अपीन्द्रसहचारिण ऋषयः एकतद्वितत्रिताः । 15

"ते इन्द्रेण सह चेरुः"

इति विज्ञायते । ऋभ्वादयोऽप्येतस्मादेव दर्शनाद्द्युपिपक्षे मध्यस्थानाः । ते कस्मात् । **आप्नोतेः** । आप्नुवन्ति हि ते स्तुतिभिः स्तुत्यान् ।

**तेषाम् एषः निपातः भवति ऐन्द्र्याम् ऋचि** । इन्द्रो यस्यां स्तूयते तस्यामृचि ॥ २० ॥ 20

**"स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम् ।**
**आ दर्षते शवसा सप्त दानून् प्र साक्षते प्रतिमानानि भूरि ॥"**

---

1. *d.* °संदेहेनाभासिका. 3. *m.* यथोदकमपरिमेयार्थानि सत्य°. 5. *d.* निर्मलोमनोवाग्वृत्ति, *bi. j.* निर्मलमनोवा°. 6. *a. d.* omit यतो. 11. *a. d. m.* and *bi.* ms. क read इति प्रदर्शयति अयमप्यस्तीति (*a.* °स्ति मं°) मंत्राणां, *bi. j.* प्रदर्शनमप्यस्तीति मन्त्राणां. 17. *a. d.* मध्यमस्थानाः.

---

15. आप्त्याः—Nigh. V. 5. 15.
16. The quotation is from ŚB. 1. 2. 3. 2.
21-22. RS. X. 120. 6; AV. 20. 107. 9; 5. 2. 7.

**स्तोतव्यं बहुरूपमुरुभूतमीश्वरतममाप्तव्यमाप्तव्यानाम् । आदृणाति यः शवसा बलेन सप्त दातॄनिति वा । सप्त दानवानिति वा । प्रसाक्षते प्रतिमानानि बहूनि । साक्षतिराप्नोतिकर्मा ॥ २१ ॥**

**स्तुषेय्यं पुरुवर्पसम्**–इति । बृहद्दिवस्यार्षम् । महाव्रते विनियोगः । **स्तुषेय्यं- 5 स्तोतव्यम्** अहं स्तौमि इन्द्रम् । किंलक्षणम् । **पुरुवर्पसं–बहुरूपम् ऋभ्वम्– उरुभूतम् इनतमम्–ईश्वरतमम् आप्यम् आप्यानाम्** ऋषीणां स्तुतिभिः अतिशयेन **आप्तव्यम् । आदर्षते–आदृणाति यः शवसा–बलेन** आदारयति । किम् । **सप्त दानून् । सप्त दातॄन्** मेघान् । असुरान् वा **दानवान्** । नमुचिप्रभृतीन् पृथक्त्वपक्षे । केन । **शवसा**–बलेन आदारयति । **प्रसाक्षते** च य आप्नोति– 10 अभिभवति च **प्रतिमानानि भूरि–बहूनि** अपि । तदुक्तम् । 'यैरेनं प्रतिमिमते नैनं तानि दभ्नुवन्ति' इति ।

"न त्वा केता आ दभ्नुवन्ति भूर्णयः"

इति च । **साक्षतिः आप्नोतिकर्मा** ॥ २१ ॥

**अथातो मध्यस्थानाः स्त्रियः । तासामदितिः प्रथमागामिनी भवति । 15 अदितिर्व्याख्याता । तस्या एषा भवति ॥ २२ ॥**

---

3. Bi. J. conclude XI. ii. 9, as साक्षतिराप्नोतिकर्मा ॥ ९ (२१) ॥ **इति एकादशाध्यायस्य द्वितीयः पादः ॥ ११, २ ॥**; C. D. as usual mark the section ( khaṇḍa ) only as ॥ २१ ॥, and do not mark the *pâda*. 4. *a.* marks verse 19, after इति. 6. *d.* आप्यां for आप्यं. 8. *a.* omits सप्त दानून्, *d.* reads सप्तदा उदकं instead; *a. d.* omit वा after असुरान्. 9. *a. d. m.* पृथक्पक्षे; *a. d. m.* omit आदारयति. 12–13. *a. d. m.* omit from न त्वा etc. to इति च ( inclusive ). 13. After साक्षतिः आप्नोतिकर्मा ॥ ९ (२१) ॥, *bi. j.* read as इति ऋज्वर्थायां निरुक्तवृत्तौ **षोडशस्य** (एकादशस्य) **अध्यायस्य द्वितीयः पादः ॥ ११, २ ॥**; *a. d.* षोडशस्य द्वितियः पादः, *m.* षोडशाध्यायस्य द्वि°. 14. *a. d. bi. j.* read **तृतीयः पादः ।** before अथातो; C. R. मध्यस्थाना स्त्रियः, Bi. J. and others मध्यस्थानाः स्त्रियः. 15. Bi. J. conclude XI. iii. 1 with भवति.

---

1. आप्तव्यानाम् is omitted by Durga.
4. महाव्रते विनियोगः—Ait. Br. 5. 1. 6.
10–11. यैरेनं etc.—Nir. V. 12.
12. न त्वा केता—See RS. I. 55. 7.

**अथ अतः मध्यस्थानाः स्त्रियः** । बहुवचनविशिष्टस्य मध्यमस्य गणशोऽवस्थितस्य विभवो व्याख्यातः । लिङ्गविशिष्टस्येदानीं यथासमाम्नायमेव व्याख्यातव्यः । तदर्थं पुनर्विशेषतोऽधिकारवचनम् **अथातः** इति । मध्यमासां स्थानमिति **मध्यस्थानाः** इति । काः पुनः ताः । **स्त्रियः** इति । वक्ष्यन्ते इति शेषः । **तासाम् अदितिः** (१६) **प्रथमागामिनी भवति** । सा कस्मात् । उक्तं हि 'अदीना देवमाता' इति । **तस्या एषा भवति** ॥ २२ ॥　5

**"दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवाससि ।**
**अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु ॥"**

**दक्षस्य वादिते जन्मनि व्रते कर्मणि राजानौ मित्रावरुणौ परिचरसि । विवासतिः परिचर्यायाम् ।**　10

**"हविष्माँ आ विवासति"**

**इति । आशास्तेर्वा । अतूर्तपन्था अत्वरमाणपन्थाः । बहुरथोऽर्यमादित्योऽरीन्नियच्छति । सप्तहोता, सप्तास्मै रश्मयो रसानभिसंनामयन्ति । सप्तैनमृषयः स्तुवन्तीति वा । विषमरूपेषु जन्मसु कर्मसूदयेषु ।**

2. *d.* व्याख्यातः for व्याख्याताः of *bi. j.*; *d.* यथासमाम्नानायमेव etc. 3. *a.* only reads अधिकारवचने अथातः इति. 4. *d.* स्त्रियत इति for स्त्रिय इति. 9. Bi. mss. क, ख, ग have जन्मनि कर्मणि व्रते. 11. R. and Bi. ms. ङ read हविष्मानाविवासति. 12-13. Bi. J. बहुरथो अर्यमादित्यो, Bi. ms. च—बहुरथोऽर्यमादित्यो. 14. R. ऋषय स्तुवन्तीति.

5. 'अदिति':—Nigh. V. 5. 16.

5-6. उक्तं हि 'अदीना देवमाता'—Nir. IV. 22.

7-8. RS. X. 64. 5.

11. हविष्माँ आविवासति—This is a part of RS. I. 12. 9; SV. 2. 196; VS. 6. 23 which is quoted below (page 1065, lines 9-10) by Durga.

12. **आशास्तेर्वा**—आशास्तेः should have been आशास्तौ to correspond with परिचर्यायाम् going before. आशास्तेर्वा appears to be a later insertion.

9-14. The following words in this section are not repeated by Durga in his *vritti*: **व्रते कर्मणि** (line 9), **आशास्तेर्वा** (12), **बहुरथः** (12), **अरीन्नियच्छति** (13), and **जन्मसु कर्मसूदयेषु** (14).

**आदित्यो दक्ष इत्याहुरादित्यमध्ये च स्तुतः । अदितिर्दाक्षायणी ।**

**" अदि॑ते॒र्दक्षो॑ अजायत॒ दक्षा॒द्वदि॑तिः॒ परि॑ "**

**इति च । तत्कथमुपपद्येत समानजन्मानौ स्यातामिति । अपि वा देवधर्मेणेतरेतरजन्मानौ स्यातामितरेतरप्रकृती । अग्निरप्यदितिरु-**
5 **च्यते । तस्यैषा भवति ॥ २३ ॥**

**दक्ष॑स्य वादि॒ते**–इति । गयस्यार्षम् । वैश्वदेवे शस्यते । अहोरात्रे मित्रावरुणौ । तयो-र्या सन्धिवेला तस्यां प्रथममवश्यायरसानुप्रदानसंबन्धात्तां मध्यमामदितिमभिप्रेत्योच्यते । **दक्ष॑स्य वादि॒ते** इति । **वा**–शब्दः किमर्थः । यदा दक्ष आदित्यः त्वत्तो जातः, त्वं वा आदित्यात् । सन्धिवेलानन्तरं ह्यादित्यस्योदयो जन्म । तदेवास्य व्रतं कर्म । तदु-
10 क्तम् । ' कर्मजन्मानः ' इति । अथ तदेवं **दक्षस्य जन्मनि**–उदये चार्धवर्तिन्यादित्ये यतो वा लब्धात्मिका त्वम् अप्यहोरात्रे उभे **विवाससि**–परिचरसि सर्वतो व्याप्नोषि । अर्धेनाह्व्याप्नोषि मित्रम्, अर्धेन च रात्रिं वरुणम् । **राजानौ** सर्वलोकेश्वरौ स्वाधि-कारयुक्तास्वितिकर्तव्यतासु तदधीनत्वात् प्रवृत्तेरिति । किंलक्षणो यो दक्षः तस्य जन्मनि इति । यत आह । **अतूर्तपन्थाः** योऽयमादित्यः **अत्वरमाणपन्थाः** अत्वरमाणः
15 पथि वर्तते नियतगतिः प्रतिमुहूर्तं प्रत्यहं च । **पुरुरथः**–बहुरंहणः **अर्यमा** अरीणां तमसां नियन्ता । **सप्तहोता । सप्तास्मै रश्मयः रसानभिसंनामयन्ति ।** तदस्य सप्तहोतृत्वम् । **सप्तैनमृषय** आह्वयन्ति नमन्ति–**स्तुवन्ति** वसिष्ठाद्याः तद्वास्य सप्तहोतृत्वम् । **विषुरूपेषु जन्मसु । विषमरूपेषु ।** अन्यस्मिंश्चान्यस्मिंश्च नभसः प्रदेशे अयमुदेति मण्डलान्तरं मण्डलान्तरं हित्वा दक्षिणोत्तरायणयोः । तदस्य विषम-

---

1. D. °रादित्यमध्यमे च, C. as text. 5. Bi. J. conclude XI. iii. 2 with भवति. 6. *a.* marks verse 20, after इति. 7. *a. d.* तस्याः प्रथमस्यायरसा°. 18. *a. d.* विषमरूपेषु for विषुरूपेषु. 19. *a. d. m.* omit one मण्डलान्तरं.

---

2. अदि॑ते॒र्दक्षो॑—RS. X. 72. 4, quoted below, page 1066, lines 3-4.

4. इतरेतरजन्मानौ—Cf. Nir. VII. 4. (इतरेतरजन्मानो भवन्ति); also ŚB. iii. 1. 3. 3.

6. वैश्वदेवे शस्यते—The reference is not traced.

10. कर्मजन्मानः—Nir. VII. 5.

रूपत्वं विपमजन्मता । ततो लब्धात्मिका तं वा जनयन्ती या त्वमेतौ **मित्रावरुणौ परिचरसि** सा त्वमिदं नामास्माकं कुरुष्वेत्येतदाशास्महे इति समस्तार्थः ।

अथवा । **दक्षस्य वा ।** यदा दक्षस्त्वत्तो जातः **व्रते च कर्मणि** प्रवृत्तः स्वाविकारयुक्तोऽयम् **अतूर्तपन्थाः पुरुरथो०—०जन्मसु** । य एष वर्तते भगवानादित्यः अथ तदा **मित्रावरुणौ विवासस्याशास्से** ममैतावपि पुत्रत्वे 5 लोकोपकारित्वेन सम्यग्वर्तेयातां यथैष दक्ष इत्यैतिहासिकपक्षे योजना ।

**विवासतिः परिचर्यायाम्** इत्यत्र निगमः **हविष्माँ आ विवासति**—इति ।

" यो अग्निं देववीतये हविष्माँ आ विवासति ।
तस्मै पावक मृडय ॥ "  10

मेधातिथेरार्षम् । गार्हपत्यानुगमने पूर्णाहुतिरनया हूयते । हे पावक–अग्ने देववीतये–देवभोजनाय हविष्मान्–हविःसंप्रयुक्तो यस्त्वाम् आविवासति–परिचरति तस्मै मृडय उपदयां रक्षां कुर्वित्येतदाशास्महे ।

**आदित्यो दक्ष इत्याहुः** देवतासतत्त्वविदः । केन दर्शनेन **आदित्यमध्ये च स्तुतः ।** चशब्दो हेत्वर्थः । यस्मादादित्यमध्ये स्तुतः । स्तुतिप्रामाणिका हि ते देवता- 15 सतत्त्वचिन्तां प्रति । कथमादित्यमध्ये स्तुतः इति । " इमा गिरः " इत्युपक्रम्य ब्रवीति

" तुविजातो वरुणो दक्षो अंशः "

इति आदित्यमध्ये स्तुतेः आदित्य एवासौ इति ।

---

6. *d.* लोकोपकारत्वेन; *a. d.* read up to इत्यैतिहासिक°, and omit from the word पक्षे, all that follows to the end of ब्रवीति (page 1066, line 9), through mistake. This portion is found in them afterwards in a wrong place. That *a.* and *d.* both commit the same mistake here shows that they are both from the same arche-type. 8. *m.* omits इति. 9–10. *a.* marks this verse as verse 25. 10, 12. *m.* मृलय. 14. *m.* °सतत्वंविदः.

---

9–10. RS. I. 12. 9.
11. हूयते—Âśva. Śrau. 3. 13.
16–17. इमा गिरः—RS. II. 27. 1,

यद्येवं नन्विदमपरं विरुध्यते यदैतिहासिका आहुः **अदितिर्दाक्षायणी** इति । उभयमपि चैतस्मिन्निगमे श्रूयते आदित्यो दक्षो दाक्षायण्यदितिरिति । तद्यथा ।

" अदितेर्दक्षो अजायत दक्षाद्वदितिः परि ।

भूर्जज्ञ उत्तानपदो भुव आशा अजायन्त "

5 –इति । अदितेर्दाक्षायण्या आर्षम् । उत्तानपाद्राजा कश्चिद्यः पुराणेऽपि स्मर्यते । ततस्तावद्भूर्नाम कश्चिज्जज्ञे । ततोऽपि भुवः आशाः दिशो अजायन्त । दिक्प्रजननभावमसौ कथमपि बिभर्ति देवताजन्मप्रतिक्रियया वा । **अदितेर्दक्षः अजायत**–प्रादुर्बभूव । **दक्षात् उ** च **परि** अधि सकाशात् **अदितिः** प्रादुर्बभूव ।

**तत्** इतरेतरविरुद्धं **कथमुपपद्येत** । यतः प्रतिसमाधानं ब्रवीति । **समान-**
10 **जन्मानौ स्यातामिति** । समनन्तरजन्मानौ समानजन्मानौ यथोपवर्णितं मन्त्रे **दक्षस्य वादिते** इत्यत्र । **अपि वा देवधर्मेण** । महदात्मना अदितिमपेक्ष्य तस्याः कारणत्वं च कार्यत्वं च दक्षस्य । अथवा महदात्मना दक्षमपेक्ष्यादितेः कार्यत्वम् । एवं कृत्वोक्तम् **इतरेतरजन्मानौ इतरेतरप्रकृती** इति ।

अधुना व्यभिचारं दर्शयति । **अग्निरप्यदितिरुच्यते** इति । **तस्य** अग्नेरदिति-
15 शब्दवाच्यत्वे **एषा भवति** ॥ २३ ॥

**" यस्मै त्वं सुद्रविणो ददाशोऽनागास्त्वमदिते सर्वताता ।**

**यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम ॥ "**

**यस्मै त्वं सुद्रविणो ददास्यनागास्त्वमनपराधत्वमदिते सर्वासु**

---

1. *m.* omits नन्विदं; *d.* तदैतिहासिकाः for यदैति°. 2. *a. d.* चैतन्निगमे श्रूयते. 3–4. *a.* marks this verse in the middle as verse 26—परि २६ ॥ भूः. 5. *d.* omits इति. 5–6. *m.* omits from इति अदितेर्दाक्षायण्या आर्षम् to कश्चिज्जज्ञे ( inclusive ). 8. *a. d.* दक्षादुपरि अधि; *m.* दक्षाच्च परि. 13. *d.* °प्रकृती त इति. 18. Mss. क, ख, ग of Bi. read ददाशोऽनागास्त्वमनपराधित्वम्, ङ reads ददाश्यना°.

---

3–4. RS. X. 72. 4.
16–17. RS. I. 94. 15.

कर्मततिषु। आग आङ्पूर्वाद्गमेः। एन एतेः। किल्विषं किल्भिदं, सुकृतकर्मणो भयम्। कीर्तिमस्य भिनत्तीति वा। यं भद्रेण शवसा बलेन चोदयसि, प्रजावता च राधसा धनेन, ते वयमिह स्यामेति ॥

सरमा सरणात्। तस्या एषा भवति ॥ २४ ॥

**यस्मै त्वं सुद्रविणः**–इति। कुत्सस्यार्षम्। प्रातरनुवाके विनियोगः। हे **सुद्रविणः**–सुधन **अदिते**–अग्ने **यस्मै त्वं ददाशः**–**ददासि**। किम् इति। **अनागास्त्वम्**–**अनपराधत्वं सर्वताता सर्वासु कर्मततिषु** इष्टिपशुसोमलक्षणासु अवैगुण्यं करोषि। **यं** च **भद्रेण शवसा**–**बलेन** स्वजात्यविरोधिना **प्रजावता च राधसा,** प्रजासंयुक्तेन च **धनेन,** त्वं **चोदयासि चोदयासि**–अनुगृह्णासि। **ते वयमे**वानुगृह्यास्तव **स्याम** इत्येतदाशास्महे ॥ 5 10

**आगः आङ्पूर्वात् गमेः**। अवश्यमेवैतदागच्छति कर्तारमित्यागः। प्रसङ्गादाह। **एनः एतेः**। तदप्येवमेवावश्यमेवैति। यदेतत् **किल्विषम्** एतत् **कीर्तिं भिनत्ति** ॥

**सरमा** (१७) देवशुनीत्यैतिहासिकपक्षेण। माध्यमिका वाक् नैरुक्तपक्षेण। सा कस्मात्। **सरणात्** गमनात्। **तस्या एषा भवति** ॥ २४ ॥

---

1. Bi. J. R. किल्विषं, C. किल्विष; D. reads किल्मिषं for किल्भिदं of C., Bi. J. and others. 2. Bi. ms. छ reads सुकृतकर्माणो. 3. Bi. mss. क, ख, ग omit धनेन. 4. Bi. J. conclude XI. iii. 3 with भवति. 5. *a*. reads the *pratīka* up to यस्मै त्वामिति; *a*. marks verse 21, after इति. 6. *d*. अस्मै for यस्मै. 7. *a*. *d*. अनागस्त्वम्. 8. *a*. *d*. omit च after यं. 9. *a*. *d*. read यं for त्वं, *bi*. ms. च omits त्वं; *a*. *d*. *m*. omit चोदयासि.

---

1–2. Durga omits **किल्भिदं, सुकृतकर्मणो भयम्, अस्य,** and **इति वा**; so that his reading of the *niruktabhāṣya* seems to be किल्विषं कीर्तिं भिनत्ति.

3. धनेन—Omitted by the Bi. ms. क, ख, ग.

5. विनियोगः—Âs'va. Śrau. 4. 13.

13. 'सरमा'—Nigh. V. 5. 17.

"किमिच्छन्ती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः ।
कास्मेहितिः का परितक्म्यासीत् कथं रसाया अतरः पयांसि ॥"

किमिच्छन्ती सरमेदं प्रानट् । दूरे ह्यध्वा । जगुरिर्जङ्गम्यतेः । पराञ्चैराचितः । का तेऽस्मास्वर्थहितिरासीत् । किं परितकनम् । परितक्म्या रात्रिः, परित एनां तक्म । तक्मेत्युष्णनाम, तकत इति सतः । कथं रसाया अतरः पयांसीति । रसा नदी, रसतेः शब्दकर्मणः । कथं रसानि तान्युदकानीति वा ।

देवशुनीन्द्रेण प्रहिता पणिभिरसुरैः समूद इत्याख्यानम् ॥

सरस्वती व्याख्याता । तस्या एषा भवति ॥ २५ ॥

10 **किमिच्छन्ती**-इति । देवपणयः किलासुराः देवगवीरपजह्रुः । ततः किलेन्द्रस्तदन्वेषणाय तदालयं सरमां प्राहिणोत् । ते च देवपणयः तां दृष्ट्वा पप्रच्छुरनयर्चा **किमि-**

1. Bi. ms. ख reads °मानड्भिरेह्यध्वा ? 2. Bi. ms. च and R. पयाँसि. 3. Bi. mss. क, ख, ग read प्रापद् for प्रानड्. 6. Bi. ms. च and R. पयाँसीति. 8. Bi. mss. क, ख, ग read समुद° for समूद°. 9. Bi. J. conclude XI. iii. 4 with भवति. 10. *a.* marks verse 22 after इति. 10-11. *m.* omits from देवपणयः to ते च ( inclusive ).

1-2. RS. X. 108. 1.

3. जगुरिर्जङ्गम्यतेः—Durga does not give this etymology in his *vritti*. It is also not very clear how we can derive जगुरि from जङ्गम्.

4-5. परितक्म्या—See Nigh. IV. 1. 27.

5-7. **परित एनां तक्म, इति सतः, इति** in पयांसीति, **इति वा** after उदकानि, and **पणिभिः असुरैः**—Durga does not repeat these words in his *vritti*.

5. तकत इति सतः—Cf. 'तक हसने' Dhâtup. 1. 117; 'तकि कृच्छ्रजीवने' Dhâtup. 1. 118. Durga reads तकतेर्गत्यर्थस्य for तकत इति सतः ( see page 1069, line 9 below ).

6. रसा = नदी Cf. 'रस शब्दे' Dhâtup. 1. 714.

6. **रसतेः शब्दकर्मणः**—Not explained by Durga.

9. व्याख्याता—See Nir. II. 23.

**च्छन्ती सरमा** इति । **इदम्** अस्मन्निवासस्थानं **सरमा किमिच्छन्ती** किमस्मत्तः प्रार्थयन्ती **प्रानट्**–प्राप्तवती कदाचिदप्यनागतपूर्वेति । अपि च । **दूरे ह्यध्वा ।** महदेतदध्वानं न यदृच्छया शक्यमागन्तुम् । य एव **जगुरिः** स्यात् भृशं गन्ता, स एव शक्त आगन्तुम् । **पराचैः–पराञ्चनैरचितः** पराङ्मुखैः अञ्चनैर्गमनैः आचितो गतः विप्रकृष्टो देवनिवासात् । यतो ब्रूमः । हे सरमे **कास्मेहितिः का** तव **अस्मा-** 5 **स्वर्थहितिः** अर्थस्याधानम् । कोऽस्मत्तोऽर्थस्तव प्राप्तव्योऽभिप्रेत **आसीद्** येनायमति-महानध्वा व्यवसित आगन्तुम् । अपि च **का परितक्म्यासीत् । किं परितक-नम् ।** अपि नाम सुखा रात्रिः अनन्तरा तवासीत् । **परितक्म्या रात्रिः । तक्मे-त्युष्णनाम तकते**र्गत्यर्थस्य । सर्वतो हि तद् गतं भवति । तदेनामुभयतः परिगृह्य वर्तते इति परितक्म्या रात्रिः । अपि च । **कथं रसाया अतरः पयांसि । रसा** 10 नाम **नदी** अध्यर्धयोजनविस्तारा । तस्याः **पयांस्य**तिदुस्तराणि कथ**मतरः कथं** तीर्णवत्यसि । अथवा । **कथंरसानि तान्युदकानि ।** अपि नाम स्वादूनि । अपि श्रान्तायास्तवान्तरा वासाः केष्वासन्निति ।

**देवशुनीन्द्रेण प्रहिता** इति निदानप्रख्यापनं मन्त्रार्थाभिव्यक्तये । **समूदे** संवादं कृतवतीत्यर्थः । **इत्याख्यान**विदः एवं मन्यन्ते । 15

वाक्पक्षे तु चिरकालीनवृष्टिव्युपरमे कदाचिदभिनवमेघसंप्लवे सहसैव स्तनयित्नुमुपश्रुत्य कुत इयं माध्यमिका वाक् चिरेणागतेति विस्मितस्तामसूयन्निव ब्रवीति **किमिच्छन्ती सरमा** इति । **इदम**स्मच्छ्रोत्रं चिरमनागम्य **सरमा** माध्यमिका वाक् **किमिच्छन्ती प्रानट्** प्राप्तवती । अपि च । **दूरे हि अध्वा ।** चिरकालश्रुतेयमस्माभिः । **जगुरिः** भृशं यो गन्ता स्यात्स चिरविच्छिन्नमेतद्वर्षवर्त्म पुनरागच्छेत्संतनुयात् **पराचैः** 20 पराङ्मुखैः एतदचिन्त्यम् । चिरनष्टमित्यर्थः । अपि च । **कास्मेहितिः ।**

---

6. *a. d.* अर्थस्याधानम्, *bi. m.* अर्थस्याभिधानम्; *a.* प्राप्तये व्यवसितः आ°, *d.* प्राप्तयेभिप्रेत आसीत्. 7. *a. d.* omit अपि च before का परितक्म्या. 8. *d.* अपि सुखा for अपि नाम सुखा; *a. d.* अन्तरा for अनन्तरा of *bi. j.* 17. *a. d. m.* विस्मितः, *bi. j.* स्मितः. 20. *a. d.* स्यान्नाचिरविच्छि(*d.* च्छ)न्नमे° etc., *bi. j.* स्यात्, सचिरविच्छिन्नमे;° *d.* सतनुयात्, *bi. j.* संतनुयात्. 21. *a. d.* प्राङ्मुखैः for पराङ्मुखैः.

---

3. महदेतदध्वानम्—This should be महान्तमेतमध्वानम्.

5–6. का तव अस्मास्वर्थहितिः—Yāska has का तेऽस्मास्वर्थहितिः.

किमस्मास्वर्थाभिधानमासीत् पूर्वं तव हे सरमे येनागमः । किं वा न जातं येनापुनरागमः । अपि च । चिरप्रोषितायास्तव **किं परितक्नमासीत्** । अन्तरिक्षनद्या अपि महत्या **रसायाः** कथमतरः पयांसि । कथमतिबहून्युदकानि संक्षोभ्यात्मानं प्रतिलब्धवत्यसि इति वा ।

5 "वाग्वै सरमा"

–इति हि विज्ञायते ।

**सरस्वती** (१८) **व्याख्याता** 'नदीवत्' इति । 'तद्देवतावत्' इत्युक्तमिदं तत् । **तस्या एषा भवति** ॥ २५ ॥

"**पावका नः सरस्वती वाजेभिर्वाजिनीवती ।**

10 **यज्ञं वष्टु धियावसुः** ॥"

**पावका नः सरस्वती । अन्नैरन्नवती । यज्ञं वष्टु धियावसुः कर्मवसुः । तस्या एषापरा भवति** ॥ २६ ॥

**पावका नः सरस्वती**–इति । मधुच्छन्दस आर्षम् । प्रउगे विनियोगः । सारस्वते च हविषि । **पावका** प्रक्षारयन्त्युदकेन । का पुनरसौ इति । **सरस्वती**

15 माध्यमिका वाक् । **वाजेभिर्वाजिनीवती** । अन्नेन हविषोदकेन वा तद्वती । **यज्ञम्** एतमस्माकं **वाजेभिः–अन्नैः** युक्तं **वष्टु**–कामयताम् । अथवा । ऋगादिभावमापन्ना

---

1. *a. d.* किमस्मत्स्वार्थाभिधानं; *m.* omits तव; *d.* येन पुनरागमः. 4. *a. d.* omit इति वा. 7. *d.* तद्देव तावत् for तद्देवतावत्. 11. C. कर्मवसु तस्या. 12. Bi. J. conclude XI. iii. 5 with अपरा भवति. 13. *a.* marks verse 23, after इति. 14. *a. d.* सारस्वते हविषि च; *d.* सरस्वते.

---

5. वाग्वै सरमा—The quotation is from MS. 4. 6. 4.

7. 'सरस्वती'—Nigh. V. 5. 18. व्याख्याता नदीवत् इति i. e. in Nir. IX. 26. उक्तम्—In Nir. II. 23.

9–10. RS. I. 3. 10; SV. 1. 189; VS. 20. 84.

11. **अन्नवती, कर्मवसुः**—Not repeated by Durga.

13. विनियोगः—Âśva. Śrau. 2. 8.

14. सारस्वते च हविषि—MS. 2. 1. 7; 2. 5. 2; 2. 5. 4; 4. 7. 8.

देवान् प्रति वहतु । वक्ष्यति हि 'तां विश्वरूपाः पशवो वदन्ति'–इति । **धियावसुः**–कर्मधना । **तस्या एषा अपरा भवति** स्फुटतरोदकलिङ्गा ॥ २६ ॥

"महो अर्णः सरस्वती प्र चेतयति केतुना ।
धियो विश्वा वि राजति ॥"

**महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया** 5
**वा । इमानि च सर्वाणि प्रज्ञानान्यभिविराजति । वागर्थेषु विधीयते, तस्मान्माध्यमिकां वाचं मन्यन्ते ॥**

**वाग्व्याख्याता । तस्या एषा भवति ॥ २७ ॥**

**महो अर्णः सरस्वती**–इति । पूर्ववदार्षं विनियोगश्च । **महो अर्णः महदुदकं सरस्वती** माध्यमिका वाक् । किं करोति । **प्रचेतयति–प्रज्ञापयति**–आविःकरोति 10
वर्षभावेन । केन पुनराविःकरोति । **केतुना** स्वेन **कर्मणा प्रज्ञया वा** । न ह्यप्रज्ञानवत्यवलिष्ठा चैतच्छक्ता कर्तुम् । [illegible] चोदकमाविःकुर्वती **धियो विश्वा वि राजति** । **सर्वाणि प्रज्ञानान्यभिविराजति** । कथम् । उदकादन्नम् अन्नात्प्रज्ञानमित्येवं सर्वप्रज्ञानानामसावीष्ट इति ।

**वाक् अर्थेषु विधीयते** इत्युपपत्तिवचनम् । के पुनर्वाचोऽर्थाः । चतस्र ऊर्जं 15
दुदुहे पयांसि–इत्येवमादयः उदकाधिकारलक्षणाः । तेष्वियमपि सरस्वती विधीयते **महो अर्ण** इत्येवमादिषु । **तस्मान्माध्यमिकां वाचं मन्यन्ते** नैरुक्ताः ॥

6. Bi. mss. क, ख, ग read सर्वाणि भूतान्यभि.° 8. Bi. J. conclude XI. iii. 6 with भवति. 9. *a.* marks verse 24, after इति. 13. *a. d.* read here the portion dropped through mistake from line 6 page 1065 onwards, as उदकादन्न—पक्षे योजना etc.; *d.* reads up to °जन्मानौ स्यातामिति ( page 1066, line 10 ) and then begins as मन्नात्प्रज्ञानं etc.

1. वक्ष्यति हि—Nir. XI. 29.

3–4. RS. I. 3. 12; VS. 20. 86.

6. इमानि च—Omitted by Durga.

15. चतस्र ऊर्जं etc.—RS. VIII. 100. 10, quoted in Nir. XI. 28, next section.

**वाग्** (१९) वक्तव्या । सा पुनः **व्याख्याता** वचेः इति । **तस्या एषा भवति** ॥ २७ ॥

" **यद्वाग् वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा ।**

**चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ॥** "

5 **यद् वाग् वदन्त्यविचेतनान्यविज्ञातानि राष्ट्री देवानां निषसाद मन्द्रा मदना चतस्रोऽनु दिश ऊर्जं दुदुहे पयांसि । क्व स्विदस्याः परमं जगामेति । यत् पृथिवीं गच्छतीति वा, यदादित्यरश्मयो हरन्तीति वा । तस्या एषापरा भवति ॥ २८ ॥**

**यद्वाग् वदन्ती**–इति । नेमस्यार्षम् । सारस्वते पशौ विनियोगः । यदा माध्यमिका
10 **वाग् वदन्ती**–निर्वचयन्ती । कानि । **अविचेतनानि–अविज्ञातार्थानि** शब्दरूपाणि स्तनयित्नुलक्षणानि । **राष्ट्री**–ईश्वरा माध्यमिकानां देवतानाम् । **निषसाद**–निषीदति व्याप्नोति आत्मानं वर्षकर्मणि । **मन्द्रा–मदना** हर्षकरी तर्पयित्री वा लोकस्य । अथ तदा किम् इति । **चतस्र ऊर्जं दुदुहे पयांसि । चतस्रः** दिशः प्रति **अनुदिशश्च दुदुहे**–दुग्धे प्रक्षरति **ऊर्जम्**–अन्नं **पयांसि**–उदकानि । तेषां च
15 पयसां **क्व स्विदस्याः परमं जगाम** । क्वैतानि निष्पाद्यौषधीर्गच्छन्ति । कुतो वा प्रतिसंवत्सरं पुनरागच्छन्तीति । कस्तत्त्वं **जगाम**–जजान यानि पृथिव्यामवतिष्ठन्ते यानि **चादित्यरश्मयो हरन्तीति** एवमनुपक्षीणपयस्केयमिति श्रूयते ।

1. Bi. ms. च reads पयाँसि. 5. Mss. क, ख, ग of Bi. do not read मन्द्रा. 6. Bi. mss. क, ख, ग read चतस्रोऽनुदिश, C. चतस्रोनुदिश, Bi. J. चतस्रोऽनु दिश; Bi. ms. च has पयासि. 8. Bi. J. conclude XI. iii. 7 with अपरा भवति. 9. *a.* marks verse 27, after इति. 10. *a. d.* निर्वचंती, *bi.* निर्वचयन्ती, *m.* निर्वचयन्ति. 11. *a. d.* add या before माध्यमिकानां; *a. d.* read देवानां. 14. *d.* प्रत्यक्षरति ?; *a. d.* omit ऊर्ज अन्नं. 16. *m.* drops इति after आगच्छन्ति; *a. d.* add जानाति after तत्त्वं; *a. d.* omit जजान. 17. *d.* यानि वादित्यरश्मयो.

1. 'वाक्'—Nigh. V. 5. 19; व्याख्याता in Nir. II. 23.

3–4. RS. VIII. 100. 10.

5. **मन्द्रा**—Omitted by the Bi. mss. क, ख, ग.

9. विनियोगः—Āśva. S'rau. 3. 8.

**तस्या एषा अपरा भवति** । सा पुनः किमर्थम् । इयमेव वाक् सर्वप्राण्यन्तर्गता माध्यमिकी सर्वार्थाभिवादिनी भवतीति विभूत्युपप्रदर्शनार्थम् ॥ २८ ॥

**" दे॒वीं वाच॑मजनयन्त दे॒वास्तां वि॒श्वरू॑पाः प॒शवो॑ वदन्ति ।**
**सा नो॑ म॒न्द्रेष॒मूर्जं॒ दुहा॑ना धे॒नुर्वाग॒स्मानुप॒ सुष्टु॒तैतु॑ ॥ "**

**देवीं वाचमजनयन्त देवाः । तां सर्वरूपाः पशवो वदन्ति । व्यक्तवाचश्चाव्यक्तवाचश्च । सा नो मदनान्नं च रसं च दुहाना धेनुर्वागस्मानुपैतु सुष्टुता ॥** 5

**अनुमती राकेति देवपत्न्याविति नैरुक्ताः । पौर्णमास्याविति याज्ञिकाः ।**

**" या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका । "** 10

**-इति विज्ञायते ॥**

**अनुमतिरनुमननात् । तस्या एषा भवति ॥ २९ ॥**

**दे॒वीं वाच॑मजनयन्त**-इति । तदेवार्षम् । **दे॒वीं**-दात्रीमुदकानां यां **वाचम् अजनयन्त** माध्यमिकाः **देवाः ताम्** एवैतां यथाभिमतार्थाभिधायिकां **विश्वरूपाः**-**सर्वरूपाः पशवो वदन्ति** तत्पूर्वकत्वाद्वाक्प्रवृत्तेः, **व्यक्तवाचश्चाव्यक्तवाचश्च** । 15 व्यक्तवाचो मनुष्यादयः अव्यक्तवाचो गवादयः । यैवं सर्वपशुभिरुच्यते **सा नः** साऽस्माकं **मन्द्रा-मदना इषम्-अन्नं** पयोघृतादिरूपं **रसं च ऊर्जं च दुहाना**-प्रक्षरन्ती **धेनुः**-तर्पयित्री **वाग् अस्मानुपैतु सुष्टुता** सुष्ठु स्तुता इत्येतदाशास्महे ॥

---

2. *a.* only reads माध्यमिका. 6. Bi. mss. क, ख, ग—सा नो मननान्नं च. 7-8. D. उप सुष्टुतानुमती for उपैतु सुष्टुता° of C. and text. 10-11. Bi. J. विज्ञायतेऽनुमति°, C. विज्ञायतेनुमति°. 12. Bi. J. conclude XI. iii. 8 with भवति. 13. *a.* marks verse 28, after इति. 14. *m.* °मेवैस्तां यथामतार्था°. 15. *a. d.* omit तत्पूर्वकत्वाद्वाक्प्रवृत्तेः. 17-18. *a. d.* read मदना इषं चोर्जं च दुहाना प्रक्षरन्ती etc. 18. *m.* omits सुष्टुता; *a. d.* omit सुष्ठु स्तुता.

---

3-4. RS. VIII. 100. 11; TB. 2. 4. 6. 10; PG. 1. 19. 2; AS'. 3. 8. 1; AG. 3. 10. 9; AB. 7. 11. 2; Ṣaḍ. B. IV. 6; GB. 2. 1. 10.
10. इति विज्ञायते—MS. 4. 3. 5; Ait. Brâh. 32. 9.

**अनुमतिः राका इति देवपत्न्यौ इति नैरुक्ताः ।** सहपदयोरुपन्यासस्तुल्योऽनयोरभिधेयविचार इति । मध्यस्थाने देवपत्न्याविति निर्ज्ञाते तदभिधाने इति नैरुक्ताः । **पौर्णमास्यौ इति याज्ञिकाः ।** ते च ब्राह्मणमुदाहरन्ति **"या पूर्वा पौर्णमासी"**–इत्येवमादि । कालाधिदैवते चन्द्रसहचारिण्याविति मध्यस्थाने । पौर्णमास्य-
5 मावास्ययोर्नक्षत्रेष्टकामध्य उपधानान्नक्षत्रत्वम् । अतश्च दर्शनात् सर्व एवायं ज्योतिर्गणो ग्रहनक्षत्रतारकारूपो रसप्रायो मूर्तिमाप्नुवन्मध्यस्थान एवेति लक्ष्यते ॥

**अनुमतिः** (२०) **अनुमननात्** । अनुमता किलेयमृषिभिर्देवैश्च चतुर्दशके पक्षे अस्त्वियं पौर्णमासीति । **तस्या एषा भवति** ॥ २९ ॥

**" अन्विदनुमते त्वं मन्यासै शं च नस्कृधि ।**
10 **क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषः ॥ "**

3. *d.* ते च ब्रह्ममुदाहरंति. 4. *a. d.* कालाधिदेवने. 5. *d. m.* प्रदर्शनात्. 7. *a. d. m.* देवेश्च चतुर्दशके. 10. C. आयूंषि.

3. ब्राह्मणम्—Ait. Brâh. 32. 9.

5. नक्षत्रेष्टकामध्ये उपधानात्—See MS. 2. 13. 29; TS. 3. 5. 1; 4. 4. 10.

5. दर्शनात्—By *dars'ana*. Durga refers to the *brâhmaṇavâkya* quoted above.

7. 'अनुमतिः'—Nigh. V. 5. 20.

9–10. MS. 3. 16. 4; *KS. 13. 16;* VS. 34. 8; TS. 3. 3. 11. 3; AV. 7. 20. 2; AS'. 4. 12. 2; S'S'. 9. 27. 2; TB. 3. 1. 3. 3; TA. 4. 11. 2; cf. also RS. 9. 36. 3c.

10. क्रत्वे दक्षाय नो हिनु.—This is the reading of all our Mss. of the text. The Maitrâyaṇî, the Taittirîya and the Vâjasaneyi Saṁhitâs also have the same reading. The Kâṭhaka Saṁhitâ, however, reads this third *pâda* as **इषं तोकाय नो दधः.** Yâska's *bhâṣya* and Durga's *vṛitti* both explain the Kâṭhaka reading only. It is obvious therefore that the Maitrâyaṇîya reading was not the original one and was substituted for the Kâṭhaka after the time of Durga by one who overlooked the Nirukta and the vritti.

The *rik* is quoted in support of the meaning पौर्णमासी. But there is no word or sentence in the verse which indicates that अनुमति means पौर्णमासी.

**अनुमन्यस्वानुमते त्वम् । सुखं च नः कुर्वन्नं च नोऽपत्याय धेहि, प्रवर्धय च न आयुः ॥**

**राका रातेर्दानकर्मणः । तस्या एषा भवति ॥ ३० ॥**

**अन्विदनुमते**–इति । वामदेवस्यार्षम् । देविकासु विनियोगः । हे **अनुमते त्वम् अनुमन्यासै–अनुमन्यस्व** अस्माकं यदनुमन्तव्यं त्वया । **शं च नस्कृधि । सुखं** 5
**च** अस्माकं **कुरु । इषम्–अन्नं च** अस्माकं **तोकाय–अपत्याय धेहि । आयूंषि च नः प्रतारिषः** प्रतीर्णानि कुरु **प्रवर्धय** इत्येतदाशास्महे ॥

सैव पौर्णमासी पञ्चदशके पक्षे **राका** (२१) इत्युच्यते । सा पुनः कस्मात् । **रातेः दानकर्मणः** । हविर्दाननिमित्तं हि सा भवति ॥ **तस्या एषा भवति** ॥ ३० ॥

"राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । 10
सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥"

**राकामहं सुह्वानां सुष्टुत्या ह्वये । शृणोतु नः सुभगा । बोधत्वात्मना । सीव्यत्वपः प्रजननकर्म, सूच्याच्छिद्यमानया । सूची सीव्यतेः । ददातु वीरं शतप्रदमुक्थ्यं वक्तव्यप्रशंसम् ॥**

**सिनीवाली कुहूरिति देवपत्न्याविति नैरुक्ताः । अमावास्ये इति याज्ञिकाः ।** 15

1. Bi. mss. क, ख, ग read कुर्वन्तन्न ? 2-3. C. आयू राका; C. तस्यैषा; Bi. J. conclude XI. iii. 9 with भवति. 4. *a.* marks verse 29, after इति. 6. *m.* इषम्, *bi. j.* इयम् ? 7. *a. d.* पुनः for नः; *a. d.* omit प्रवर्द्धय, *m.* reads वर्धय for प्रवर्धय. 8. *d.* राके इत्युच्यते ?

8. 'राका'—Nigh. V. 5. 21.

9. हविर्दाननिमित्तं हि सा भवति.—Cf. AB. iii. 5. 3.

10-11. RS. II. 32. 4; AV. 7. 48. 1; TS. 3. 3. 11. 5; MS. 4. 12. 6; 194. 16; KS. 13. 16; SMB. 1. 5. 3; ApMB. 2. 11. 10; ApG. 6. 14. 3.

13. सूची सीव्यतेः—Omitted by Durga; cf. 'षिवु तन्तुसंताने' Dhâtup. 4. 2.

" या पूर्वामावास्या सा सिनीवाली, योत्तरा सा कुहूः । "

-इति विज्ञायते ।

**सिनीवाली । सिनमन्नं भवति, सिनाति भूतानि । वालं पर्व वृणो- तेस्तस्मिन्नन्नवती । वालिनी वा । वालेनेवास्यामणुत्वाच्चन्द्रमाः सेवि- 5 तव्यो भवतीति वा । तस्या एषा भवति ॥ ३१ ॥**

**राकामहं सुहवाम्**-इति गृत्समदस्यार्षम् । दैविकासु विनियोगः । **राकाम् अहं सुहवां स्वाह्वानां** यस्याः शोभनमाह्वानं तां **सुष्टुती-सुष्टुत्या** शोभनया स्तुत्या **हुवे-आह्वये** । सा च पुनः **सुभगा**-सुधनाऽस्माभिराहूयमाना **शृणोतु** । श्रुत्वा च **बोधतु** । कर्तव्यतया तदवगच्छतु । यदपि च न ब्रूमहे तदपि **त्मना-आत्मना** 10 एव बुध्यताम् । अपि चेदमुच्यते । एवं **सीव्यतु अपः** । **संतनोतु प्रजननकर्म** अस्माकम् । **सूच्या अच्छिद्यमानया** अविच्छिन्नेन प्रजासंतानेन । न च पुनः प्रजामात्रमर्थयामहे । किं तर्हि । **ददातु वीरं** पुत्रम् । किंलक्षणम् । **शतदायं- बहुप्रदम् । उक्थ्यं-वक्तव्यप्रशंसम्** अपरिसमाप्तस्तुतिम् ॥

**सिनीवाली, कुहूः** इति पूर्ववदुपन्यासः । **अमावास्ये इति याज्ञिकाः** । 15 तथैव ब्राह्मणमपि चोदाहरन्ति ।

" तथैव पूर्वा सिनीवाली उत्तरा कुहूः । "

---

4. C. R. and Bi. ms. च have वालेनैवास्था°. 4-5. Bi. J. R. सेवितव्यो, Bi. mss. क, ख, ग—सेतव्यो. 5. Bi. J. conclude XI. iii. 10 with भवति. 6. *a.* marks verse 30 after इति. 7. *bi. j.* शोभनमाव्हानां; *a. d. m.* omit सुष्टुती. 8. *a. d. m.* omit हुवे; *a. d.* omit च after सा. 9. *a. d.* नो for न; *a. d. m.* omit त्मना. 10. *m.* उच्यत एव । सीव्यतु. 13. *a. d.* add च after °प्रशंसम्. 14. *m.* कुहुरिति. 15. *a. d.* omit ब्राह्मणमपि चोदाहरन्ति and *d.* omits तथैव also before that. 16. *m.* omits from उत्तरा कुहूः to इति सिनीवाली ( next page 1077, line 4 ).

---

2. इति विज्ञायते—MS. 4. 3. 5; AB. 32. 9.

6. विनियोगः—See MS. 2. 6. 4.

8. आह्वये—Durga's *niruktapātha* seems to be सुष्टुत्याह्वये instead of सुष्टुत्या ह्वये.

15. ब्राह्मणमपि चोदाहरन्ति—AB. 32. 9; MS. 4. 3. 5.

**सिनीवाली** (२२) कस्मात् । **सिनमन्नं भवति** । तत् कस्मात् । **सिनाति**–बध्नाति **भूतानि** रसादिभिः धातुभिः । **वालं** किमुच्यते । **पर्व** । तत्कस्मात् । **वृणोतेः** । वृण्वन्ति देवास्तत्र हवींषि । **तस्मिन्** पर्वणि असौ सिनिनी **अन्नवती** इति सिनीवाली । अथवोत्तरपदे विकल्पः । **वालिनी** वालैस्तद्वती । सिनिनी च सा वालिनी चेति सिनीवाली । औपमिकं वा । कथम् इति । **वालेनेवास्यामणुत्वा-** 5
**च्चन्द्रमाः सेवितव्यः**–बोद्धव्यो **भवति** । एवमणुरसौ चन्द्रमा भवत्यस्यां येन ज्ञायते वालेनाप्ययं सीव्येत बोध्येतेति ॥ **तस्या एषा भवति** ॥ २१ ॥

**"सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।**
**जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥"**

**सिनीवालि पृथुजघने । स्तुकः स्त्यायतेः, संघातः । पृथुकेशस्तुके,** 10
**पृथुष्टुते वा । या त्वं देवानामसि स्वसा । स्वसा सु असा । स्वेषु सीदतीति वा । जुषस्व हव्यमदनम् । प्रजां च देवि दिश नः ॥**

**कुहूर्गूहतेः । क्वाभूदिति वा । क्व सती हूयत इति वा । क्वाहुतं हविर्जुहोतीति वा । तस्या एषा भवति ॥ ३२ ॥**

2. Bi. ms. क omits धातुभिः. 3. *d.* तस्मिन्पर्वण्यसिनी अन्नवती. 4. *d.* वालैः for वालैः. 5. *a. d.* वालिनेवा . 6. *m.* सेतव्यो बोद्धव्यो भवति; *bi. j.* सेवितव्यः बोद्धव्यो भवति, *a.* only omits बोद्धव्यो. 7. *a. d.* बध्येतेति for बोध्येतेति of *bi. j.* 10. Bi. J. स्तुकस्त्यायनेः, R. स्तुक स्त्यायते. 10–11. Bi. mss. क, ख, ग read पृथुकेशस्तुका पृथुष्टुतिर्वा, Bi. J. पृथुकेशस्तुके पृथुष्टुते वा, R. C. D. and Bi. ms. च—पृथुकेशस्तुके पृथुस्तुके वा. 11. Bi. mss. क, ख, ग do not read त्वं. 12. Bi. mss. क, ख, ग read हव्यमाहुतं for हव्यमदनं. 14. Bi. J. conclude XI. iii. 11 with एषा भवति.

1. 'सिनीवाली'—Nigh. V. 5. 2. 2.

8–9. RS. II. 32. 6; AV. 7. 46. 1; VS. 34. 10.

10–11. **पृथुजघने** and **असि**—These words are not repeated by Durga though they are explained by him.

10, 11, 13. **स्तुकः स्त्यायतेः संघातः; सु असा स्वेषु सीदतीति वा; क्वाहुतं हविर्जुहोतीति वा**—These are omitted by Durga and also not explained.

10. स्त्यायतेः—Cf. 'स्त्यै शब्दसंघातयोः' Dhâtup. 1. 935.

**सिनीवालि पृथुष्टुके**–इति । गृत्समदस्यार्षम् । देविकासु विनियोगः । हे **सिनीवालि पृथुष्टुके**–विस्तीर्णजघने । अथवा । **पृथुष्टुके–पृथुकेशस्तुके**–पृथुकेशकलापे । अथवा । **पृथुष्टुते । या त्वं देवानां स्वसा**–भगिनी माध्यमकानां सा त्वं आसेवस्व एतत् **हव्यम् आहुतम्** मर्यादया विधानतो हुतमस्माभिः । आसेव्य
5 **च प्रजां देवि दिदिड्ढि नः प्रजा**मस्माकं **दिश**–अतिसृज देहि इत्याशास्महे ॥

**कुहूः** (२३) **गूहतेः** । निगूहत्यसौ चन्द्रमसम् । **क्वाभूत् इति वा** । तस्याम-प्रत्यक्षत्वात् वितर्क्यश्चन्द्रसा भवति क्वासावभूदद्येति । **क्व सती हूयते इति वा** । सैवात्मना देवताभावादप्रत्यक्षा न ज्ञायते क्वापि सत्याहूयते इति । अतो वितर्क्या भवति । **तस्या एषा भवति** ॥ ३२ ॥

10 "**कुहूमहं सुवृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि ।**
**सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ॥**"

**कुहूमहं सुकृतं विदितकर्माणमस्मिन् यज्ञे सुह्वानामाह्वये । सा नो ददातु श्रवणं पितॄणाम्** । पित्र्यं धनमिति वा । पित्र्यं यश इति वा । **तस्यै ते देवि हविषा विधेमेति व्याख्यातम्** ॥

15 **यमी व्याख्याता । तस्या एषा भवति ॥ ३३ ॥**

---

1. *m.* सिनीवाली पृथु°; *a.* marks verse 31 after इति. 2. *m.* सिनीवाली. 4. *a. d. m.* add जुषस्व before आसेवस्व, *d.* आसेव्यं for आसेव्य. 5. *a. d.* omit प्रजां देवि दिदिड्ढि नः. 7. *bi. j.* and others °दस्येति, *d.* °दद्येति. 8. *a. d.* अप्रत्यक्षान्न ज्ञायते, *m.* अप्रत्यक्षा न ज्ञा°. 9. *a. d.* omit तस्या. 12. Bi. mss. च and ख and R. read सुवृतं for सुकृतं of C. and Bi. J. 15. Bi. J. conclude XI. iii. 12 with भवति.

---

1. विनियोगः—MS. 2. 6. 4.
6. कुहूः—Nigh. V. 5. 23.
10. AV., MS., and KS. read सुकृतं for सुवृतं.
10–11. MS. 4. 12. 6; 195. 8–9; TS. 3. 3. 11. 5; AV. 7. 47. 1; KS. 13. 16; AŚ. 1. 10. 8; ŚS. 9. 28. 3.
12. सुकृतं—The *mantra* reads सुवृतं.
12. विदितकर्माणम्—Omitted by Durga.

**कुहूमहं सुवृतम्**-इति । देविकासु विनियोगः । **कुहूम् अहं सुवृतं-सुकृतं** शोभनानां कर्मणां कर्त्रीं **विद्मनापसं** सर्वत्र प्रत्यक्षकर्माणम् **अस्मिन् यज्ञे सुहवां स्वाह्वानां** शोभनमाह्वानं यस्याः तां **जोहवीमि-आह्वये** आह्वयामि । **सा** अस्माभिराहूतास्मिन्यज्ञे एत्य हविर्भुक्त्वा **नः** अस्माकं **ददातु श्रवणं पितृणाम्** पित्र्यं **धनमिति वा पित्र्यं वा यशः** । कुलोचितमित्यर्थः । प्रत्यक्षीकृत्योत्तरेण पादेनास्तौत् । या त्वमस्माकमेतत् करोषि **तस्यै ते** तुभ्यं हे **देवि कुहु हविषा विधेम** । हविर्दद्म इत्यर्थः । अथवा । तां त्वां हविषा परिचरेम इति । 5

**यमी** (२४) **व्याख्याता** यमेन । लिङ्गमात्रविशेषः । **तस्या एषा भवति** ॥ ३३ ॥

**"अन्यमू षु त्वं यम्यन्य उ त्वां परि ष्वजाते लिबुजेव वृक्षम् ।** 10
**तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम् ॥"**

**अन्यमेव हि त्वं यम्यन्यस्त्वां परिष्वङ्क्ष्यते लिबुजेव वृक्षम् । तस्य वा त्वं मन इच्छ, स वा तव । अधानेन कुरुष्व संविदं, सुभद्रां कल्याणभद्राम् । यमी यमं चकमे तां प्रत्याचचक्षेत्याख्यानम् ॥ ३४ ॥**

1. *d.* कुहूमहं सुकृतं for कुहूमहं सुवृतं of *bi. j.*; *a.* marks verse 32, after इति; *a. d. m.* omit सुवृतं before सुकृत. 2. *a. d.* सर्वप्रत्यक्षकर्माणम्. 3. *a. d. m.* जोहवीमि, *bi. j.* जोहविमि; *a. d. m.* omit आह्वये. 4. *a. d. m.* omit नः. 5. *a. d.* omit इति after धनम्; *d.* omits वा before यशः. 6. *d.* reads मा for या ?; *a. d. m.* omit ते. 7. *a. d.* omit हविः before दद्म, and तां before त्वां; *m.* परिचराम for परिचरेम of *bi. j.* 14. Bi. ms. ख does not read कल्याणभद्रां; C. D. R. and Bi. ms. च—प्रत्याचचक्ष इत्याख्यानम्, Bi. ms. क—प्रत्याचक्ष इत्याख्यानम्, Bi. J. प्रत्याचचक्षेत्याख्यानम्; Bi. J. conclude XI. iii. 13, as °त्याख्यानम् ॥ १३ (३४) ॥ **इत्येकादशे तृतीयः पादः ॥ ११,३ ॥.**

1. विनियोगः—MS. 2. 6. 4.

8. 'यमी'—Nigh. V. 5. 24; व्याख्याता—Nir. X. 19.

10-11. RS. X. 10. 14; AV. 18. 1. 16; also RS. 10. 10. 13*d*; AV. 18. 1. 15*d*.

12, 14. **परिष्वङ्क्ष्यते, प्रत्याचचक्षेत्याख्यानम्**—Not repeated by Durga.

**अन्यमू षु त्वं यम्यन्यः**–इति । **यमी** किल **यमं चकमे** भ्रातरम् । **तां** किल यमोऽनयर्चा **प्रत्याचचक्षे** । कथम् । हे **यमि अन्यम् ऊ षु त्वं अन्यमेव हि त्वं** परिष्वजस्व मैथुनाभिप्रायेण । **लिबुजेव वृक्षं** वल्लीव काचिद्गाढं समीपजं वृक्षम् । **अन्य** एव **त्वां** परिष्वजतां यस्य योग्या त्वमनेनाभिप्रायेण परिष्वक्तुम् । **तस्य वा** 5 **त्वं मन इच्छा** । **तस्य** च **त्वं मनः** प्रवेष्टुमि**च्छ** । **स वा तव** । **अधा**– अथैवमैकचित्त्यमुपगम्य**मानेन** समानेन सह **कृणुष्व संविदं** संजल्पादिमैथुनकार्यम् । **सुभद्रां**–**कल्याणभद्राम्** । संविदमुभयलोकाविरोधिनीमित्यभिप्रायः ।

त्रित्वपक्षे तु माध्यमिको यमो माध्यमिकां वाचमुषसमात्मनः प्रविभक्तामिव कृत्वोभयस्थानां तां ब्रवीति । हे **यमि** अतीतस्तेऽस्मत्परिष्वङ्गसमयः । प्रभातामिदानीम् । 10 **लिबुजेव वृक्षं**–द्युस्थानं परिष्वक्तुमिच्छ । **तस्य च त्वं मनः**–प्रकाशमनुप्रवेष्टुमि**च्छ** । **स** च **तव** प्रकाशमनुप्रविशतु । अथैवमितरेतरसंपर्कात् तेन सहैकीभूता लोकोपकाराय **कुरुष्व** परस्परं **संविदं** संवित्साधनं प्रकाशमिति ॥ ३४ ॥

**उर्वशी व्याख्याता । तस्या एषा भवति ॥ ३५ ॥**

**उर्वशी** (२५) वक्तव्या । सा पुनः **व्याख्याता** । तदिहापि देवतायां योज्यम् । 15 ' उर्वभ्यश्नुते ' । बहूदकं व्याप्नोति । ' उरुर्वा वशोऽस्याः ' । महानस्याः काम उदके ।

**तस्या एषा भवति** ॥ ३५ ॥

---

1. *a.* marks verse 33, after इति. 2. *a. d.* प्रत्याचचक्ष, *m.* प्रत्याचचक्षे, *bi. j.* प्रत्याचक्षे; *a. d. m.* omit हि after अन्यमेव. 3. *m.* omits from परिष्वजस्व to एव त्वां, next line. 5. *a. d. m.* omit अधा. 6. Bi. ms. क omits समानेन; *a. d.* संकल्पादि°, *bi. j.* संजल्पादि°. 7. Bi. ms. ख does not read कल्याणभद्राम्; *a. d. m.* उभयलोकाविरोधिनीं etc., *bi. j.* उभयलोकविरो°. 8. *a. d. m.* omit तु; *a. d. m.* माध्यमको. 9. *a. d.* अस्मिन् for अस्मत्. 12. *m.* परस्परसंविदं. With प्रकाशमिति ends the *vritti* on the *third pâda* of the eleventh adhyáya—°मिति ॥ १३(३४) ॥ इति ऋज्वर्थायां निरुक्तवृत्तौ **षोडशस्य** (एकादशस्य) **अध्यायस्य तृतीयः पादः** ॥ ११, ३ ॥. 13. Bi. J. read चतुर्थः पादः । before उर्वशी व्याख्याता; Bi. J. conclude XI. iv. 1 with भवति. 14. *d.* adds उर्वशी व्याख्याता । before उर्वशी वक्तव्या, *bi. j.* do not have it.

---

14. ' उर्वशी '—Nigh. V. 5. 25; व्याख्याता, *i. e.* in Nir. V. 13.
15. ' उर्वभ्यश्नुते ', ' उरुर्वा वशोऽस्याः '—See Nir. V. 13.

"विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि ।
जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥"

विद्युदिव या पतन्त्यद्योतत हरन्ती मे अप्या काम्यान्युदकान्यन्तरिक्षलोकस्य । यदा नूनमयं जायेताद्भ्योऽध्यप इति । नर्यो मनुष्यो नृभ्यो हितो, नरापत्यमिति वा । सुजातः सुजाततरः । अथोर्वशी प्रवर्धयते दीर्घमायुः ॥ 5

पृथिवी व्याख्याता । तस्या एषा भवति ॥ ३६ ॥

**विद्युन्न या पतन्ती**–इति । मध्यमः पुरूरवाः त्रित्वपक्षे ब्रवीति । आत्मनो ज्योतिषः शब्दस्य च विभागमिव कृत्वा । **विद्युन्न विद्युदिव** । संप्रत्यर्थे वा नकारः । किम् इति । **या पतन्ती** गच्छन्त्यन्तरिक्षे मेघोदरेषु **दविद्योत्** पुनःपुनर्द्योतते 10 पुनःपुनरात्मानं प्रति लभते । कथम् **भरन्ती–हरन्ती मे** मम स्वभूतानि **अप्या**–अप्यानि **काम्यानि उदकानि** अन्तरिक्षरमाणानि **अन्तरिक्षलोकस्य** अधिपत्नी या उर्वशी सा **यदैव**मुदकानि हरन्ती मेघेभ्यः पतन्ती भृशं स्वयं विद्योतते **नूनं** निश्चयेन तदा **जनिष्टः अपः**–**अध्यपः** अधिक उदकोर्मिर्जायते यः सर्वमिदमाच्छादयति **नर्यः नृभ्यो हितः** सस्यसंपत्करः । **नरापत्यमिति वा** इत्यैतिहासिकपक्षं द्योतयति । 15 **सुजातः**–**सुजाततरः** शोभनादपि शोभनतरः उदकोर्मिः । **अथ** तेन महतोदको-

7. Bi. J. conclude XI. IV. 2 with भवति; C. wrongly marks the section as ॥३५॥, D. rightly as ॥३६॥. 8. *a.* marks verse 34, after इति. 10. *a. d. m.* द्योतते, *bi. j.* द्योतिते. 11. *d.* लभते for लभते. 11-12. *d.* स्वभूतानि अप्यानि, *m.* स्वभू° अप्या अप्यानि, *bi. j.* स्वभूतानि अप्या आप्यानि. 12. *a. d.* अन्तरिक्षरमाणानि, *bi. j.* अक्षरमाणानि. 13. *d.* यदेवं, *bi. j.* यदैवं. 14. *d.* आपः मध्यमः for अपः अध्यपः of the text. 15. *a. d.* add पथ्यः after हितः. 16. *d.* सुज्ञातनरः and शोभननरः for सुजाततरः and शोभनतरः.

1-2. RS. X. 95. 10.

4. यदा नूनमयम्—These words are not in the *rik*. Yâska understands them.

4. अद्भ्यः, इति—Durga omits these words.

4. नर्यः=मनुष्यः ( Yâska ). Durga does not notice this sense.

र्मिणा सस्यमभिनिष्पाद्य लोकस्यान्नसंप्रदानद्वारेण **प्रोर्वशी तिरते** प्रतिरते **प्रवर्धयते दीर्घमायुः**।

ऐतिहासिकपक्षे त्वैलः पुरूरवाः उर्वश्या अप्सरसा वियुक्तो ब्रवीति। **विद्युदिव या पतन्ती अद्योतत** भृशं वपुष्मत्तया **भरन्ती**–धारयन्ती अनेकानि स्त्रीगतानि 5 हावभावादीनि **काम्यानि** वस्तूनि **मे** मम **अप्या** नित्यमाप्तव्या प्रिया। सा च पुनराहितगर्भा यतः अतो ब्रवीमि। **जनिष्ठो अपः** निश्चयेन जनिष्यते **अध्यपः**–अधिककर्मा **नर्यः नृभ्यो हितः** सम्यक् परिपालयिता नराणाम्। अथवा। मम **नरस्यापत्यमायु**र्नाम राजा यं पुराणविदः कथयन्ति। **सुजातो** मच्छुक्रात् वीर्यवतो जातः विशेषत उर्वश्या क्षेत्रगुणात् **सुजाततरः**। तस्य चावश्य**मुर्वशी** अस्मदसांनि-10 ध्येऽपि **प्रवर्धयते** तद्योग्यैः कर्मभि**र्दीर्घमायु**रिति॥

**पृथिवी** (२६) **व्याख्याता**। 'अथ वै दर्शनेन पृथुः' इत्यत्र। इह तु माध्यमिका। **तस्या एषा भवति** ॥ ३६ ॥

**"बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि।**
**प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि॥"**

15 **सत्यं त्वं पर्वतानां मेघानां खेदनं छेदनं भेदनं बलमत्र धारयसि पृथिवि प्रजिन्वसि या भूमिं प्रवणवति महत्त्वेन महतीत्युदकवतीति वा॥**

**इन्द्राणीन्द्रस्य पत्नी। तस्या एषा भवति॥ ३७॥**

---

1. *a. d.* omit तिरते. 3. *d.* पुरोरुचाः for पुरूरवाः; *a. d. m.* वियुक्तो for वायुक्तो of *bi. j.* 4. *a. d. m.* and *bi.* ms. क read स्त्रीगतानि for स्वर्गतानि of *bi. j.* 13. C. R. Bi. J. have बळित्था, Bi. mss. क, ख, ग read बलित्था. 15. Bi. mss. क, ख, ग do not read भेदनं. 18. Bi. J. conclude XI. iv. 3 with भवति; C. wrongly writes ॥ ३६ ॥, D. has ॥ ३७ ॥.

---

11. 'पृथिवी'—Nigh. V. 5. 26; व्याख्याता, *i. e.* in Nir. I. 13 and 14; 'अथ वै दर्शनेन पृथुः'— See Nir. I. 14.

13–14. RS. V. 84. 1; MS. 4. 12. 2 (बडित्था): 181. 1; TS. 2. 2. 12. 2; KS. 10. 12; ApMB. 2. 18. 9.

15. Durga and Bi. mss. क, ख, ग omit भेदनं.

**वळित्था पर्वतानाम्**-इति । अत्रेरार्षम् । **बळ्** इति **सत्य**नाम । **इत्था** इति अमुत्रेत्यर्थः । हे **पृथिवि** माध्यमिके **सत्यं** यथाभूतम् **अमुत्र** अमुष्मिन्नन्तरिक्षलोके वर्तमाना **खिद्रं-खेदनं छेदनं** येन पर्वताः मेघाः छेत्तुं शक्यन्ते तद् **बलं बिभर्षि-धारयसि** । हे **प्रवत्वति-प्रवणवति**-गमनवति **या त्वं भूमिं प्रजिनोषि-प्रजिन्वसि** वर्षमुत्सृजन्ती **मह्ना-महत्त्वेन** हे **महिनि-महति** । अथवा । **उद्कवति** । या त्वमेवं भूमिं प्रजिन्वसि सा कथं न **मेघानां-पर्वतानां** छेदनसमर्थं बलं धारयिष्यसि । अवश्यं धारयसीत्यभिप्रायः । 5

पृथिवि त्वं भूमिं प्रजिन्वसीति व्यपदेशान्मध्यस्थाना । हिरण्यनाशेष्टयां भौमस्यैककपालस्येयं याज्या । तत्र विज्ञायते ।

"अथ यद्भौमोऽस्यां हि स तदविन्दत्" 10

-इति । तेन तत्रेयं भूमिरिज्यते । न च भूमिरस्यामृचि प्रधानत्वेन वर्तते । यथा चायमाचार्यो निराह तदयमस्योदाहरणाभिप्रायः । स च विनियोगः इति विरोधः । अविरोधमेनयोर्मेधाविनः समनुगंस्यन्ते ॥

**इन्द्राणी** (२७) **इन्द्रस्य पत्नी** । इन्द्रस्य विभूतिः पृथक्त्वेन निर्ज्ञाता पौराणिकैः । **तस्या एषा भवति** ॥ ३७ ॥ 15

**"इन्द्राणीमासु नारिषु सुभगामहमश्रवम् ।**
**नह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥"**

---

1. *a.* marks verse 35, after इति; *d.* सत्यस्य नाम for सत्यनाम. 2. *a. d.* add तु after यथाभूतम्. 3. *m.* omits छेदनं; *d.* मेघाश्छेत्तुं for मेघांश्छेत्तुं of *bi. j.* 4. *a. d. m.* omit प्रजिनोषि. 7. *a. d.* omit धारयिष्यासि अवश्यं. 10. *d.* अथ यद्भौमौस्या हि स etc. 11. *d.* भूमिरज्यते for °रिज्यते; *d.* यथा चार्यमाचार्यो. 12. *a. d.* read विनियोगः इति विरोधः । अविरोधमेनयोर्मेधाविनः समनुगंस्यन्ते, *bi. j.* विनियोगः इत्यविरोधोऽनयोर्मेधाविना समनुगंस्यते. 14. *a.* marks verse 36, after पत्नी; *d. m.* पृथक्त्वे वा for पृथक्त्वेन.

---

1. 'बळ्' इति सत्यनाम—Nigh. III. 10. 1.

9. याज्या तत्र विज्ञायते—See MS. 2. 2. 7: 4. 12. 2; AB. VII. 2. 8.

11-12. Cf. 'यास्कमते भूमिरत्र न प्रधाना, विनियोगे भूमिः प्रधाना । अयं विरोधा विद्वद्भिः परिहर्तव्यः । किं त्वयं दुष्परिहार्यः—Ânandâśram edition, *ṭippaṇî.*

14. 'इन्द्राणी'—Nigh. V. 5. 27; cf. Pâṇini 4. 1. 49.

16-17. RS. X. 86. 11; AV. 20. 126. 11; TS. 1. 7. 13. 1; KS. 8. 17.

**इन्द्राणीमासु नारिषु सुभगामहमशृणवम्। न ह्यस्या अपरामपि समां जरया म्रियते पतिः। सर्वस्माद् इन्द्र य उत्तरस्तमेतद् ब्रूमः। तस्या एषापरा भवति ॥ ३८ ॥**

**इन्द्राणीमासु नारिषु**–इति। वृषाकपेरार्षम्। पङ्क्तिः। पृष्ठयस्य षष्ठेऽहनि
5 ब्राह्मणाच्छंसिनः शस्त्रे विनियोगः। निर्धार्य ब्रवीति। सर्वास्वेव **आसु नारिषु इन्द्राणीम्** एव **अहं सुभगां**–सौभाग्ययुक्तां लक्षणवतीम् **अश्रवम्–अशृणवम्**। केन हेतुना। यत आह। **नह्यस्या अपरं चन। हि** शब्दो हेत्वर्थः। **चने**त्यप्यर्थे। यस्माद्स्याः **अपरामपि समां** संवत्सरं प्रति **न** कदाचिदपि **पतिः म्रियते** नापि जीर्यते यथाऽन्यासां प्राकृतानां नारीणाम्। कतमः पतिः। **विश्वस्मात्–सर्वस्मात्**
10 जगतो **यः इन्द्रः उत्तरः**। योऽयमिन्द्र उद्गततरः। **तमेतम्** इन्द्रमधिकृत्य **ब्रूमः** इत्याचार्यो ब्रवीति। **तस्याः एषा अपरा भवति**। सा पुनः किमर्थम्। ऋषिः एव वृषाकपिः प्रसिद्धः। स पुनरादित्योऽभिप्रेतो नैरुक्तानाम्। तदुपप्रदर्शनायापरामाह ॥ ३८ ॥

**" नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते।**

15 **यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ॥ "**

**नाहमिन्द्राणि रमे सख्युर्वृषाकपेर्ऋते, यस्येदमप्यं हविरप्सु शृत-**

---

1. D. and Bi. mss. ख, ग read नारीषु. 2. D. omits इन्द्र after य, C. as text. 2-3. D. तस्या एषा भवति, C. as text. Bi. J. conclude XI. iv. 4 with अपरा भवति. 3. C. wrongly, ॥ ३७ ॥, D. ॥ ३८ ॥. 4. *a. d.* omit पङ्क्तिः. 6. *d.* omits अशृणवम्. 8. *d.* reads स for न before कदाचिदपि. 10. *a. d.* omit इन्द्रः after यः. 12. *a. d.* omit एव after ऋषिः, *m.* reads ऋषिः स एव and omits वृषाकपिः प्रसिद्धः. 16. Bi. mss. क, ग read श्रितं for शृतं of Bi. J.

---

2. तमेतद् ब्रूमः—Durga reads एतम् ( see line 10, below ) for एतद्.

5. विनियोगः—See Âśva. Śrau. 8. 3.

14-15. RS. X. 86. 12; AV. 20. 126. 12.

**मद्भिः संस्कृतमिति वा प्रियं देवेषु निगच्छति। सर्वस्माद् य इन्द्र उत्तरस्तमेतद् ब्रूमः॥**

**गौरी रोचतेर्ज्वलतिकर्मणः। अयमपीतरो गौरो वर्ण एतस्मादेव। प्रशस्यो भवति। तस्या एषा भवति॥३९॥**

**नाहमिन्द्राणि**-इति। समानो विनियोगः पूर्वया, आर्षं च। इन्द्रो ब्रवीति। 5
विभक्तामिवेन्द्राणीमात्मनः कृत्वाह। **नाहमिन्द्राणि रारण। न रमे अहम्। सख्युर्वृषाकपेर्ऋते।** य एष मम सखा वृषाकपिः तस्मादृते। किं योऽयमृषिर्मनुष्येषु प्रसिद्धः। नेत्युच्यते। **यस्येदमप्यं हविः। अप्सु शृतं** चरुपुरोडाशादि वा। **अद्भिः संस्कृतमिति वा।** सोऽस्य मे **प्रिय** इष्टः सर्वेष्वपि **देवेषु।** निर्धार्यो-च्यते यस्य विशेषतो **गच्छति। विश्वस्मात्-सर्वस्मात्** अपि जगतो योऽहम् 10
**इन्द्रः उत्तरः** उद्गततरः सोऽप्यहमेवं ब्रवीमीति॥

**गौरीः** (२८) **रोचतेः जलत्यर्थस्य।** माध्यमिका वाक्। सा पुनः दीप्तिमती। **अयमपीतरः** यो **गौरो वर्णः** सोऽपि **एतस्मादेव** रोचतेः। स हि दीप्तिरूपत्वात कृष्णादीनपेक्ष्य **प्रशस्यो भवति। तस्या एषा भवति॥ ३९॥**

**"गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी। 15
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्॥"**

---

1. Durga reads गच्छति for निगच्छति; D. omits इन्द्र after सर्वस्माद् य. 4. Bi. J. conclude XI. iv. 5 with भवति; C. wrongly ॥३८॥, D. ॥३९॥ 5. *a.* marks verse 37, after इति; *m.* आर्षं तु, *bi.* आर्षं च. 12. *a. d.* ज्वलती( *d.* ति )त्यर्थस्य. 13. *m.* omits यो. 14. *m.* omits तस्या एषा भवति

---

11. **सोऽप्यहमेवं ब्रवीमि**—This is Durga's reading for तमेतद् ब्रूमः ( line 2 above ).

12. 'गौरीः'—Nigh. V. 5. 28.

15. सा—Yâska omits this word.

15–16. RS. I. 164. 41; cf. AV. 9. 10. 21; TB. 2. 4. 6. 11; TA. 1. 9. 4; AA. 1. 5. 3. 8.

**गौरीर्निर्मिमाय सलिलानि तक्षती कुर्वत्येकपदी मध्यमेन, द्विपदी मध्यमेन चादित्येन च, चतुष्पदी दिग्भिरष्टापदी दिग्भिश्चावान्तरदिग्भिश्च, नवपदी दिग्भिश्चावान्तरदिग्भिश्चादित्येन च। सहस्राक्षरा बहूदका, परमे व्यवने। तस्या एषापरा भवति ॥ ४० ॥**

5 **गौरीर्मिमाय**–इति। अस्यवामीये दीर्घतमस आर्षम्। **गौरी** सर्वमिदं निर्मिमीते। कथम्। **सलिलानि तक्षती–कुर्वती**। उदकपूर्वकत्वात् सर्वनिर्माणस्य। कथमुदकानि कुर्वती। **एकपदी बभूवुषी** एकपदी भवति **मध्यमेन** सहैकत्वमापन्ना। **द्विपदी मध्यमेन चादित्येन च। चतुष्पदी दिग्भिः** अनपेक्ष्येन्द्रादित्यौ। **अष्टापदी दिग्भिश्चावान्तरदिग्भिश्च। नवपदी दिग्भिश्चावान्तरदिग्भिश्च**
10 सह **आदित्येन च। सहस्राक्षरा–बहूदका परमे व्योमन्–व्यवने।** विभक्तानां भूतानां यत्परममवनमेकं सर्वभावानामविभक्त एक आत्मा यस्तदात्मनैवंभूता सलिलनिर्माणद्वारेण सर्वमिदं निर्मिमीते।

**तस्याः एषा अपरा भवति।** सा पुनः किमर्थम् इति। गौरीति गुणाभिधानमप्रसिद्धाभिधेयं छन्दसि देवतायाम्, यतः परया समर्थयति ॥ ४० ॥

15 **"तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः।**
**ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ॥"**

**तस्याः समुद्रा अधिविक्षरन्ति। वर्षन्ति मेघाः। तेन जीवन्ति**

---

1. Bi. mss. क, ग read मध्येन for मध्यमेन. 4. Bi. J. conclude XI. iv. 6 with अपरा भवति; C. D. ॥ ४० ॥. 5. *a.* marks verse 38, after इति. 6. *a. d.* उदकपूर्वत्वात्. 7. *a. d.* भवती probably भवन्ती, for भवति of *bi. j.* 9. *a. d. m.* omit च before नवपदी; *d.* omits from नवपदी to °दिग्भिश्च. 10. *a. d. m.* omit व्योमन्. 11. *a. d.* तदात्मनैवंभूता सलिल°, *bi. j.* तदात्मनैव भूतानां सलिल°. 14. *d.* असिद्धाभिधेयछंदसि for अप्रसिद्धा°; *a. d.* समर्धयते for समर्थयति of *bi. j.*

---

1. **निर्मिमाय**—Omitted by Durga.
15-16. RS. I. 164. 42; AV. 9. 10. 22; 13. 1. 42.

दिगाश्रयाणि भूतानि । ततः क्षरत्यक्षरमुदकम् । तत्सर्वाणि भूतान्युपजीवन्ति ॥

गौर्व्याख्याता । तस्या एषा भवति ॥ ४१ ॥

**तस्याः समुद्रा अधि वि क्षरन्ति**-इति । अलिङ्गो मन्त्र इति चेत् तस्या इत्येतदेव लिङ्गमन्वादिश्यते संबन्धाद्वचोः । तस्मान्नालिङ्गः । **तस्याः** गौर्याः **अधि**- 5 सकाशात् **समुद्राः**-मेघाः **अधिविक्षरन्ति**-वर्षन्ति । **तेन** उदकेन **जीवन्ति प्रदिशः चतस्रः** । दिक्प्रतिदिङ्निवासीनि **भूतानि** तेन जीवन्ति । **ततः क्षरत्यक्षरम्** । पुनः पुनः प्रतिसंवत्सरं तत एव क्षरत्युदकं मेघद्वारेण । **तत् विश्वं**-भूतजातं **उपजीवति** । एवं सैव सर्वोदकेशाना गौरीत्यभिप्रायः । **उदकम्-अक्षरम्** इत्युच्यते । तत्कस्मात् । तद्धि सर्वमिदमभिव्यञ्जयत् **क्षरति** । सर्वमिदं 10 सचराचरं संचरति ॥

गौः (२९) व्याख्याता । तस्याः एषा भवति ॥ ४१ ॥

"गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उं ।
सृक्काणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ॥"

गौरन्वमीमेद् वत्सं निमिषन्तमनिमिषन्तमादित्यमिति वा । मूर्धानमस्याभिहिङ्ङकरोन्मननाय । सृक्काणं सरणं घर्मं हरणमभिवावशाना 15

3. Bi. J. conclude XI. iv. 7 with भवति; C. D. ॥ ४१ ॥. 4. *a.* marks verse 39, after इति, as °न्तीति[३९]. 7. *m.* प्रतिदिशः, for प्रदिशः; *m.* तानि for तेन; *a. d.* जीवन्ति for जीवन्ती of *bi. j.* 7-9. *m.* omits from ततः क्षरति to उपजीवति. 8. *a.* only omits one पुनः. 9. *a. d.* उपजीवंति for उपजीवति. 11. *d.* omits सचराचरं and reads संचरंति ? 15. Durga has मिषन्तमनिमि° for निमिषन्तमनिमि° of the *bhâṣya.*

1-2. Durga omits **दिगाश्रयाणि** and **सर्वाणि भूतान्युपजीवन्ति.**

12. 'गौः'—Nigh. V. 5. 29; व्याख्याता, *i. e.* in Nir. II. 5.

13-14. I. 164. 28; cf. AV. 9. 10. 6.

15-16. The following words in the *bhâṣya* are not repeated by Durga in his *vritti*:—**इति वा** (line 15), **अभिहिङ्ङकरोत्**, **मननाय** (line 16), and **इति याज्ञिकाः** (line 2, next page).

**मिमाति मायुं, प्रप्यायते पयोभिः। मायुमिवादित्यमिति वा। वागेषा माध्यमिका। घर्मधुगिति याज्ञिकाः॥**

**धेनुर्धयतेर्वा धिनोतेर्वा। तस्या एषा भवति॥४२॥**

**गौरमीमेत्**-इति। दीर्घतमस आर्षम्। महाव्रते विनियोगः। **गौः माध्यमिका**
5 **वाक् वत्सं** पुत्रम् **अन्वमीमेत्**-अनुशब्दयति महद्भिः स्तनयित्नुशब्दैः **आदित्यम्**। स हि तस्या रसहरणाद् वत्सः। **मिषन्तम्-अनिमिषन्तम्**-अव्यवहितदर्शनं सर्वदा। अपि च। **मूर्धानं** शिरोरश्मीन् **अस्य** मध्यस्थानप्राप्तं प्राप्य **हिङ्ङकृणोत्** हिंकारेणोपशब्दयति। **मातवै**-सर्वलोकज्ञानाय उदकानां **सृक्वाणं-सरणम्** अनवस्थायिनमादित्यं **घर्मं-हरणं** रसानाम्। **अभिवावशाना** पुनः पुनः वाश्यमाना
10 वाशन्ती प्रतिसंवत्सरमेव **मिमाति मायुं** शब्दं करोति **पयते-प्रप्यायते** च प्रकर्षेण वर्धते **पयोभिः** उदकैः।

**घर्मधुक्**पक्षे। गौरेव **गौः अन्वमीमेत्**-अनुशब्दयति वत्समेव **वत्सं मिषन्तं** तमेवोन्मुखं पश्यन्तम्। अपि च प्राप्य **मूर्धानम् अस्य** उपघ्राय हिङ्ङित्येवं शब्दं करोति। स हि गोः स्वभावः। **मातवै** कथं नामायं मां जानीयात् माता ममेयमिति।
15 **सृक्वाणं** तामेव प्रत्यभिमुखं **सरणं घर्मं हरणं** पयसाम्। **अभिवावशाना**

2. च, a ms. of Bi. reads माध्यमका. 3. Bi. J. conclude XI. iv. 8 with भवति. 4. *a.* marks verse 40, after इति. 5. *a. d. m.* omit वत्सं. 7. *m.* मध्यस्थानं प्राप्तं प्राप्य. 8. *d.* सृत्काणां; Bi. ms. क reads अनुस्थायिन°. 9. *d.* वावश्यमाना for वाश्यमाना. 10. *a. d.* omit वाशंती; *a. d. m.* omit पयते; *d.* reads प्राप्ययते for प्रप्यायते. 13. *a. d.* एवमपि च प्रा° for अपि च प्रा°. 15. *a. d.* omit घर्मं.

1–2. Durga omits मायुमिवादित्यमिति वा वागेषा माध्यमिका. It is not required here. See Nir. II. 9, where it occurs.

2. घर्मधुक्—'घर्मार्थं या पयो दुग्धे सा घर्मधुक्। घर्म इति दर्शयागार्थस्य पयसो नाम' —Ânandâśrama edition.

4. विनियोगः—Cf. Ait. Âr. 5. 3. 2.

6, 12. मिषन्तम्—The Dhâtupâṭha gives a different sense to the root मिष्. Cf. 'मिष स्पर्धायाम्' Dhâtup. 6. 71.

15. अभिवावशाना—Cf. 'वाशृ शब्दे' Dhâtup. 4. 57.

पुनः पुनर्वाश्यमाना प्रत्यहमेव शब्दं करोति **प्रप्यायते** च **पयोभिः** वत्सम्। अस्मांश्च या वर्धयति सा नित्यमेवमस्त्विति ॥

**धेनुः** (३०) **धयतेः वा।** भयतेऽसौ वत्सेनेति। **धिनोतेः वा।** तर्पयत्यसौ उदकेन पयसा वा। **तस्याः एषा भवति** ॥ ४२ ॥

**"उप॑ ह्वये सु॒दुघां॑ धे॒नुमे॒तां सु॒हस्तो॑ गो॒धुगु॒त दो॑हदेनाम्।** 5
**श्रेष्ठं॑ स॒वं स॑वि॒ता सा॑विषन्नो॒ऽभी॑द्धो घ॒र्मस्तदु॒ षु प्र वो॑चम्॥"**

**उपह्वये सुदोहनां धेनुमेतां, कल्याणहस्तो गोधुगपि च दोग्ध्येनाम्। श्रेष्ठं सवं सविता सुनोतु न इति। एष हि श्रेष्ठः सर्वेषां सवानां यदुदकं, यद्वा पयो यजुष्मत्। अभीद्धो घर्मस्तं सु प्रब्रवीमि। वागेषा माध्यमिका। घर्मधुगिति याज्ञिकाः ॥** 10

---

1. *a. d. m.* read पुनर्वावश्यमाना, *bi.* ms. च and others वाश्यमाना. 3. *a. d.* धीयतेर्वासौ, *bi. j.* धयतेऽसौ, *m.* धीयतेसौ; *a. d.* omit तर्पयति. 7. Mss. क, ख, ग of Bi. and Durga read सुदुघां, Bi. J. R. सुदोहनां; Â. and Durga have दोग्धु, Bi. J. दोग्धि. 8. Bi. J. R. D. सवानां, C. सवनानां.

---

3. 'धेनुः'—Nigh. V. 5. 30. Cf. 'धेट् पाने' Dhâtup. I. 927, and 'धिवि प्रीणने' Dhâtup. 1. 594.

5-6. RS. I. 164. 26; AV. 7. 73. 7; 9. 10. 4; Cf. AB. 1. 22. 2; AŚ. 4. 7. 4.

7. सुदोहनाम्—Durga and Bi. mss. क, ख, ग read सुदुघां (page 1090, line 3) for सुदोहनां of the *bhâṣya*.

7. दोग्ध्येनाम्—Durga's reading is दोग्धु for दोग्धि (page 1090, lines 5 and 10). Durga reads एतां, for एनां of the bhâṣya, see page 1090, line 4.

8. सुनोतु—Durga has सनोतु (page 1090, line 7) and सुनोतु (page 1090, line 11).

8. Durga omits न इति, एष हि श्रेष्ठः सर्वेषां सवानां यदुदकम्, and यद्वा. एष हि श्रेष्ठः etc. seems to be a quotation from some *Brâhmaṇa* work. Durga does not explain it.

9-10. सुप्रब्रवीमि, वागेषा माध्यमिका, and घर्मधुगिति याज्ञिकाः—are not repeated by Durga in his *vritti*.

**अघ्न्याहन्तव्या भवति । अघघ्नीति वा । तस्या एषा भवति ॥ ४३ ॥**

**उप ह्वये सुदुघाम्**-इति । पूर्वयैव समानार्षं विनियोगश्च । उपगम्य मनसा **ह्वये**-आह्वयेऽहं स्तुतिभिः । **सुदुघां** कल्याणमुदकं या दुग्धे तां **धेनुं** तर्पयित्रीं सर्वलोकस्य **एतां** माध्यमिकां वाचम् । **उत अपि च** । मयैतामुपहूतां **सुहस्तः**-
5 **कल्याणहस्तः गोधुक्** इन्द्रः **दोग्धु** प्रक्षारयतूदकानि । अमुना प्रकारेण **श्रेष्ठम्** अतिशयेन प्रशस्यमेतं **सवम्** उदकं **सविता** योऽयम् **अभीद्धः घर्मः** मध्यस्थानो विद्युदाख्यः स **साविषत्** स **सनोतु** नित्यं ददात्विति **तं सुष्ठु** प्रब्रूमः ।

**घर्मधुक्**पक्षे । धेनुरेव धेनुः । तामुपह्वये **सुदुघां**-सुदोहां **धेनुमेताम्** अस्मिन् कर्मणि अङ्गभावमुपगताम् । होता ब्रवीति । मया चैवमुपहूतां **सुहस्तः गोधुक्**-
10 अध्वर्युः **अपि च दोग्ध्वेनाम्** । **श्रेष्ठम्** अतिशयेन प्रशस्यम् एतं **सवम्** एतत् **यजुष्मत् पयः साविषत्-सुनोतु**-अभ्यनुजानातु **सविता** । यद्धि सवित्रा प्रसूतं क्रियते तदेव साधु भवति । **अभीद्धः** एष **घर्मः** रुचितो महावीरः । **तमधिकृत्य** प्रब्रूमः । आहरैतस्मिन् पय आसेचनाय इति ॥

**अघ्न्या** (३१) कस्मात् । सा हि सर्वस्यैव **अहन्तव्या भवति । अघघ्नीति**
15 **वा** । सा हि पापं हन्ति । यदि वाग् यदि गौः । **तस्याः एषा भवति** ॥ ४३ ॥

**" सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम ।**
**अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥ "**

1. Bi. J. conclude XI. iv. 9 wtih भवति. 2. *a.* marks verse 41 after इति. 3. *a. d. m.* omit ह्वये. 4. *a. d.m.* omit उत. 5. *a. d.* दोग्धु. 6. *a.* only reads एनं for एतं; *a. d.* omit सविता. 7. *a. d.* असाविषत् for स साविषत्. 8. *m.* धेनुरिव धेनुः. 10. Durga reads दोग्ध्वेनाम् for दोग्ध्येनाम् of the bhâṣya. 10–11. Bi. ms. क has एतद् यजुष्मत्सरः. 11. *m.* साविषत् स सुनोतु नित्यं अ० 13. *a.* only reads आसेवनाय for आसेचनाय.

14. 'अघ्न्या'—Nigh. V. 5. 31.

16–17. RS. I. 164. 40; AV. 7. 73. 11; 9. 10. 20; KS'. 25. 1. 19; ApS'. 9. 5. 4.

**सुयवसादिनी भगवती हि भव । अथेदानीं वयं भगवन्तः स्याम । अद्धि तृणमघ्न्ये, सर्वदा पिब च शुद्धमुदकमाचरन्ती । तस्या एषापरा भवति ॥ ४४ ॥**

**सूयवसात्**–इति । पूर्ववदार्षम् । माध्यमिका वागुच्यते । शोभनं यवसमुदकमध्यात्मीकृत्य सूर्यात्, तेन **भगवती**–धनवती उदकेन उदकवती **भव** । **अथ** पुनः **इदानीम्** 5 एव त्वयि भगवत्यां **वयम**पि त्वदुत्सृष्टेनोदकेन **भगवन्तः**–धनवन्तः **स्याम** । सा च पुनरेवं प्रतिसंवत्सरम् **अद्धि तृणं**–मेघम् । तृद्यतेऽसाविति तृणः । तम् **अद्धि**–संचूर्णय । **विश्वदानीं–सर्वदा** यथाकालं **पिब च** सूर्यरश्म्युपहृतम् **उदकम् आचरन्ती**–आसेवन्ती **शुद्धम्**–अकलुषं, सर्वतो मध्यस्थाने चरन्ती ।

घर्मधुक्पक्षे । यवसमेव यवसम् । तज्जग्ध्वा पयस्विनी **भव** । वयमपि च ततः 10 त्वत्प्रत्तेन पयसा धनवन्तः स्याम । या त्वमस्माकमेवमुपकारिणी सा त्वं नित्य**मद्धि तृणमघ्न्ये । विश्वदानीं** नित्यकालं **पिब च शुद्ध**मकलुष**मुदकमाचरन्ती**–आसेवन्ती आ सर्वतो यथाकाममरण्ये चरन्ती ।

**तस्या एषा अपरा भवति** । सा पुनः किमर्थम् । रूपतो हि पूर्वस्मिन्मन्त्रे घर्मधुक् सुतरामुपपद्यते । यतः परया वसुभिर्देवैः संबन्धात् माध्यमिकैव देवतेत्युपपादयति ॥४४॥ 15

**"हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् ।**
**दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥"**

**इति सा निगदव्याख्याता ॥**

---

1. D. omits वयं, C. R. read as text. 3. Bi. J. conclude XI. iv. 10, with अपरा भवति. 4. *a.* marks verse 42, after इति. 5. *a. d.* अथवा for अथ पुनः. 7. *a. d.* संवत्सरंप्रतिना for प्रतिसंवत्सरम्. 10. *a. d.* omit ततः. 11. *d.* appears to read च between या and त्वम्. 12. *m.* विश्वादानीं. 13. *d.* reads सेवंती for आसेवन्ती.

---

1. Durga does not repeat the following words :—**सुयवसादिनी** and **हि**. The ms. D. omits **वयं**.

17–18. RS. I. 164. 27; AV. 7. 73. 8; 9. 10. 5.

19. इति सा निगदव्याख्याता—As usual this is neither repeated nor explained by Durga in his *vṛitti*.

**पथ्या स्वस्तिः । पन्था अन्तरिक्षं तन्निवासात् । तस्या एषा भवति ॥ ४५ ॥**

**हिंकृण्वती**–इति । पूर्ववदार्षादि । **हिङ्** इत्येवंप्रकारं शब्दं स्तनयित्नुं कुर्वती **वसुपत्नी** वसूनामुदकानामीश्वरा । **वसूनां** वा आदित्यरश्मीनां मरुतां वा । **वत्सं**
5 वत्स आदित्यो मध्यस्थानो वा । रसहरणात् वत्सः तम् **इच्छन्ती मनसा** या माध्यमिका वाक् नित्यम् **अभ्यागात् सा इयम् अश्विभ्याम्**–द्यावापृथिवीभ्यां सूर्याचन्द्राभ्यां वा वर्षाय **दुहाम्**–दुग्धाम्–प्रक्षरताम् **पयः**–उदकम् । अमुना प्रकारेण प्रतिसंवत्सरं **वर्धताम्** उदकेनास्माकं **महते सौभगाय** । यथा महत्सौभाग्यं धनवत्त्वं स्यात् तथा वर्धतामिति ॥

10 **पथ्या** (३२), **स्वस्तिः** (३३)–इति वक्तव्यम् । अत्र पूर्वपदं **पन्थाः–अन्तरिक्षं तन्निवासात्** पथ्या । स्वस्तिः इत्युक्तं निर्वचनम् । यथा प्रायणीयायां यजतिप्रयोगो दृष्टः तथा समाम्नातः

"पथ्यां स्वस्तिं पूर्वां यजति"

–इति । **तस्याः एषा भवति** ॥ ४५ ॥

15 **"स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति ।**
**सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा ॥"**

---

1. C. पथ्याः (?) स्वस्ति, others पथ्या स्वस्ति. 2. Bi. J. conclude XI. iv. 11 with भवति. 3. *a.* marks verse 43, after इति; *d.* इत्येवंप्रकारशब्द. 4. *a. d. m.* omit वत्सं. 7. *a. d.* omit वा before वर्षाय; *a. d. m.* omit पयः. 9. *a. d.* add वर्तयामेति after वर्धतामिति? 13. *a. d.* पूर्वार्धे for पूर्वां. 15. Bi. mss. क, ख read रेक्तस्वत्यभि, Bi. J. रेक्णस्वत्यभि.

---

10. 'पथ्या' and 'स्वस्ति'—Nigh. V. 5. 32 and 33.

11. उक्तं निर्वचनम्—Nir. III. 21.

13. 'पथ्यां स्वस्तिं पूर्वां यजति'—*Cf.* MS. 3. 7. 1; TS. 6. 1. 5; S'B. 3. 2. 3. 8.

15-16. RS. X. 63. 16.

**स्वस्तिरेव हि प्रपथे श्रेष्ठा रेक्णस्वती धनवत्यभ्येति या वसूनि वननीयानि । सा नोऽमा गृहे सा निरमणे सा निर्गमने पातु । स्वावेशा भवतु । देवी गोप्त्री देवान् गोपायत्विति । देवा एनां गोपायन्त्विति वा ॥**

**उषा व्याख्याता । तस्या एषा भवति ॥ ४६ ॥**

**स्वस्तिरिद्धि**–इति । वसुकर्णस्यार्षम् । **इत्** इत्यवधारणार्थे । **स्वस्तिः एव हि** 5
**प्रपथे**–अन्तरिक्षे **श्रेष्ठा**–प्रशस्या सर्वदेवताभ्यः । **रेक्णस्वती–धनवती** उदकेन ।
**अभि या वाममेति । या वननीयानि** उदकानि नित्यम् **अभ्येति** । तस्याः किम्
इति । **सा नः** सा अस्मान् **अमा** । अमेति गृहनाम । **गृहे** वसतः **अरणे**–अरण्ये च
**निर्गमने** च बहिर्गृहात् **पातु** रक्षतु । **स्वावेशा**–सूपचरणा **भवतु** अस्माकम् ।
**देवगोपा देवी** चासौ **गोप्त्री** चेति देवगोपा । **देवान् गोपायत्विति, देवा** 10
**एनां गोपायन्त्विति वा** । दातृनस्मान् किं सर्वस्मात् हविषो गोपायतु । अथवा ।
देवा माध्यमिका द्युस्थाना वा रश्मयः एनां गोपायन्त्विति वा ॥

**उषाः (३४) व्याख्याता । तस्याः एषा भवति** ॥ ४६ ॥

**" अपोषा अनसः सरत्संपिष्टादह बिभ्युषी ।**

**नि यत्सीं शिश्नथद्वृषा ॥ "** 15

---

1. Bi. mss. क, ख have रेक्तस्वती, Bi. J. R. रेक्णस्वती. 3. D. reads देवगोप्त्री for देवी गोप्त्री of C. Bi. J. and R. 4. Bi. J. conclude XI. iv. 12 with भवति. 5. *a.* marks verse 44, after इति. 6. *m.* रेक्णस्वस्ती. 7. *a.* omits नित्यम्; *bi. j. m.* as text. 9. *d.* निर्गमणे for निर्गमने; *a. d.* omit च after निर्गमने. 10-12. *m.* °गोपा । देवान् गोपयत्विति वा । दातृनस्मान् किं etc., *a. d.* read °गोपा । देवान् दातृनस्मान् गोपायत्विति वा । हविषो गोपायतु । अथवा देवा etc., *d.* adds देवा before देवान्. 10-11. *m.* omits देवा एनां गोपायन्त्विति वा.

---

1-2. Durga omits **वसूनि** and **निरमणे.** He does not also explain the latter.

2. वननीयानि—*Cf.* ' वन संभक्तौ ' Dhâtup. 1. 464.

8. अमेति गृहनाम—See Nigh. III. 4. 11.

13. ' उषाः '—Nigh. V. 5. 34. व्याख्याता, i. e. in Nir. II. 18.

14-15. RS. IV. 30. 10.

**अपासरदुषा अनसः संपिष्टान्मेघाद् विभ्युषी । अनो वायुरनितेः अपि वोपमार्थे स्यादनस इव शकटादिव । अनः शकटमानद्धम-स्मिंश्चीवरम् । अनितेर्वा स्याज्जीवनकर्मणः । उपजीवन्त्येनत् ।**

**मेघोऽप्यन एतस्मादेव । यन्निरशिश्नथद्वृषा वर्षिता मध्यमः । तस्या 5 एषापरा भवति ॥ ४७ ॥**

**अपोषा अनसः सरत्**–इति । वामदेवस्यार्षम् । परा च । **अपासरत् उषाः**। अपासर्पत् । कुतः । **अनसः**–वायोः । यदा संपिनष्टि वायुर्मेघान् तदा तन्निवासिन्युषाः मामप्ययं हनिष्यतीति बिभ्यत्यपसरति । **नि यत्सीं शिश्नथत्** । यदा **निरशिश्न-थत्**–निर्जघान–निर्हन्ति **वृषा** वर्षिता वायुः तदा अपासरदुषाः ।

10 **अनो वायुः अनितेः** धातोः प्राणनार्थस्य । **अपि वोपमार्थे स्यात्** । **अनस इव शकटात्** । यथा शाकटिकः शकटात् केनचित् संपिष्यमाणादपसर्पेत् एवं वायुना संपिष्यमाणात् मेघादपासरदुषाः इति द्वितीया कल्पना ।

**तस्याः एषा अपरा भवति** । सा पुनः किमर्थम् । उत्तमापि ह्युषाः आदित्य-संश्रयाद्भवति । इयं तु मध्यमा मेघसंश्रया वायोरेव संस्तवादिति मध्यमास्वभावप्रायो-15 वृत्त्युपप्रदर्शनार्थम् ॥ ४७ ॥

---

1. Bi. ms. ख reads संपिष्टान्मेघान्. 3–4. Bi. mss. क, ख, ग have उपजीवन्त्येनं मेघो. 5. Bi. J. conclude XI. iv. 13 with अपरा भवति. 6. *a.* marks verse 45, after इति. 7. *a. d. m.* read मेघं for मेघान्.

---

1. **संपिष्टात् मेघात् बिभ्युषी**—Durga does not repeat these words in his *vritti* but he gives the substance of them.

1. अनो वायुरनितेः—This is the only etymology of '*anas*' which Durga touches in his *vritti*. He takes no notice of others given in the text.

2–4. The passage **अनः शकटम्......एतस्मादेव ।** is omitted by Durga.

3. अनितेर्वा स्याज्जीवनकर्मणः—Cf. 'अन प्राणने' Dhâtup. 2. 60.

4. **यत्**—Durga omits यत्.

"एतदस्या अनः शये सुसंपिष्टं विपाश्या ।
ससार सीं परावतः ॥"

एतदस्या अन आशेते सुसंपिष्टमितरदिव । विपाशि विमुक्तपाशि । ससारोषाः परावतः प्रेरितवतः परागताद्वा ॥

इळा व्याख्याता । तस्या एषा भवति ॥ ४८ ॥ 5

**एतदस्या अनः शये**–इति । विशीर्णमुदकभावेन पृथिवीं संक्लेद्यावस्थितं दर्शयन् ब्रवीति मेघम् । **एतत् अस्याः** उषसः **अनः** मेघाख्यमाश्रयभूतं **सुसंपिष्टं** सुष्ठु संचूर्णितं वायुना **इतरदिव** शकटानः **विपाशि** छिन्नसर्वपाशबन्धनम् । **आ-शये–आशेते** आतत्य पृथिवीं शेते आस्ते । यतः संपिष्यमाणात् **ससार** माध्यमिका **उषाः परावतः** दूराद्दूरतरं ननाशेति ॥ 10

**इळा** (३५) **व्याख्याता** 'ईट्टेः स्तुतिकर्मणः'–इति । **तस्या एषा भवति** ॥४८॥

"अभि न इळा यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु ।
उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः ।"
"सिषक्तु न ऊर्जव्यस्य पुष्टेः ॥"

---

1. Bi. ms. च and R. read अनं शये. 3. Bi. ms. क has विपाशि मुक्त पाशि. 5. C. इळा व्याख्याता, Bi. mss. क, ख, ग and Bi. J. R. इला व्याख्याता; Bi. J. conclude XI. iv. 14 after भवति. 6. *a.* marks verse 46, after इति. 8. *m.* सुष्टु. 8–9. *a. m.* omit आ शये. 11. Bi. *j.* इला व्याख्याता. 12. Bi. mss. क, ख, ग and J. read अभि न इलां, Bi. and R. अभि न इळां.

---

1–2. RS. IV. 30. 11.
3–4. **विमुक्तपाशि,** and **प्रेरितवतः परागताद्वा** are omitted by Durga.
11. 'इळा'—Nigh. V. 5. 35: व्याख्याता, i. e. in Nir. VIII. 7.
12–13. RS. V. 41. 19; *cf.* Brh. D. V. 37.
14. सिषक्तु न ऊर्जं°—RS. V. 41. 20.

**अभिगृणातु न इळा यूथस्य माता सर्वस्य माता, स्मदभि नदीभि-रुर्वशी वा गृणातु । उर्वशी वा बृहद्दिवा महद्दिवा गृणानाभ्यूर्ण्वाना, प्रभृथस्य प्रभृतस्यायोरयनस्य मनुष्यस्य ज्योतिषो वोदकस्य वा सेवतां नोऽन्नस्य पुष्टेः ।**

5 **रोदसी रुद्रस्य पत्नी । तस्या एषा भवति ॥ ४९ ॥**

**अभि न इळा**–इति । अत्रेरार्षम् । शक्वरी । **अभिगृणातु**–अभिशब्दयतु अस्मान् । कासौ । **इळा** । किंलक्षणा । **यूथस्य माता** मेघयूथस्य निर्मात्री मध्यमा । केनाभि-गृणातु । **नदीभिः**–नदनाभिः अद्भिः । **उर्वशी वा** । उर्वशीति वा योच्यते इडेति वा सा **गृणातु नः** अस्मानिति अभिस्तनयतु । **उर्वशी वा बृहद्दिवा गृणाना** । 10 उपमार्थे वा **वा**शब्दः भेदापेक्षया । **उर्वशीव बृहत्–महत् गृणातु दिवा**–द्योतनवता विद्युत्सहितेनोदकसमूहेन **गृणाना**–शब्दयन्ती । **अभ्यूर्ण्वाना** सर्वमिद-मभिप्रच्छादयन्ती **प्रभृथस्य–प्रभृतस्य** प्रकर्षेण संभृतस्य **आयोः–अयनस्य**

---

1. Bi. J. R. आभिगृणातु न इला; Bi. mss. क, ख, ग omit माता सर्वस्य, and read as यूथस्य माता स्मदभि; Bi. J. R. C. read यूथस्य माता सर्वस्य माता सदभि. 3. Bi. C. and R. अयनस्य मनुष्यस्य ज्योतिषो, Bi. mss. क, ख, ग omit मनुष्यस्य; J. adds another मनुष्यस्य after मनुष्यस्य and reads as अयनस्य मनुष्यस्य मनुष्यस्य ज्योतिषो. 5. Bi. J. conclude XI. iv. 15 with भवति. 6. Bi. इळा, *j. m.* इलां; *a.* marks verse 47 after इति; *a. d.* अभिगृणातु इति अभि°, *bi. j.* अभिगृणातु अभि°. 7. Bi. इळा, *j. m.* इला; *m.* माध्यमा. 9. *a. d. m.* omit नः. 10. *d.* उर्वश्यर्थे, *bi. j.* उपमार्थे, *m.* उपमार्थो. 11. *a. d.* omit गृणाना शब्दयन्ती. 12. *a. d. m.* omit प्रभृथस्य.

---

1. Bi. mss. क, ख, ग omit **माता सर्वस्य** after यूथस्य.

1. Durga does not explain the particle स्मत्; nor does he repeat it in his vritti.

3. Bi. mss. क, ख, ग and Durga omit **मनुष्यस्य.**

3–4. Durga omits **ज्योतिषो वा,** and the **वा** after उदकस्य; *cf.* Nir. X. 41 ‘ आयोः अयनस्य मनुष्यस्य ज्योतिषो वा उदकस्य वा ’ and his gloss on it.

10. Durga separates बृहत् from दिवा but the *padapâtha* of the Ṛgveda treats बृहद्ऽदिवा as one word. We cannot know whether Yâska takes it as one compound word or as two separate words.

10. Durga reads गृणातु for गृणाना in the bhâsya.

गमनशीलस्य **उदकस्य** समूहेन **सिषक्तु-सेवताम् नः** अस्मान् **ऊर्जव्यस्य पुष्टेः** यवादेः **अन्नस्य** पोषणाय ॥

**रोदसी** (३६) **रुद्रस्य पत्नी** रुद्रस्य विभूतिः । **तस्याः एषा भवति** ॥४९॥

**"रथं नु मारुतं वयं श्रवस्युमा हुवामहे ।**
**आ यस्मिन् तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी ॥"** 5

**रथं क्षिप्रं मारुतं मेघं वयं श्रवणीयमाह्वयामह आ यस्मिन्तस्थौ सुरमणीयान्युदकानि बिभ्रती सचा मरुद्भिः सह रोदसी रोदसी ॥५०॥**

**रथं नु मारुतम्**-इति । श्यावाश्वस्यार्षम् । आग्निमारुते विनियोगः । स्तोता ब्रवीति । **नु-क्षिप्रं वयं रथम् आहुवामहे-आह्वयामहे मारुतं**-मरुत्संयुक्तं **श्रवस्युं-श्रवणीयं** यशस्विनम् । यस्मिन् किम् इति । **आ यस्मिन् तस्थौ** ।10 यस्मिन्नातिष्ठति रंहणे गमने **रोदसी सचा सह मरुत्सु मरुद्भिः** सहिता मरुद्भिः ।

---

1. *a. d.* omit सिषक्तु and नः. 3. *m.* रुद्रपत्नी. 6. Bi. mss. क, ख, ग omit मेघं; Bi. mss. क, ख, ग read आह्वयामः for आह्वयामहे. 7. R. reads रोदसी once only; so do च and others. Bi. J. conclude XI. iv. 16 after रोदसी. They read as °रोदसी ॥ १६ (५०) ॥ इत्येकादशाध्यायस्य चतुर्थः पादः ॥ ११, ४ ॥. The *fourth pâda* of the eleventh adhyâya ends here. C. D. conclude as ॥ ५० ॥; they do not give the number of the pâda, and conclude the adhyâya after the chain. 8. *a.* marks verse 48, after इति. 9. *a. d. m.* omit नु; *a. d.* add वा after मारुतं; *a. d.* मरुत्सुयुक्तं. 10. *a. d.* omit यस्मिन् before किमिति; *m.* adds यस्मिन्नातस्थौ again after आ यस्मिन् तस्थौ. 11. *a. d.* omit गमने and सचा, and *a. d. m.* omit मरुत्सु.

---

3. 'रोदसी'—Nigh. V. 5. 36.

4-5. RS. V. 56. 8.

6. Bi. mss. क, ख, ग omit मेघं.

6. आ यस्मिन् तस्थौ—Note the bhâsya does not join the *upasarga* आ, to तस्थौ.

रोदसी किम् इति। सुरणानि सुष्ठु रमणीयानि उदकानि बिभ्रती धारयन्त्यातिष्ठति इति। तं वयं मेघं रथमाह्वयामहे वर्षार्थमिति ॥ ५० ॥

इति श्रीजम्बूमार्गनिवासिनो भगवद्दुर्गाचार्यस्य कृतौ
ऋज्वर्थायां निरुक्तवृत्तौ
एकादशोऽध्यायः समाप्तः ॥ ११ ॥

श्येन[१] आदाय[२] स्वादिष्ठया[३] सोमं[४] यत्त्वा[५] नवोनवो[६] परं[७] मृत्यो त्वेषमित्था[८] प्र वो[९] मह[१०] उदु ज्योतिर्धाता[११] सोमस्याथातो[१२] मध्यस्थाना देवगणा[१३] आ[१४] विद्युन्मद्भिरा[१५] रुद्रास[१६] विष्ट्वी[१७] शमी विरूपास[१८] उदीरतामङ्गिरसः[१९] सूर्यस्येव[२०] स्तुषेय्यमथातो[२१] मध्यस्थानाः[२२] स्त्रियो दक्षस्य[२३] वा यस्मै[२४] त्वं किमिच्छन्ती[२५] पावका[२६] नो महो[२७] अर्णो[२८] यद्वाग्वदन्ती[२९] देवीं वाचमन्विदनुमते[३०] राकामहं[३१] सिनीवालि[३२] कुहूमहमन्यमूपूर्वशी[३३] विद्युन्न[३४] वलिस्थेन्द्राणी[३५] नाहमिन्द्राणि[३६] गौरीर्मिमाय[३७] तस्या[३८] गौरमीमेदुपह्वये[३९] सूयवसाद्धिङ्कृण्वती[४०] स्वस्तिरिद्धयपोषा[४१] एतदस्या[४२] अभि[४३] नो रथं[४४] नु मारुतमिति[४५] पञ्चाशत्[४६] ॥[४७][४८][४९][५०]

इति निरुक्ते (उत्तरषट्के) एकादशोऽध्यायः समाप्तः ॥ ११ ॥

1. *a. d.* omit इति after आतिष्ठति. 2. *d.* मेघरथं for मेघं रथं; *bi. j.* conclude as, वर्षार्थमिति ॥ १६ (५०) ॥ इति ऋज्वर्थायां निरुक्तवृत्तौ षोडशस्य (एकादशस्य) अध्यायस्य चतुर्थः पादः ॥ ११ । ४ ॥ इति श्रीजम्बूमार्ग°. 3–5. *a.* जम्बूमार्गनिवासिनो भगवत आचार्यस्य (*d.* भगवद्दुर्गाचार्यस्य) कृतौ ऋज्वर्थायां निरुक्तवृत्तौ षोडशोऽध्यायः समाप्तः। स्वस्ति (*d.* omits स्वस्ति)। खंड ५० पाद ४ मंत्र ४८ सं. ६०० पत्र २३ एकादशाध्यायः समाप्तः, *bi. j.* read as षोडशोऽध्यायः (एकादशोऽध्यायः) समाप्तः ॥११॥, *m.* omits from इति ऋज्वर्थायां all that follows and reads only as °वर्षार्थमिति ॥ ॥ इति जंबूमार्गनिवासिनो भगवद्दुर्गाचार्यस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ षोडशोध्यायः ॥ १६ ॥, *m.* leaves as above space for the number of the Khaṇḍa but never writes the number. 6. Bi. mss. क, ख, ग do not give the [illegible]in (खण्डशृङ्खला); C. D. श्येनो व्याख्यात आदा°...सोमं मन्यते यत्त्वा देव. [illegible] D. °र्धाता ददातु सोमस्य राज्ञोथातो. 8–9. C. D. °रुद्रासो विष्ट्वी; °उदीरतावरैंगिरसो [illegible]स्येव. 12. C. D. °र्मिमाय तस्याः समुद्रा गौरमी°. 13. C. D. °अभि न इळा रथं नु पञ्चाशत्. 14. C. D. इति निरुक्ते उत्तरषट्के पंचमोध्यायः ॥.

# अथ द्वादशोऽध्यायः।

अथातो द्युस्थाना देवताः। तासामश्विनौ प्रथमागामिनौ भवतः। अश्विनौ यद् व्यश्नुवाते सर्वं रसेनान्यो, ज्योतिषान्यः। अश्वैरश्विनावित्यौर्णवाभः। तत् कावश्विनौ। द्यावापृथिव्यावित्येके। अहोरात्रावित्येके। सूर्याचन्द्रमसावित्येके। राजानौ पुण्यकृतावित्यैतिहासिकाः। 5 तयोः काल ऊर्ध्वमर्धरात्रात्, प्रकाशीभावस्यानुविष्टम्भमनु। तमोभागो हि मध्यमो, ज्योतिर्भाग आदित्यः। तयोरेषा भवति ॥ १ ॥

व्याख्याता मध्यस्थाना देवताः सवचनलिङ्गविशेषाः। अधुना एतेनैव समाम्नायानुक्रमेण द्युस्थाना व्याख्येयाः। तदर्थं विशेषतः पुनरधिकारवचनम्। **अथातो द्युस्थाना देवताः** इति। बहुवचनं पक्षेऽर्थवत्। द्यौस्तेषां स्थानमिति द्युस्थानाः। देवता 10 व्याख्यास्यन्त इति शेषः।

**तासामश्विनौ प्रथमागामिनौ भवतः**। तौ कस्मात्। कालतो हि द्युस्थानानां देवतानां विशेषो विवक्षितः। आश्विने च स्तुतशस्त्रके कर्मणि प्रथममश्विनोः कालः संधौ। एकश्चाश्वी मध्यस्थानः एको द्युस्थानो नैरुक्तानाम्। अतो द्युस्थानमध्यस्थानत्वात्तयोरश्विनोरुपन्यासः। यद्येवमेकस्य मध्यस्थाने एकस्य द्युस्थाने उपदेशः प्राप्नोति। न। 15 एकैकस्य तयोः अश्विशब्दस्य पृथग्भावेन स्तुत्यभावाद्, अश्विद्वन्द्वस्य चात्यन्तमवियोगात्, नासत्याविति च पृथक्स्तुत्यभावात्। सत्यप्यवियोगे प्राथम्यात् प्रथमस्य समाम्नानं युक्तम् इति चेत्, न। तत्कालेन मध्यस्थानस्य हीयमानरूपत्वात्, द्युस्थानस्य च वर्धमानरूपत्वात्, अतोऽनन्तरं च द्युस्थानदेवतारूपान्तरसंस्थानादिति।

---

1. Bi. J. read **प्रथमः पादः**।, after द्वादशोऽध्यायः. 2. J reads ॐ॥ before अथातो. 6. Bi. mss. क, ग read °मनुत्तमो for °मनु तमो°. 7. Bi. J. conclude XII. i. 1 with एषा भवति. 8. *a. d. m.* तेनैव, *bi. j.* एतेनैव. 10. *d.* बहुवचनपक्षेर्थवत्; *a. d.* omit तेषां. 13. *a.* only omits देवतानां. 16. Bi. ms. क omits तयोः, *bi. j. m.* have it. 17. *d.* सत्यवियोगे.

---

2. द्युस्थानाः देवताः—They are mentioned in Nigh. V. 6. 1–31.

6–7. **तमोभागो हि मध्यमो, ज्योतिर्भाग आदित्यः**—Not repeated in the *vritti* by Durga.

8. व्याख्याताः मध्यस्थानाः देवताः—i. e. in Nir. X. and XI.

**अश्विनौ** (१) कस्मात् । **यद् व्यश्नुवाते सर्वम्** । केन । **रसेनान्यः** । रसेनोदकेन सर्वं व्यश्नुते व्याप्नोति । **ज्योतिषान्यः** ज्योतिषैकः । **अश्वैः अश्विनौ इत्यौर्णवाभः** । अश्वैस्तद्वन्तौ तावित्यौर्णवाभ आचार्यो मन्यते ।

**तत् कौ अश्विनौ** इति विचारः । तदिति वाक्योपादाने । कावेतावश्विनाविति 5 विचारार्थः प्रश्नः । **द्यावापृथिव्यौ इत्येके** । विज्ञायते हि

" तौ यौ प्रत्यक्षदैवतमाश्विनाविमे एव ते द्यावापृथिव्यौ "

–इति । द्यौर्ज्योतिषा व्याप्नोति पृथिव्यन्नेन । **अहोरात्रौ इत्येके** । अहर्ज्योतिषा व्यश्नुते रात्रिरवश्यायैः । **सूर्याचन्द्रमसौ इत्येके** । सूर्यो ज्योतिषा व्यश्नुते, रसेन चन्द्रमाः । **राजानौ पुण्यकृतौ इत्यैतिहासिकाः** । **अश्वैरश्विनावित्येत-** 10 न्निर्वचनम् अथास्मिन् पक्षे इतिहासे समवैति ।

**तयोः कालः ऊर्ध्वमर्धरात्रात् प्रकाशीभावस्यानुविष्टम्भम्** । ज्योतिषा व्यतिभिद्यमानमूर्ध्वमर्धरात्रात् तमो यदा ज्योतिरनुविष्टभ्नाति सोऽश्विनोः कालः । ततः प्रभृति संधिस्तोत्रं पुरोदयादाश्विनम् । उदिते सौर्याणि । तत्र **यत्तमोऽनुप्रविष्टं ज्योतिषि तद्भागः मध्यमः** तन्मध्यमस्य रूपम् । **यत् ज्योतिः** तमसि अनुप्रविष्टं तद्भागं तद्रूपम् 15 **आदित्यः** । तावेतौ मध्यमोत्तमाविति स्वमतमाचार्यस्य । यतः समर्थनायोदाहरति । **तयोः एषा भवति** ॥ १ ॥

---

1. *a. d.* add अथ before अश्विनौ. 2. *d.* omits सर्वं; *a. d. m.* omit ज्योतिषान्यः. 13. *d.* पुरोदयाद्याश्विनम्. 14. *a. d.* omit मध्यमः तत्.

---

1. 'अश्विनौ'— Nigh. V. 6. 1.

5. विज्ञायते हि—The quotation following is not traced. Cf. ŚB. 4. 1. 5. 16: अथ यदश्विनावितीमे ह वै द्यावापृथिवी प्रत्यक्षमश्विनाविमे हीदं सर्वमाश्नुवाताम् ।

9. इत्यैतिहासिकाः—The allusion is not found out.

11. प्रकाशीभावस्यानुविष्टम्भमनु—The *bhāṣya* has two *anus* but Durga reads only the first and omits the last. He does not explain it also. One of the *anus* is superfluous.

14. तद्भागं is wrong. It should be स भागः.

"वसांतिषु स्म चरथोऽसितौ पेत्वांविव ।
कदेदमंश्विना युवमभि देवाँ अंगच्छतम् ॥"

इति सा निगदव्याख्याता ।

तयोः समानकालयोः समानकर्मणोः संस्तुतप्राययोरसंस्तवेनैषोऽर्धर्चो भवति । 5

"वासात्यो अन्य उंच्यत उषः पुत्रस्तंवान्यः"

इति । तयोरेषापरा भवति ॥ २ ॥

**वसांतिषु स्म**–इति । उपजातदेवतादर्शनचक्षुः अतीतेषु रात्रिपर्यायेषु, संधौ प्राप्ते सहसैवाश्विनौ दृष्ट्वा मन्त्रदृक् ब्रवीति । **वसातिषु**–रात्रिषु । तासु हि प्राणिनो निवसन्ति। कि तासु इति । **चरथः** युवाम् । कथम् । **असितौ इव पेत्वौ** । कृष्णाविव मेघौ 10 समानरूपौ । उषसि कथमपि मया लक्षितौ । यतो ब्रवीमि **कदेदमंश्विना युवम्** । कदा इदम् अस्मत्कर्म प्रति ये देवा आगताः तान् प्रति हे युवामश्विनौ **आगच्छतम्** आगतवन्तौ स्थः ।

**तयोः** अश्विनोः **समानकालयोः** । उभयोरपि हि तयोरूर्ध्वमर्धरात्रात् काल इति समानकालः । **समानकर्मणोः** । उभयोरपि तयोरेकं कर्म । तिरो अह्न्याः सोमा 15

1. Bi. mss. क, ख, ग read वसातिषु ष्म. 2. Bi. J. R. कदेदमं°, C. कदेदमं°. 3–4. See the foot-note, below, on these lines. 6. C. does not assign accents to 'वासात्योऽन्य उच्यत उषः पुत्रस्तवान्यः'. 7. Bi. J. conclude XII. i. 2 with अपरा भवति. 8. *a.* marks verse 1, after इति; *a. d.* उपजातदेवानां दर्शनचक्षुः. 9. *a.* प्रब्रवीति; *a. d.* वसंति. 11. *d.* ब्रवीमि, *bi. j.* ब्रवीति. 15. *d.* समानः कालः, *bi. j.* समानकालः.

---

1–2. The quotation cannot be traced to any Saṁhita.

3–4. C. D. read as °निगदव्याख्याता । वसातिषु स्म चरथो वसातयो रातयो वसंते स्मा इतरेतरा तयो वक्तेर्वा वहतेर्वाऽसितौ पेत्वाविव । अपेत्वा वृत्रहणं सुरातयोस्तयोः समानकाल्योः°. R. gives this reading in the foot-note on page 170. It seems to be the explanation of the first half of the verse above, and is full of grammatical mistakes.

6. The quotation is not traced.

आश्विनश्च द्विकपालः। **संस्तुतप्राययोः**। प्रायेण हि तयोः बाहुल्येन संस्तव एव। **तयोः** पुनः **असंस्तवेनैषोऽर्धर्चो भवति**।

ननु अस्यामृचि **वसातिषु स्म चरथ** इति वसातयो हि जनपदा अपि प्रसिद्धाः। तदधिपती पुण्यकृतौ राजानौ अश्वैस्तद्वन्ताविति शक्यते कल्पयितुम्। तद्यथा। वासात्यौ 5 तद्देशाधिपती कौचिद्राजानौ बह्वश्वौ पुण्यकृतौ यज्ञकर्मणि देवान् प्रति गतौ केनचिदुच्येते। यौ युवां वसातिषु जनपदेषु नित्यमासिताविव पेत्वौ समानवेषौ चरथः तौ युवामिदं देवस्थानं प्रति ये देवा वर्तन्ते तान् प्रति कदा हे अश्विनौ युवामागतवन्ताविति। मा भूदेषा मन्त्रार्थयोजनेत्यत आह।

"**वासात्योऽन्य उच्यते उषः पुत्रः तवान्यः**"

10 –**इति**। एको वासात्य उच्यते एकश्च उषसः पुत्र इति। एवमेतस्मिन् भिन्नस्तुतावर्धर्चे उषसः पुत्रेण सूर्येण सह समानव्याख्यानादसंशयं मध्यमो वासात्यो रात्रेः पुत्र इति।

**तयोः एषा अपरा भवति**। सा पुनः किमर्थम्। मध्यमोत्तमावश्विनावित्यस्यै-वार्थस्य दृढतायै स्फुटं यदेतस्यामेतत्परस्यामृचि॥ २॥

"**इहेह जाता समवावशीतामरेपसा तन्वा३ नामभिः स्वैः।**

15 **जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे॥**"

**इह चेह च जातौ संस्तूयेते पापेनालिप्यमानया तन्वा नामभिश्च स्वैः जिष्णुर्वामन्यः सुमहतो वलस्येरयिता मध्यमो, दिवोऽन्यः सुभगः पुत्र ऊह्यत आदित्यः। तयोरेषापरा भवति॥ ३॥**

3. *a. d.* omit ननु. 4. *a. d.* राजानौ पुण्यकृतौ, *bi. j.* पुण्यकृतौ राजानौ. 7. *a. d. m.* देवस्थानं प्रति ये देवा वर्तन्ते तान्प्रति; *bi. j.* देवस्थानं प्रतिपेदे वावर्तन्ते तान् प्रति; *a. d.* युवामागच्छतमागतव°. *a. d.* मंत्रार्थयोजनेत्यत आह, *bi. j.* मंत्रार्थयो-जनेत्यर्थयोजनेत्यत आह. 14. Bi. mss. क, ख, ग read नामभि स्वैः. 17. D. reads सुमतौ for सुमहतो of C. R. Bi. J.; R. and Bi. ms. च read दिवोऽन्यः, Bi. J. दिवो अन्यः. 18. Bi. J. conclude XII. i. 3 with अपरा भवति.

14-15. RS. I. 181. 4.

16. Durga reads **संस्तूयेथे** for संस्तूयेते of the *bhāṣya*.

16. **पापेनालिप्यमानया**—Not repeated by Durga.

18. **आदित्यः**—Not repeated by Durga.

**इहेह जाता**–इति। अगस्त्यस्यार्षम्। प्रातरनुवाकाश्विनयोः विनियोगः। हे अश्विनौ युवामुच्येथे। **इहेह जाता इह च** मध्यस्थाने **इह च** द्युस्थाने **जातौ समवावशीतां** संस्तूयेथे। केन। **अरेपसा तन्वा** अपापया **तन्वा** यथासंकल्पकृतया **नामभिः स्वैः**। परमनाश्रित्य यानि स्वस्तुतिनिमित्तानि तैः। किंच। **जिष्णुर्वामन्यः**। नित्यमेव जेता युवयोरन्यः। **सुमखस्य सूरिः सुमहतो बलस्येरयिता** 5 शत्रुषु। स च नान्यो मध्यस्थानात् इति **मध्यमः** मध्यस्थानः। **दिवो अन्यः सुभगः पुत्रः** सुभगः–सुधनः **ऊहे–ऊह्यते** वायुना नित्यम्। स च नान्यः सूर्यादित्येवमत्रापि मध्यमोत्तमाविति।

**तयोः एषा अपरा भवति**। सा पुनः किमर्थम्। संस्तुतप्रायावेतौ समानकालौ समानकर्माणौ इत्युक्तं तदुपप्रदर्शनार्थम् ॥ ३ ॥ 10

**" प्रातर्युजा वि बोधयाश्विनावेह गच्छताम्।**
**अस्य सोमस्य पीतये ॥ "**

**प्रातर्योगिनौ विबोधयाश्विनौ। इहागच्छतामस्य सोमस्य पानाय। तयोरेषापरा भवति ॥ ४ ॥**

---

1. *a* marks verse 2, after इति. 2. *a. d. m.* read जातौ इहेह for इहेह जाता. 2–3. *a.* alone omits from जातौ to तन्वा ( inclusive ): *m.* समवावशेताम्. 3. *a.* अल्पकृतया, *bi. j.* यथासंकल्पतया, *d.* यथासंकल्पकृतया. 4. *a. d.* स्वनिमित्तानि, *bi. j.* स्वस्तुतिनि°. 6. *a. d.* omit च after सः; Bi. ms. च reads मध्यमस्थानात्; *a. d. m.* omit मध्यमः. 6–7. *m.* omits सुभगः पुत्रः. 7. *a. d.* उह्यते for ऊह्यते. 9. *d.* संस्कृतप्रायौ for संस्तुतप्रायौ. 14. Bi. J. conclude XII. 1. 4 with अपरा भवति.

---

1. विनियोगः—See Âśva. Śrau. 4. 15.

2–3. अवावशीताम्—Cf. 'वाशृ शब्दे' Dhatup. 4. 57; and 'वश कान्तौ' Dhatup. 2. 70.

11–12. RS. 1. 22. 1; TS. 1. 4. 7. 1; TB. 2. 4. 3. 13; cf. ÂŚ. 5. 5. 12.

13. प्रातर्योगिनौ—Not repeated by Durga.

**प्रातर्युजा**-इति । मेधातिथेरार्षम् । प्रातरनुवाके विनियोगः । हे स्तोतः यावेतौ प्रातर्युज्येते हविषा स्तुत्या च तावेतौ **अश्विनौ** विस्पष्टाभिः स्तुतिभिः अस्मदर्थं **विबोधय** । विबोधितौ च त्वया **इह** कर्माणि **आगच्छताम्** अस्माकम् **अस्य सोमस्य पीतये** पानाय ।

5 **तयोः एषा अपरा भवति** । सा पुनः किमर्थम् । नैवानयोः अन्यस्मिन् काले इज्यास्ति । यद्यपि क्रियते अनिज्यैव सेति सुतरां परया संस्तवकालं चोपप्रदर्शयति ॥ ४ ॥

" **प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम् ।**
**उतान्यो अस्मद्यजते वि चावः पूर्वः पूर्वो यजमानो वनीयान् ॥** "

**प्रातर्यजध्वमश्विनौ प्रहिणुत । न सायमस्ति देवेज्या । अजुष्टमेतत् ।**
10 **अप्यन्योऽस्मद्यजते, वि चावः । पूर्वः पूर्वो यजमानो वनीयान् वनयितृतमः । तयोः कालः सूर्योदयपर्यन्तस्तस्मिन्नन्या देवता ओप्यन्ते ॥**

**उषा वष्टेः कान्तिकर्मणः । उच्छतेरितरा माध्यमिका । तस्या एषा भवति ॥ ५ ॥**

**प्रातर्यजध्वम्**-इति । अत्रेरार्षम् । प्रातरनुवाके विनियोगः । आश्विने च । हे
15 स्तोतारो यूयमुच्यध्वे । तौ **अश्विनौ प्रातः** एव **यजध्वम्** । कथम् इति । यतो ब्रवीमि । **प्रहिणोत** प्रकर्षेण तौ प्रति स्तुतीर्हवींषि च गमयतेति । किमित्येवं ब्रवीमि

1. *a.* marks verse 3, after इति. 4. *m.* adds पानाय after सोमस्य. 6. *a. d.* appear to read क्रियेत for क्रियते; *a. d.* संस्तवं कालं च. 10. Bi. J. C. °दप्यन्यो अस्मद्°, D. and Bi. ms. च °दप्यन्योऽस्मद्यजते. 11–12. Bi. ms. ख reads ओप्यन्ते उषा, Bi. J. ओप्यन्त उषा. 13. Bi. J. conclude XII. 1. 5 with एषा भवति. 14. *a.* marks verse 4, after इति. 15. *a. d.* प्रातरेतावश्विनौ य°, *bi. p.* प्रातरेव य°.

1. विनियोगः—Âs'va. Śrau. 4. 15.
7–8. RS. V. 77. 2; MS. 4. 12. 6 : 195. 16–17; TB. 2. 4. 3. 13.
9. प्रहिणुत—Durga reads **प्रहिणोत** for प्रहिणुत.
9. देवेज्या—Durga reads **देवयोः......इज्या** for देवेज्या.
9. एतत्—Durga omits **एतत्**.
14. विनियोगः—Âśva. Śrau. 4. 15; आश्विने च—Âśva. Śrau. 6. 5.

प्रातर्यजध्वामिति । इतः यस्मात् **न सायमस्ति देवयाः** । अनयोर्देवयोः न साय-
मस्ति **इज्या** । यद्यपि कथंचित् स्यात् **अजुष्टम्** अनासेवितं तदश्विभ्यां कर्म ।
**उतान्यो अस्मद्यजते । अपि** च अनादृते त्वयि **अन्यः अस्मत्तः** एतावश्विनौ
**यजते । वि च आवः** व्यावयति च तर्पयति हविर्भिः । **पूर्वः पूर्वः यजमानः**
प्रथमः प्रथमो यजमानो **वनीयान् वनयितृतमः** संभक्तृतमः आदृतत्वात् । तस्यैव 5
हविरासेवेते अश्विनौ नेतरस्येति ।

**तयोः कालः सूर्योदयपर्यन्तः ।** 'प्रकाशीभावस्यानु विष्टम्भम्' इत्यतः कालात्
प्रभृति सूर्योदयपर्यंतस्तयोः कालः । ततःपरं यागकालः । ततः किम् । **तस्मिन्
अन्याः देवताः ।** तस्मिन् स्तुतिकाले अन्याः देवताः आश्विने शस्त्रे याः स्तुतिं
लभन्ते ताः **ओप्यन्ते** तासामावापः तत्कालस्तुतिप्रतिलम्भे इति । तत्र तावदुषाः 10
प्रथममोप्यते । तद्देवतानि सूक्तानि शस्यन्ते ॥

**उषाः** (२) **वष्टेः कान्तिकर्मणः** । "वश कान्तौ" इत्यस्य । यच्चोक्तम्
'उच्छतीति सत्याः' इति तद्वा इदं विकल्पेन द्युस्थानायाः । या पुनः **इतरा माध्य-
मिका** उषाः न तस्या विकल्पः । किं तर्हि । **उच्छतेः** एव सा विवासनार्थस्य ।
उदकानि विवासयति विवास्यते वा मेघान् मध्यमेनेति । **तस्याः एषा भवति** ॥५॥ 15

**"उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति ।**
**येन तोकं च तनयं च धामहे ॥"**

---

2. *m.* °मिति for °मस्ति; *a. d.* add च after अनासेवितं. 3. *d.* adds अपि after अन्यः. 4. *m.* च्यावयति for व्यावयति of *bh. j.* 5. *m.* वनीयात् व°; *a. d. m* omit वनयितृतमः; *a.* only reads संभक्ततमः. 8. *m.* omits ततःपरं यागकालः. 10. *a. d.* उप्यन्ते for ओप्यन्ते; *d.* °स्तुतिप्रतिलम्भ इति. 11. *a. d.* प्रथमोप्यते. 13. *d* उच्छन्तीति; *a. d.* द्युस्थाना for द्युस्थानायाः. 15. *d.* omits विवास्यते.

---

7. प्रकाशीभावस्यानु वि°—Nir. XII. 1.
12. 'उषाः'—Nigh. V. 6. 2. 'वश कान्तौ'—Dhâtup. 2. 70.
13. 'उच्छतीति सत्याः'—Nir. II. 18.
16-17. RS. I. 92. 13; SV. 2. 1081; VS. 34. 33.

उषस्तच्चित्रं चायनीयं मंहनीयं धनमाहरास्मभ्यमन्नवति, येन पुत्रांश्च पौत्रांश्च दधीमहि । तस्या एषापरा भवति ॥ ६ ॥

उषस्तच्चित्रमा भर-इति । गोतमस्यार्षम् । प्रातरनुवाके आश्विने च विनियोगः । हे उषः वाजिनीवति तदस्माकं चित्रं-चायनीयं धनम् आभर-आहर त्वम् । 5 येन त्वत्प्रत्तेन वयं पुत्रांश्च पौत्रांश्च अविच्छेदेन तृप्तान् धामहे-दधीमहि ।

तस्याः एषा अपरा भवति । सा पुनः किमर्थम् । पूर्वस्यामृचि चित्रं धनमाहरेत्युक्तम् । तच्च पुनरुभयोरप्युषसोरविशिष्टम् । विशिष्टं तु परस्यामुत्तमलिङ्गं "पूर्वे अर्धे रजसो भानुमञ्जते" इति । अतः परा उदाह्रियते ॥ ६ ॥

"एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते ।
10 निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ॥"

एतास्ता उषसः केतुमकृषत प्रज्ञानम् । एकस्या एव पूजनार्थे बहुवचनं स्यात् । पूर्वेऽर्धेऽन्तरिक्षलोकस्य समञ्जते भानुना । निष्कृण्वाना आयुधानीव धृष्णवः । निरित्येष समित्येतस्य स्थाने ।

"एमीदेषां निष्कृतं जारिणीव ।"

---

1. Bi. mss. क, ख, ग do not have चित्र and मंहनीयं. 1-2. R. पुत्राँश्च पौत्राँश्च. 2. Bi. J. conclude XII. i. 6 with अपरा भवति. 3. *a.* marks verse 5. after इति; *a. d.* omit आश्विने च. 4. *a. d.* omit वाजिनीवति; *a. d. m.* omit आभर. 5. *a. d. m.* omit धामहे. 6. *a. d.* omit किमर्थम्. 12. C. D. and Bi. ms. च—पूर्वेऽर्द्धेऽन्तरिक्ष°; Bi. J पूर्वे अर्द्धे अन्त°. 13. C. स्थान एमी°, D. स्थान अमी°.

---

1. मंहनीयम्, अस्मभ्यम्, and अन्नवति are not repeated by Durga. He does not also explain अन्नवति.

3. प्रातरनुवाके—Âśva. S'rau. Sû. 4. 15; आश्विने—Âśva. Śrau. 6. 5.

9-10. RS. I. 92. 1; SV. 2. 1105; Cf. Brh. D. iii. 124.

12. स्यात्—Omitted by Durga.

14. RS. X. 34. 5*d*.

–इत्यपि निगमो भवति । प्रतियन्ति । गावो गमनात् । अरुषीरारोचनात् । मातरो, भासो निर्मात्र्यः ॥

**सूर्या सूर्यस्य पत्नी । एषैवाभिसृष्टकालतमा । तस्या एषा भवति ॥ ७ ॥**

**एता उ त्याः**–इति । याः **पूर्वे अर्धे रजसः**–अन्तरिक्षलोकस्य **समञ्जते** 5 **भानुना** भासा आत्मानमभिव्यञ्जयन्ति । **एताः त्याः–ताः उषसः** । किमिति । **केतुम् अक्रत–अकृषत** कुर्वन्ति लोकस्य **प्रज्ञानम्** । कथं ताः प्रज्ञानं लोकस्य कुर्वन्ति । अत आह । **निष्कृण्वाना आयुधानीव धृष्णवः । निरित्येष समित्येतस्य स्थाने** । यथा संस्कुर्वाणाः नित्यं निर्मृजन्तः आयुधानि निर्मलानि कृण्वन्ति **धृष्णवः**–धर्षयितारः ते आयुधिनस्तज्जीवनाः, एवं भानुना स्वेन भासा तमो- 10 मलमपनीय निर्मलानि प्रज्ञानानि लोकस्योषसः संस्कुर्वन्ति । ततश्च **प्रति गावोऽरुषीर्यन्ति मातरः** । यत एवोदितास्तमेव सूर्यं **प्रति यन्ति** तत्रैवान्तर्लीयन्ते । सूर्यस्यैव हि रश्मिप्रान्तप्रोत्सार्यमाणे तमस्यपररात्रे जाते प्रकाश उपजायते । ता उषस इत्याचक्षते । स एष परमार्थतः सूर्य एव स्त्रीलिङ्गविशिष्टो भवति सूर्यकार्यत्वात् प्रकाशस्य ।

**एकस्या एव पूजनार्थं बहुवचनम्** इति वचनभेदप्रतिसमाधानम् । **निरित्येष** 15 **समित्येतस्य स्थाने** सामर्थ्याद्व्यत्ययः । संस्क्रियमाणानि ह्यायुधानि अतिनिर्मलानि भवन्ति ।

यथा चोपपद्यते उपसर्गव्यत्ययः तथा निगममुदाजहार । **एमीदेषाम्**–इति ।

---

2. Bi. ms. ख has निर्म्मात्र्यस्सूर्य्या, Bi. J. निर्मात्र्यः सूर्या. 3. Bi. mss. क, ग read °वाविसृष्टकालतमा, Bi. J. °वाभिसृष्ट°. 4. Bi. J. conclude XII. 1. 7, with एषा भवति. 5. *a.* marks verse 6. after इति; *a. d.* add पूर्ववदार्षं विनियोगश्च after इति; *a. d. m.* omit रजसः. 6. *a.* अभिव्यञ्जयन्ति, *d.* समभिव्यञ्जयन्ति, *bi. j.* अभिव्यञ्जयति; *a. d. m.* omit त्याः. 12. *a. d.* अन्तर्धीयन्ते. 17. *a. d.* add इति after भवन्ति. 18. *a.* marks verse 7. after इति.

---

1. इत्यपि निगमो भवति—Omitted by Durga.

1–2. गावो गमनात् । अरुषीरारोचनात् । मातरो भासो निर्मात्र्यः ।—All these three etymologies are omitted by Durga.

"यदा दीध्ये न दविषाण्येभिः परायद्भ्योऽवहीये सखिभ्यः ।
न्युप्ताश्च बभ्रवो वाचमक्रत एमीदेषां निष्कृतं जारिणीव ॥"

–इति । कवषस्य वा अक्षस्य वा आर्षम् । कृतनिवृत्तिर्देवनादशक्नुवन्नात्मानं धारयितुं ब्रवीति । यदा दीध्ये भृशमभिध्यायामि निश्चयेन न दविषाणि न देविष्यामि एभिः 5 अक्षैरिति । अथ तदा सखिभ्यः समानख्यानेभ्यः कितवेभ्यः परायद्भ्यः परागच्छद्भ्यः देवनस्थानम् अहमेभ्यः अवहीये भृशं हीनोऽस्मीति । यदा च पुनस्ते प्राप्य आस्फारं निवपन्ति अक्षान् अथ पुनस्तदा तैर्न्युप्ताश्च ते बभ्रवः बभ्रुवर्णा अक्षाः वाचमक्रत शब्दमकुर्वत । अथ तदा निवृत्तिमविगणय्य **एमि इत्** आगच्छाम्येव **एषाम्** अप्येषां अप्येवं **निष्कृतं**–संस्कृतम् अक्षस्थानम् आस्फारं संस्कृतं **जारिणीव** व्यभिचारिणीव 10 काचिद्दुःस्त्रीचारित्रमात्मनोऽविगणय्येति ॥

**सूर्या** (३) इति वक्तव्यम् । सा पुनरियं **सूर्यस्य पत्नी एषैव** उषाः **अभिसृष्टकालतमा** । यथा सूर्यस्योदयकालं प्रत्यभिसृष्टतमा भवति गततमा भवति तथा तथा सैषा उषाः सूर्या संपद्यते । **तस्याः एषा भवति** ॥ ७ ॥

**"सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् ॥**
15 **आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ॥"**

---

1 *d.* reads the *pratīka* up to दविषाणीति. 4. *d. m.* देविष्याणि for देविष्यामि of *bi. j.* 5–6. *d.* परागच्छतन्योदेवस्थानमहमेभ्यो वहीयेभ्यो भृशं etc. 6. *a. d.* आस्फुरं for आस्फारं. 7. *d.* तैन्यप्ताच्यते बभ्रवो etc., *a.* only reads ये for ते; *m.* वाचमक्रम, *bi. j.* वाचमक्रत; *d.* omits शब्दं. 8. *a. d.* अवगणय्य, *bi. j.* अविगणय्य; *a. d.* omit आगच्छाम्येव. 9. *d.* निःकृतं for निष्कृतं. 10. *a. d.* काचित्स्त्री°, *bi. j.* काचिद्दुःस्त्री°. 13. *a. d.* omit सैषा.

---

1–2. RS. X. 34. 5.

11. 'सूर्या'—Nigh. V. 6. 3.

14–15. RS. X. 85. 20: AV.14. 1. 61; SMB. 1. 3. 11; ApMB. 1. 6. 4; MG. 1. 13. 6. Cf. ApG. 2.5. 22.

14. हिरण्यवर्णं सुवृतं सुचक्रम्—Yāska takes no notice of these words.

सुकाशनं शन्नमलं सर्वरूपम् । अपि वोपमार्थे स्यात् सुकिंशुकमिव शल्मलिमिति । किंशुकं कंशतेः, प्रकाशयतिकर्मणः । शल्मलिः सुशरो भवति, शरवान्वा । आरोह सूर्ये अमृतस्य लोकमुदकस्य । सुखं पत्ये वहतुं कुरुष्व ।

"सविता सूर्यां प्रायच्छत् सोमाय राज्ञे, प्रजापतये वा ।" 5

-इति च ब्राह्मणम् ।

वृषाकपायी वृषाकपेः पत्नी । एषैवाभिसृष्टकालतमा । तस्या एषा भवति ॥ ८ ॥

**सुकिंशुकं शल्मलिम्**-इति । सूर्याया आर्षम् । विवाहे विनियोगः । त्रित्वे तावदुच्यते । प्रभामात्मनो विभज्य तदधिदेवतां ब्रवीति । **सुकिंशुकं सुष्ठु काशनं** 10 दीपनं लोकानां **शल्मलिं-शन्नमलं** व्यपगतमलं **विश्वरूपं-सर्वरूपं हिरण्यवर्णं** हिरण्योपमवर्णं हिरण्यमिव वरणीयं **सुवृतं** सुवर्तनं शोभनैर्वा रश्मिभिर्वृतं **सुचक्रं** सुचकनं सुदीप्तम् । एतमेवंलक्षणं मण्डल रथम् **आरोह** त्वं हे **सूर्ये अमृतस्य-उदकस्य लोकं** स्थानम् । तत एवमधिरुह्य **स्योनं-सुखमे**तस्मै **पत्ये**-मण्डलाधिष्ठात्रे **वहतुं कृणुष्व-कुरुष्व** । 15

पृथक्त्वपक्षे तु रथ एव रथः सूर्य उद्वोढा कन्या सूर्योच्यते । एवंलक्षणं रथमारोहेति ।

**अपि वोपमार्थे स्यात् । सुकिंशुकमिव शल्मलिमिति ।** किंशुकमिति पलाशपुष्पे प्रसिद्धिः । इह तु रक्तपुष्पत्वसामान्यात् सुपुष्पितमिव शल्मलिमिति साम-

1. Bi. mss. क, ख, ग read सुकासन सन्नमलं for सुकाशनं शन्नमलं of Bi. J. and others. 2. Bi. mss. क, ग read काशयतिकर्मणः for प्रका°. 5. Bi. mss. क, ख, ग read प्रायच्छा सोमाय. 8. Bi. J. conclude XII. i. 8, with भवति. 9. *a.* marks verse 8, after इति. 10. *a. d.* या प्रभामात्मनो विभज्यते तदधिदेवता etc. 11. *a.* only reads 'शल्मलं' for 'शल्मलिं'; *a.* only omits शन्नमलं. 12. *d.* वारणियं; *m.* सुवर्तनं सुवृतं for सुवृतं सुवर्तनं of *bi. j.* 14. *d.* लोकस्थानम्. 15. *a. d.* read वहतुं before मण्डलाधिष्ठात्रे.

1–2. **सुकाशनं** and **प्रकाशयतिकर्मणः** are not repeated by Durga.

6. इति च ब्राह्मणम्.—The quotation is not traced. *Cf.* AB. iv. 7; KB. xviii. 1; see Guṇe, *Bhând. Comm. Vol.*, p. 19.

9. विवाहे विनियोगः—Âśva. Gṛ. i. 8. 13.

थ्यात् तेनोपमानयोग आदित्यस्य पुष्टतर इति किंशुकशब्दः पुष्पिते शल्मलौ गौण इति भाष्यकाराभिप्रायः ।

**किंशुकं कंशतेः** धातोः प्रकाशनार्थस्य । तद्धि दीप्तिमद्भवति । **शल्मलिः सुशरो भवति ।** "शॄ हिंसायाम्" इत्यस्य धातोः । स हि मृदुत्वात् सुहिंस्यो 5 भवति । **शरवान् वा ।** हिंसावान् कण्टकैरसौ हिनस्ति हि ।

**"सविता सूर्यां प्रायच्छत् सोमाय राज्ञे, प्रजापतये वा ।"**

**–इति च ब्राह्मणम् ।** निरुक्तपक्षे ज्योत्स्नां सोमाय ददाति । यदुक्तम् 'आदित्यतोऽस्य दीप्तिर्भवति' इति । **प्रजापतये वेति ।** उषसं वा मध्यस्थानाय प्रजापतये ददाति । केचित्त्वैतिहासिकपक्षे इच्छन्ति । तेषामितिहासं शृणु । कथमेतत् इति ॥

10 **वृषाकपायी** (४) **वृषाकपेः पत्नी ।** वृषाकपिरादित्यः । तस्य पत्नी तद्विभूतिः उषःकाले यदवश्यायान् वर्षति कम्पयति च तद्गुणयोगात् । सा पुनः **एषैव** सूर्या **अभिसृष्टकालतमा** वृषाकपायीत्युच्यते । **तस्याः एषा भवति** ॥ ८ ॥

**"वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे ।**
**घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः ॥"**

15 **वृषाकपायि रेवति सुपुत्रे मध्यमेन, सुस्नुषे माध्यमिकया वाचा । स्नुषा साधुसादिनीति वा, साधुसानिनीति वा, स्वपत्यं तत् सनोतीति वा । प्राश्नातु त इन्द्र उक्षण एतान् माध्यमिकान्त्संस्त्यायान् । उक्षण**

1. *m.* उपमायोग. 5. *a. d.* omit हिंसावान्; *a. d.* add हिंसाया after हिनस्ति; *a. d.* omit हि. 7. *d.* नैरुक्तपक्षे. 9. *a. d.* तेषामितिहासो मृग्यं (*d.* ग्यः) कथमेतदिति. 10–11. *a. d.* omit तद्विभूतिः उषः, and read as तस्य पत्नी च काले. 16. Bi. mss. क, ख, ग read साधुसादिनी वा साधुसानिनी वा. 17. Bi. R. माध्यमिकान्त्संस्त्या°, C. J. माध्यमिकान्संस्त्या°.

4. "शॄ हिंसायाम्"—Dhatup. 9. 16.
6. Cf. "प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् सूर्यां सावित्रीम्"—AB. 4. 2. 1.
7. यदुक्तम्—See Nir. II. 6.
10. 'वृषाकपायी'—Nigh. V. 6. 4.
13–14. RS. X. 86. 13; AV. 20. 126. 13.

**उक्षतेर्वृद्धिकर्मणः । उक्षन्त्युदकेनेति वा । प्रियं कुरुष्व सुखाचयकरं हविः, सुखकरं हविः । सर्वस्माद् य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यम् ॥**

**सरण्यूः सरणात् । तस्या एषा भवति ॥ ९ ॥**

**वृषाकपायि रेवति**–इति । इन्द्रस्यार्षम् । षष्ठे पृष्ठ्याहनि वृषाकपौ विनियोगः । 5
हे **वृषाकपायि रेवति**–धनवति–रयिमति । **सुपुत्रे मध्यमेनेन्द्रेण**, रसहरणसामान्यात् सहस्थानसामान्यात् । **सुस्नुषे माध्यमिकया वाचा,** मिथुनसामान्यात् । किम् इति । **घसत् त इन्द्र उक्षणः । प्राश्नातु ते इन्द्रः** तव स्वभूतान् **एतान्माध्यमिकान् उक्षणोऽ**वश्याय**संस्त्यायान्** एष इन्द्र आदित्यः । स हि तानुद्यन् पिबति । **प्रियम्**–इष्टम् एतत् **काचित्करं हविः** । **क**मिति **सुख**नाम । तस्य 10
यदाचितमाचयनं करोति तद्भवति काचित्करम् । किं पुनस्तत् । **हविः**–उदकम् । तत् **कुरुष्वा**वश्यायलक्षणं हविः । अन्नमवश्यायैरभिनिष्पादय । किमर्थम् । **विश्वस्मात्**– **सर्वस्मात् य** एष **इन्द्रः**–आदित्यः **उत्तरः** तदर्थमिति ॥

**स्नुषा साधुसादिनीति वा, साधुसानिनीति वा ।** शोभने अर्थे श्वशुरस्य

---

2. Bi. mss. क, ख, ग do not read सुखकरं हविः. 4. Bi. J. conclude XII. i. 9 with एषा भवति. 5. *a.* marks verse 9, after इति. 6. *a. d.* रयिमति धनवति. 8. *m.* omits ते इन्द्रः; *d.* omits एतान्. 10–11. *a. d.* तस्य यदाचयनं करोति etc. 13. *a. d.* तदर्थमिति उत्तरः, *bi. j.* उत्तरः तदर्थमिति. 14. *a. d.* omit वा after °सादिनीति; *m.* omits साधुसानिनीति वा; *a. d.* omit शोभने अर्थे श्वशुरस्य.

---

1–2. **वृद्धिकर्मणः** and **सुखाचयकरं हविः** are not repeated in the *vritti*.

2. Durga and Bi. mss. क, ख, ग omit **सुखकरं हविः.**

2–3. **तमेतद् ब्रूम आदित्यम्** is omitted by Durga. As in the *ṛk* Vṛśâkapâyî is addressed and not Âditya, these words are out of place and are not required in the *bhâṣya.* The reading of Durga, सर्वस्मात् य इन्द्रः उत्तरः तदर्थम्, therefore, seems to be the original and the better reading.

5. विनियोगः—Âśva. Śrau. 8. 3.

14. स्नुषा—*Cf.* " स्नौति स्नुषा " Kshîraswâmî on *Amara* 2. 6. 9.; and " ष्णु प्रस्रवणे " Dhâtup. 2. 28.

संतानलक्षणे सीदति अङ्गभावमुपैतीति स्नुषा । साधु सनोति संतति, संभजतीति वा स्नुषा । **सु-अपत्यं तत्सनोतीति वा** । सु इत्यपत्यनाम प्रसूयते हि तदिति । तदियं श्वशुरस्य सनोति संभजतीति वा स्नुषा । **उक्षणः उक्षतेः वृद्ध्यर्थस्य** । वर्धयन्ति हि ते ओषधीरवश्यायाः । त एव वा बहुत्वाद् वृद्धा भवन्ति । उक्षतेर्वा 5 सेचनार्थस्य । **उदकेन** हि अवश्याया सर्वमिदं सिञ्चन्ति ॥

**सरण्यूः** (५) इति वक्तव्यम् । सैव यदा सूर्यं प्रत्यविभागेन सृता प्रसृता भवति, तदा **सरणात्** सरण्यूरित्युच्यते । **तस्या एषा भवति** ॥ ९ ॥

**" अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामदधुर्विवस्वते ।**

**उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः ॥ "**

10 **अप्यगूहन्नमृतां मर्त्येभ्यः । कृत्वी सवर्णामदधुर्विवस्वते । अप्यश्विनावभरद् यत्तदासीदजहाद् द्वौ मिथुनौ सरण्यूः । मध्यमं च माध्यमिकां च वाचमिति नैरुक्ताः । यमं च यमीं चेत्यैतिहासिकाः । तत्रेतिहासमाचक्षते ।**

**त्वाष्ट्री सरण्यूर्विवस्वत आदित्याद्यमौ मिथुनौ जनयांचकार । सा 15 सवर्णामन्यां प्रतिनिधायाश्वं रूपं कृत्वा प्रदुद्राव । स विवस्वानादित्य**

1. *a. d.* omit इति after उपैति. 1-2. *a. d.* omit from साधु सनोति...to स्नुषा; *m.* सभजन्तीति वा स्नुषा. 2-3. *a. d.* read for सु इत्यपत्यनाम etc. द्यु(*d.* त्य)-पत्यनामपी(*d.* सुप)ठितं । तदियं श्वशुरस्य etc. 4. *d.* omits ते before ओषधी°. 6. *a. d.* omit सृता. 10. Bi. ms. ग and Durga read अपागूहन्नमृतां, R. Bi. J. अप्यगूहन्नमृतां. 11. Bi. mss. क, ख, ग °दजहाद्वौ.

4-5. उक्षतेर्वा सेचनार्थस्य—*Cf.* " उक्ष सेचने " Dhatup. 1. 658.

6. ' सरण्यूः '—Nigh. V. 6. 5.

8-9. RS. X. 17. 2; AV. 18. 2. 33.

10. अप्यगूहन्—Durga reads अपागूहन् for अप्यगूहन् of *Yâskabhâsya*.

10. अप्यश्विनौ—अपि is not repeated in the *vritti*.

14. For the legend of त्वाष्ट्री सरण्यूः, see also Muir, Vol. V. pp. 227-8.

**आश्वमेव रूपं कृत्वा तामनुसृत्य संबभूव । ततोऽश्विनौ जज्ञाते । सवर्णायां मनुः । तदभिवादिन्येषर्ग् भवति ॥ १० ॥**

**अपागूहन्**–इति । देवश्रवस आर्षम् । **अपागूहन् अमृताम्** एतामुपसं वृषाकपाय्यवस्थायां **मर्त्येभ्यः** मनुष्येभ्यः । के ते । रश्मयः । **कृत्वी सवर्णामददुर्विवस्वते** । तत्सवर्णामेतां कृत्वा सरण्यूम् अददुर्विवस्वते आदित्याय । **उत अश्विनौ** 5 **अभरत्** स्तुतिभिः सा उषाः । स ह्यश्विनोः स्तुतिकालः । अथवा । सरण्यूरभरत् हविषा । स ह्यश्विनोर्यागकालः । **यत् तत् आसीत्** उषसो रूपं सरण्य्वा वा **अजहात्** अत्यजत् **द्वा–द्वौ मिथुना–मिथुनौ** सरण्यूः । **मध्यमं च माध्यमिकां च वाचमिति नैरुक्ताः** । यदा हि सरण्यूरादित्यस्य सकाशं मण्डलमनुप्रविष्टा भवत्यविभागेन तदोदिते आदित्ये विच्छिद्यते मध्यमस्य माध्यमिकायाश्च वाचः काल 10 इति एष तयोस्त्यागः ।

**यमं च यमीं चेत्यैतिहासिकाः** । तन्मतेन मन्त्रार्थस्य योजना । त एव रश्मयः प्राणाधिदेवताभावमापन्नाः तेष्वन्यत्तद्रूपं चेत्यैतिहासिको व्यवहारः । तां त्वाष्ट्रीं सरण्यूमश्वां कृत्वा तथा सत्यश्विनोर्जन्म भविष्यत् पश्यन्तो लोकहिताय **अमृताम्** अमरणधर्मिणीं देवीम् **अपागूहन्**नन्तर्हितां चक्रुः **मर्त्येभ्यो** मनुष्येभ्यः । उत्तरान् कुरून् प्रति निन्युः । 15 ततश्चान्यां तत्**सवर्णां** छायाप्रभवां **कृत्वा** **तामददुर्विवस्वते** । **उताश्विनावभरत्** । **यत्** आश्वं **तदा** रूप**मासी**त्तेन **सा सरण्यूरश्विनावभरत्**–अजनयत् वा

2. Bi. J. conclude XII. i. 10 with °न्येषर्ग् भवति. 3. *a.* marks verse 10, after इति; *a. d.* आगूहन् for अपागूहन्. 5. *d. m.* सरण्यूं for सरण्युं of *bi. j.* 6. *d.* अभवत्, *bi. j. m.* अभरत; *a. d.* add साश्विनावभरत् before स्तुतिभिः. 8. *d.* द्वौ द्वौ for द्वा द्वौ. 10. *m.* मध्यमिकस्य for मध्यमस्य. 13. *d.* तेष्वन्यद्रूपं, *bi. j.* तेष्वन्यत्तद्रूपं. 14. *d.* omits सति and reads भविष्यं for भविष्यत्. 16. *a. d.* न मे ददुः, *bi. j.* तामददुः. 17. *a. d.* यदाश्वरूपं आसीत्तेन; *a. d.* omit वा after अजनयत्.

2. सवर्णायां मनुः—Durga in his *vritti* below does not refer to this birth of Manu.

13. तेष्वन्यत्तद्रूपं—The meaning of this is not clear.

15. उत्तरान् कुरून्—There is no reference to the Uttara Kurus in the legend as given by Yâska.

अपुष्णात् उत्तरेषु कुरुषु । **अजहादु द्वा मिथुना सरण्यूः । द्वावन्यौ मिथुनौ यमं च यमीं चेति विवस्वतः** सकाशाद् **जहात्** हित्वा ननाशेति ।

**तत्रेतिहासमाचक्षते** । ऋजुरितिहासार्थः । यथा **त्वाष्ट्री सरण्यूः** विवस्वतोढा सा च तस्मात् ननाश । **तदभिवादिन्येषर्ग्भवति** ॥ १० ॥

5 "**त्वष्टा॑ दुहि॒त्रे व॑ह॒तुं कृ॑णो॒तीती॒दं विश्वं॒ भुव॑नं॒ समे॑ति ।**

**य॒मस्य॑ मा॒ता प॑र्यु॒ह्यमा॑ना म॒हो जा॒या विव॑स्वतो ननाश ॥**"

**त्वष्टा दुहितुर्वहनं करोतीतीदं विश्वं भुवनं समेति । इमानि च सर्वाणि भूतान्यभिसमागच्छन्ति । यमस्य माता पर्युह्यमाना महतो जाया विवस्वतो ननाश । रात्रिरादित्यस्यादित्योदयेऽन्तर्धीयते ॥ ११ ॥**

10 **त्वष्टा॑ दुहि॒त्रे**–इति । पूर्वयैव समानार्षं विनियोगश्च । **त्वष्टा** देवो विश्वकर्मा यं पुराणविदो वदन्ति सः **दुहित्रे–दुहितुः वहतुं–वहनं**–विवाहं **करोतीति इदं विश्वं भुवनं**–भूतजातं विवाहदर्शनप्रेप्सया **समेति** । स हि विवाहानां स्वभावः । **यमस्य माता** । भविष्यता योगेनोच्यते । **पर्युह्यमाना**–पर्यूढा यमं च यमीं च जनयित्वा ततः **महः–महतः जाया विवस्वतः** देवस्य जाया भार्या हित्वा अपत्ये 15 मिथुनौ, आश्वं रूपं कृत्वा **ननाश** इति ।

---

2. *a. d.* add एव after विवस्वतः. 7. R. C. D. and Durga करोतीतीदं, Bi. J. करोतीदं; Bi. mss. क, ख, ग omit इति इदं विश्वं भुवनं समेति. 9. Bi. mss. क, ख, ग have °हीयते for °धीयते; Bi. J. °धीयते ॥ ११ ॥ **इति निरुक्तौ द्वादशाध्यायस्य प्रथमः पादः ॥ १२, १ ॥**; C. D. mark the *Khaṇḍa* only as ॥११॥. They do not mark the *pâda*. With अन्तर्धीयते ends the *first pâda* of the twelfth adhyâya. Bi. J. conclude XII. i. 11 with अन्तर्धीयते. 10. *a.* marks verse 11, after इति. 11. *a. d. m.* omit दुहित्रे. 11–12. *a.* alone omits from विवाहं to स हि and reads as वहनं विवाहानां स्वभावः.

---

5–6. RS. X. 17. 1; AV. 3. 31. 5; 18. 1. 53: cf. Bṛh. D. vii. 7.

7. **इति इदं विश्वं भुवनं समेति**—This is omitted by the Bi. mss. क, ख, ग.

नैरुक्तपक्षे तु **त्वष्टा**–मध्यम· तमोभागस्य· उपसः **दुहित्रे–दुहितुः** दूरे हितायाः प्रकाशरूपायाः **वहतुं–वहनं** विवस्वतः **करोति । इदं विश्वं भुवनं समेति ।** प्रभातमिति मत्वा **सर्वाणि भूतानि** स्वासु स्वास्वितिकर्तव्यतासु **अभिसमा-गच्छन्ति । यमस्य माता पर्युह्यमाना ।** यमस्य मध्यमस्य माता देवधर्मेण । अथवा । द्युस्थानस्य यैव जाया सा मातेति । जायतेऽस्यां पुत्रत्वेन पतिः **जाया**–भार्या । 5 **महतो विवस्वतः** प्रकाशेन प्रोत्सार्यमाणा ननाश -नश्यति । संक्षेपतो भाष्यकारोऽर्थं निराह । **रात्रिरादित्यस्य** उषा जाया । सा **आदित्यस्योदयेऽन्तर्धीयते** इति ॥ ११ ॥

**सविता व्याख्यातः । तस्य कालो यदा द्यौरपहततमस्काकीर्ण-रश्मिर्भवति । तस्यैषा भवति ॥ १२ ॥** 10

**सविता** (७) इति वक्तव्यम् । स पुनरेषः **व्याख्यातः** अभिधानतः । इह पुनरादित्यः । **तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति ।** यदा यस्मिन् काले द्यौरेव अपहततमस्का भवति न पृथिवी । पृथिव्यां तमो भवति । दिव्यपहते तमसि विक्षिप्ता अस्यां रश्मयो भवन्ति । स सावित्रः कालः । तस्मिन् काले आदित्यः सवितोच्यते । **तस्य** सवितुः तत्कालोपलक्षितस्य **एषा** ऋक् प्राधान्यस्तुतिः 15 **भवति** ॥ १२ ॥

**"विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे ।**
**वि नाकमख्यत् सविता वरेण्योऽनु प्रयाणमुषसो वि राजति ॥"**

---

1. *a. d. m.* omit दुहित्रे. 3. *d.* omits one स्वासु. 7-8. *a. d.* °र्धीयते इति ॥ ११ ॥ सप्तदशस्य (*d.* अध्यायस्य) प्रथमः पादः, *bi. j.* °र्धीयते इति ॥ ११ ॥ इति ऋज्वर्थायां निरुक्तवृत्तौ सप्तदशाध्यायस्य (द्वादशाध्यायस्य) प्रथमः पादः ॥ १२।१ ॥. 9. Bi. J. read द्वितीयः पादः । before सविता व्याख्यातः. 10. Bi. J. conclude XII. ii. 1 with भवति. 12-13. *a.* omits from आकीर्णरश्मि to अपहततमस्का (inclusive). 13. *a.* omits पृथिवी. 15. *a. d.* omit ऋक्.

---

11. 'सविता'—Nigh. V. 6. 7, व्याख्यातः, i. e. in Nir. X. 31.

17-18. RS. V. 81. 2; VS. 12. 3; TS. 4. 1. 10. 4; MS. 2. 7. 8: 84. 14. 15; KS. 16. 8; S'B. 6. 7. 2. 4; AB. 1. 29. 14; KB. 9. 3; AS'. 4. 9. 5.

सर्वाणि प्रज्ञानानि प्रतिमुञ्चते मेधावी । कविः क्रान्तदर्शनो भवति, कवतेर्वा । प्रसुवति भद्रं द्विपाद्भ्यश्च चतुष्पाद्भ्यश्च । व्यचिख्यपन्नाकं सविता वरणीयः । प्रयाणमनूषसो विराजति ।

"अधोरामः सावित्र"

5 इति पशुसमाम्नाये विज्ञायते ।

कस्मात् सामान्यादिति । अधस्तात्तद्वेलायां तमो भवत्येतस्मात् सामान्यात् । अधस्ताद्रामोऽधस्तात् कृष्णः कस्मात् सामान्यादिति ।

"अग्निं चित्वा न रामामुपेयात् ।"

"रामा रमणायोपेयते न धर्माय ।"

10 कृष्णजातीयैतस्मात् सामान्यात् ।

"कृकवाकुः सावित्र"

इति पशुसमाम्नाये विज्ञायते । कस्मात् सामान्यादिति । कालानुवादं परीत्य । कृकवाकोः पूर्वं शब्दानुकरणम्, वचेरुत्तरम् ॥

भगो व्याख्यातः । तस्य कालः, प्राग् उत्सर्पणात् । तस्यैषा 15 भवति ॥ १३ ॥

---

6. C. D. तद्वेलायां, Bi. R. तद्वेडायां, Bi. mss. क, ख, ग and J. तद्वेलायां. 15. Bi. J. conclude XII. ii. 2 with भवति.

---

1. **प्रज्ञानानि, मेधावी,** and **वरणीयः** (line 3)—are omitted by Durga.

2, 3, 6–7. व्यचिख्यपन्, सविता, एतस्मात्सामान्यात्—these words are not repeated in the *vritti*.

4. अधोरामः सावित्रः—KS. 5. 8. 1; TS. 5. 5. 22. I; VS. 29. 58.

5. पशुसमाम्नाये विज्ञायते—See VS. 24. 1–40.

8. अग्निं चित्वा न रामामुपेयात्—*Cf.* "अग्निं चित्वा प्रथमं चित्वा न रामामुपेयात् । द्वितीयं चित्वा नान्येषां स्त्रियः । तृतीयं चित्वा न कांचन ।" KS. 21. 7.

9. रामा रमणायोपेयते न धर्माय—Cf. Vâsiṣṭha Dh. Sû. XVIII. 15–16. नाग्निं चित्वा रामामुपेयात् । कृष्णवर्णा या रामा रमणायैव न धर्माय ।

11. कृकवाकुः सावित्रः—VS. 24. 35; TS. 5. 5. 18. 1; MS. 3. 14. 15; KS. 5. 7. 8.

**विश्वा रूपाणि प्रति मुञ्चते कविः**–इति। श्यावाश्वस्यार्षम्। आभिप्लविके प्रथमेऽहनि विनियोग.। शिक्यपाशप्रतिमोके च यजमानस्याग्नौ। **विश्वानि सर्वाणि रूपाणि** रूपवत्सु अर्थेषु **प्रतिमुञ्चते**–आवध्नाति। तमोऽपघ्नन् रूपाण्याविःकुर्वन्। **कविः क्रान्तदर्शनः**। अथवा। **कवतेः** धातोः गत्यर्थस्य कविः। कवति गच्छत्यसौ नित्यम्। किंच कवित्वादेव **प्रासावीत् प्रसुवति** जनयति अभ्यनुजानाति च। 5 **भद्रं द्विपदे चतुष्पदे द्विपाद्भ्यश्च** मनुष्यादिभ्यः **चतुष्पाद्भ्यश्च** गवादिभ्यः। यद्यत्तेषां भद्रं कल्याणं तत्तत्प्रसुवति। किंच। **वि नाकम् अख्यत्**। विख्यापयति नाकं द्यां च विदर्शयति। तदा हि तस्यां विकीर्णा रश्मयो भवन्ति। किंच **अनुप्रयाणम् उषसः विराजति**। उषसः प्रयाणमनु विराजति प्रकाशते। सोऽस्माकं नामेदं करोत्वित्याशिषा स्तुतिर्निराकाङ्क्षा। 10

**वि नाकम् अख्यत्**–इति सवितुः कालोपलक्षणकं मन्त्रलिङ्गं तत् पशुगुणसामान्येन समर्थयन्नाह।

**"अधोरामः सावित्र"**

**इति पशुसमाम्नाये विज्ञायते।**

**कस्मात् गुणसामान्यात् इति। अधस्तात् तद्वेलायां तमो भवति। 15** उपरिष्टाच्च ज्योतिः। शुक्लं तदा दिवि भवति कीर्णरश्मित्वात्तस्याः। अधस्तात्तु भूम्यां तदा तमो भवति। एतस्मात् कालदेवतागुणसामान्यात् पशुरपि तथारूप एव भवति सावित्रः।

आह **अधोरामः** इति किमुक्तं भवति। उच्यते। **अधस्तात् कृष्णः** इति यदुक्तं स्यात् तदुक्तं भवत्यधोराम इति। 20

1. *a.* marks verse 12, after इति. 2. *d.* शक्यपाशप्रतिमोके. 3. *a. d.* add इति after आवध्नाति. 4. *a. d.* omit कवति. 7. *d.* व्याख्यापयति. 8. *a. d. m.* विकीर्णा रश्मयो, *bi. j.* विकीर्णरश्मयो. 11. *a. d.* कालोपलक्षकं. 13. *a. d.* सवित्र for सावित्र. 15. *bi.* तद्वेळाया, *m. j.* तद्वेलायां. 16. *d.* भूम्या for भूम्यां. 20. *a.* omits स्यात्तदुक्तं.

2. विनियोगः—Ās'va. Śrau. Sū. vii. 5.

2. यजमानस्याग्नौ—See MS. 3. 2. 1.

4. कवि·=क्रान्तदर्शनः, "अतीत-अनागत-विप्रकृष्टविषयं युगपद् ज्ञान यस्य स क्रान्तदर्शनः"–इत्युवटः.

आह । **कृष्णः कस्मात् सामान्यात्** राम इत्युच्यते । शृणु । विज्ञायते हि

"**अग्निं चित्वा** प्रथमं चित्वा न **रामामुपेयात्** "

इति । **रामा** इति शूद्रोच्यते । सा हि **रमणाय एव उपेयते न धर्माय** । रमणार्थमेव सा । **कृष्णजातीया** । इत्येकार्थौ शब्दौ अधुना उत्सृज्य रामां स्त्रियं प्रवीणादि-
5 शब्दवत् पशावयं रामशब्दो वृत्तः कृष्णसामान्यमात्रेण ।

"**कृकवाकुः सावित्र** " **इति पशुसमाम्नाये विज्ञायते** । सः **कस्मात् सामान्यात् इति** । उच्यते । **कालानुवादं परीत्य** । सवितुः कालमसौ वक्तीति एवं परीत्य—परिज्ञाय समाम्नाये तस्य सावित्रत्वम् । कृकवाकुशब्दमधुना निर्वक्ति । **कृकवाकोः पूर्वं शब्दानुकरणम्** । कृकवाकुशब्दस्य पूर्वपदं शब्दानुकरणम्, कृकः—इत्येवमसौ
10 शब्दं करोति । **वचेरुत्तरम्** वाकुरित्येतत् । कृक —इत्येवं वक्तीति कृकवाकुः ॥

**भगः** (८) वक्तव्यः । स पुनरेषः **व्याख्यातः** श्रीभगेन शब्दव्युत्पत्तितः । **तस्य कालः प्रागुत्सर्पणात्** तस्मात्सावित्रात्कालात् परत एतदुत्तमं ज्योतिर्भगाख्यं भवति । **तस्य एषा भवति** ॥ १३ ॥

" **प्रा॒त॒र्जितं॒ भग॑मु॒ग्रं हु॑वेम व॒यं पु॒त्रमदि॑ते॒र्यो वि॑ध॒र्ता ।**
15 **आ॒ध्रश्चि॒द्यं मन्य॑मानस्तु॒रश्चि॒द्राजा॑ चि॒द्यं भगं॑ भ॒क्षीत्याह॑ ॥** "

**प्रातर्जितं** भगमुग्रं **हुयेम वयं पुत्रमदितेर्यो विधारयिता सर्वस्य । आध्रश्चिद्यं** मन्यमान **आढ्यालुर्दरिद्रः । तुरश्चित्, तुर इति यमनाम तरतेर्वा त्वरतेर्वा त्वरया तूर्णगतिर्यमः । राजा चिद्यं भगं भक्षीत्याह ।**

4. *a.* उपसृज्य for उत्सृज्य. 6. *a.* सवित्र for सावित्र. 11-12. *a. d. m.* omit तस्य कालः प्रागुत्सर्पणात्. 17. D. आढ्यालुर्द°, Bi. J. C. आढ्यालुर्द°, R. and Bi. ms. च—आढ्याडुर्द°.

11. 'भगः'—Nigh. V. 6. 8; व्याख्यातः, i. e. in Nir. III. 16.

14-15. RS. VII. 41. 2; AV. 3. 16. 2, VS. 34. 35; TB. 2. 8. 9. 7-8; ApMB. 1. 14. 2.

16. **हुयेम**—Durga does not read हुयेम. He has आह्वयामहे for it.

17-18. **तुर इति यमनाम तरतेर्वा त्वरतेर्वा त्वरया**—These words are omitted by Durga.

**"अन्धो भग इत्याहुरनुत्सृप्तो न दृश्यते । प्राशित्रमस्याक्षिणी निर्जघान ।"**

**इति च ब्राह्मणम् ।**

**"जनं भगो गच्छति"**

**इति वा विज्ञायते । जनं गच्छत्यादित्य उदयेन ॥** 5

**सूर्यः सर्तेर्वा सुवतेर्वा स्वीर्यतेर्वा । तस्यैषा भवति ॥ १४ ॥**

**प्रातर्जितं भगम्**–इति । वसिष्ठस्यार्षम् । प्रातः प्रातस्तमांसि यो जयति स भवति प्रातर्जित् । तं **प्रातर्जितं भगं**–सूर्यम् **उग्रम्**–उद्गूर्णम् अभ्युद्यतमुदयाय **हुवेम**–आह्वयामहे **वयं पुत्रम् अदितेः यः विधर्ता–विधारयिता सर्वस्य** जगतः स्वेनानुग्रहेण । किंच । **आध्रश्चिद् यं मन्यमानः । आढ्यालुः** आढ्यानां स्पृहयिता 10 **दरिद्रः** । स यं मन्यमानः आकाङ्क्षन्नहन्यहनि पूजयन्नास्ते अपि नामोदियात् भगस्ततो वान्नार्थं पर्यटेयमिति । **तुरश्चित् ।** तुरोऽपि **यमः तूर्णगतिः** । सर्वान् प्राणिन आभिमुख्येनोपसंहाराय तूर्णगतिस्त्वरितगतिः । यं मन्यमान आस्ते प्रेताधिपतिः । तदुदयाद्धि कालातिक्रमेणासावुपसंहरति प्राणिनः । **राजा चित् ।** राजापि चार्थिनां कार्यचिकीर्षया **यं भगं भक्षि,** उदयं भज इत्येवमाह । तं वयं भगमाह्वयामहे । 15

---

4–5. Bi. mss. क, ख, ग do not read वा after गच्छतीति. 5. Bi. ms. च, and C. D. R. omit विज्ञायते. 6. Bi. J. conclude XII. ii. 3 with तस्यैषा भवति. 7. *a.* marks verse 13, after इति. 8. *d.* adds उर्ण after उद्गूर्ण. 11. *m.* उदयात् for उदियात् of *bi. j.* 12. *a. d. m.* वार्तार्थं, *bi. j.* वान्नार्थं; *d.* यस्तूर्णगतिः for यमस्तूर्णगतिः. 15. *a. d. m.* यं भगं भक्षि उदय भज इत्येवमाह, *bi. j.* यं भगं भाक्षि तम् उदयं भजति इत्येवमाह.

---

1. "अन्धो भगः"—Cf. "तद् भगाय परिजह्रुः । तस्याक्षिणी निर्जघान । तस्मादाहुरन्धो भग इति"—KB. 6. 13; also cf. "तद् भगाय दक्षिणत आसीनाय पर्याजह्रुः । तद् भगोऽवेक्षां चक्रे । तस्याक्षिणी निर्ददाह । तस्मादाहुरन्धो भग इति ।"—ŚB. 1. 7. 4. 6; and "तस्मादाहुरन्धो वै भग इति"—GB. 11. 1. 2.

4. "जनं भगो गच्छति"—Cf. MS. 1. 6. 12: जनं भगोऽगच्छत् ।

5. **वा**—omitted by Durga and by the mss. क, ख, ग of Bi.

5. **विज्ञायते**—Durga, the MSS. C. D., and Roth omit विज्ञायते.

5. **उदयेन**—omitted by Durga.

आह । “ **अन्धः भगः इत्याहुः ।** ” तस्य कोऽर्थ इति । उच्यते । स हि सूर्यभावम् **अनुत्सृतो न दृश्यते** । नास्मिन् द्रष्टॄणां ध्यानं दर्शनमस्तीत्यन्धः । न पुनरसावेव न पश्यति । “ **प्राशित्रमस्याक्षिणी निर्जघान** ” **इति च** इति ऐतिहासिकपक्षाभिप्रायोऽयमर्थवादः प्राशित्रभागस्यानन्वीक्षणस्तुत्यर्थम् । “ **जनं भगो गच्छति** ” **इति** । तदेतत् प्रसिद्धमेव । यदा तदात्मना **जनमादित्यो गच्छति** ॥

**सूर्यः** (९) इति वक्तव्यम् । स पुनरयं भगकालात्सृतः सूर्यो भवति । **सर्तेः वा** सूर्यः । **सुवतेर्वा** प्रसवार्थस्य । स एव हि इदं सर्वं प्रसुवति । जनयतीत्यर्थः । **स्वीर्यतेर्वा** । सुपूर्वस्य वा ईरयतेः गत्यर्थस्य । वायुना ह्ययं सुष्ठु ईर्यते । प्रेर्यत इत्यर्थः । **तस्य एषा भवति** प्राधान्यस्तुतिः ॥ १४ ॥

10 “ उदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ॥ ”

**उद्वहन्ति तं जातवेदसं रश्मयः केतवः सर्वेषां भूतानां दर्शनाय सूर्यमिति । कमन्यमादित्यादेवमवक्ष्यत् । तस्यैषापरा भवति ॥ १५ ॥**

**उदु त्यं जातवेदसम्**–इति । प्रस्कण्वस्यार्षम् । आश्विने विनियोगः । यं

1. *d.* अधो for अन्धः. 3. *a. d.* add इति after पश्यति. 4. *a. d.* प्राशित्रस्य भागस्य, Bi. ms. ख—प्रासित्रभागस्य. 5. *d.* यदा तदात्मना, *bi. j.* यदा तदा तदा°. 13. Bi. mss. क, ख, ग do not have कमन्यमादित्यादेवमवक्ष्यत्; Bi. J. conclude XII. ii. 4, with अपरा भवति. 14. *a.* marks verse 14, after इति.

3. For the story of Prâśitrabhakṣaṇa see TŚ. 2. 6. 8.

6. ‘सूर्यः’—Nigh. V. 6. 9.

10–11. RS. I. 50. 1; AV. 13. 2. 16; 20. 47. 13; SV. 1. 31; VS. 7. 41; 8. 41; 33. 31.

10. देवं—Yâska does not repeat this word in his *bhâṣya*.

13. Durga and the Bi. mss. क, ख, ग omit **कमन्यमादित्यादेवमवक्ष्यत्.** Besides, the insertion of this sentence into the text serves no purpose.

14. आश्विने विनियोगः—Âs′va. S′rau. 6. 5.

**उद्वहन्ति** उदयमुपनयन्ति **जातवेदसम्** इति **सूर्यं केतवः**–**रश्मयः**, अश्वा वा यमुद्वहन्ति **सर्वेषां भूतानां दृशे**–**दर्शनाय सूर्यं तं** वयमभिप्रेतार्थसिद्धयेऽभिष्टुमः ।

**तस्य एषा अपरा भवति** । सा पुनः किमर्थम् । जातवेदसं सूर्यमिति श्रवणात् संदेहः किमियं जातवेदस्युत सौरीति । परा त्वसंशयमेव सौरीति परां निजगाद ॥ १५ ॥

**" चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।** 5
**आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥"**

**चायनीयं देवानामुदगमदनीकम् । ख्यानं मित्रस्य वरुणस्याग्नेश्च । आपूपुरद् द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन तेन । सूर्य आत्मा जङ्गमस्य च स्थावरस्य च ॥**

**अथ यद्रश्मिपोषं पुष्यति तत् पूषा भवति । तस्यैषा भवति ॥ १६ ॥** 10

**चित्रं देवानाम्**–इति । कुत्सस्यार्षम् । आश्विने विनियोगः । **चित्रं**–**चायनीयं**–पूजनीयम् । किं पुनस्तत् । **देवानां**–रश्मीनां यदेतत् **उदगात् अनीकं**–समूहः । किमस्य । **चक्षुर्मित्रस्य वरुणस्याग्नेः** । एतस्मिन् मित्रस्य वरुणस्य अग्नेश्च चक्षुः–**ख्यानम्** इत्यर्थः । य एषः सूर्यः **आत्मा जङ्गमस्य च स्थावरस्य च** सर्वभूतानुप्रवेशी **आप्राः**–**आपूपुरत्** आपूरयति **द्यावापृथिव्यौ च अन्तरिक्षं च** 15 **महत्त्वेन सूर्य आत्मा** । एतस्मिन् मित्रवरुणाग्न्यादीनां देवतानां ख्यानम् । अनेन

---

2. *a. d.* यमुद्वहन्ति य इष्टाः सर्वेषां; *a. d.* अभिप्रेतार्थप्रसिद्धये. 4. *d.* उत सौरी for उत सौरीति of *bi. j.* 8. Bi. mss. क, ख, ग omit तेन. 10. Bi. J. conclude XII. ii. 5, with तस्यैषा भवति. 13. *d.* किमस्याम्; *a. d.* omit च after अग्नेः. 15. *a. d.* अपूपुरत्. 16. *a. d.* एतत् for एतस्मिन्.

---

5-6. RS. I. 115. 1; AV. 13. 2. 35; 20. 107. 14; VS. 7. 42; 13. 46; TS. 1. 4. 43. 1; MS. 1. 3. 37: 43. 8-10; ŚB. 4. 3. 4. 10; 7. 5. 2. 27; TB. 2. 8. 7. 3; AA. 3. 2. 3. 10; TA. 1. 7. 6; 2. 13. 1.

7. **उदगमत्**—omitted by Durga.

8. Bi. mss. क, ख, ग and Durga omit **तेन**.

11. आश्विने विनियोगः—Âśva. S'rau. 6. 5.

सूर्यात्मना य एतान् मित्रप्रभृतीन् पश्यति स साधु पश्यतीत्यभिप्रायः। विज्ञायते हि रहस्यब्राह्मणे

"य एष सूर्य आत्मा जगतस्तस्थुषश्च"

–इति। एतदिहैवोपेक्ष्यम् इति।

5 भेदपक्षे तु मित्रप्रभृतीनां एतच्चक्षुरिति। याज्ञिकपक्षे चक्षुषा ते पश्यन्तीति। तत्रापि विज्ञायते हि।

"एष वै विश्वेषां देवानां चक्षुः"

–इति।

**अथ यत्**–यदा **रश्मिपोषम्** आपूर्णस्तेजसा रश्मीन् सूर्यः **पुष्यति** बिभर्ति
10 **तत्**–तदैव **पूषा (१०) भवति। तस्य एषा भवति** ॥ १६ ॥

**"शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि।**
**विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु॥"**

**शुक्रं ते अन्यल्लोहितं ते अन्यद्यजतं ते अन्यद्यज्ञियं ते अन्यत्। विषमरूपे ते अहनी कर्म। द्यौरिव चासि। सर्वाणि प्रज्ञानान्यवस्यन्नवन्।**
15 **भाजनवती ते पूषन्निह दत्तिरस्तु। तस्यैषापरा भवति॥ १७॥**

5. *a. d.* omit ते; *a. d.* पश्यतीति for पश्यन्तीति; *a. d.* अत्रापि for तत्रापि. 13. Bi. ms. ख—शुक्रं तेऽन्यल्लोहितं तेऽन्यद्यजतं तेऽन्यद्यज्ञियं तेऽन्यद्विषमरूपे. 14. Bi. ms. क—प्रज्ञानान्यवस्यं नवं भाजनवती. 15. C. भाजवती; Bi. J. conclude XII. ii. 6, with अपरा भवति.

3. "य एष etc."—Ait. Âr. 2. 2. 4.

7. "एष वै etc."—The quotation is not traced.

10. 'पूषा'—Nigh. V. 6. 10.

11-12. RS. VI. 58. 1; SV. 1. 75; TS. 4. 1. 11. 2; MS. 4. 10. 3: 150. 4-5; KS. 4. 15; TA. 1. 2. 4; 1. 10. 1-2; 4. 5. 6. 12.

13-14. Durga omits **विषमरूपे, ते कर्म,** and **च** in चासि.

14-15. Durga reads सर्वाः प्रज्ञाः for सर्वाणि प्रज्ञानानि, भन्दनीया for भाजनवती, and दानम् for दत्तिः. See page 1123, lines 8 and 10.

**शुक्रं ते अन्यत्**—इति । भरद्वाजस्यार्षम् । चातुर्मास्येषु विनियोगः पौष्णे हविषि । हे पूषन् **शुक्रम् अन्यत् ते** तव रूपं यल्लोहितम् **अन्यत्**तव रूपम् । शुक्लेन व्यपदेशात्सामर्थ्याल्लोहितादि । **यजतं**—यज्ञियं यज्ञार्हम् **अन्यत्** । अयज्ञियमयज्ञार्हमन्यत् । भगांशरूपेण हि नायमिज्यते । विज्ञायते हि

"तस्मादेतौ भगांशौ यज्ञेन यजन्ते"   5

—इति । किंच । **विषुरूपे** भवतः । एते शुक्लकृष्णे रूपे । **अहनी**—अहोरात्रे । कर्मणा उदयेन शुक्लमहः करोषि अस्तमयेन कृष्णम् । **द्यौरिवासि** । यथा द्यौरावृत्य सर्वं वर्तते एवं त्वमपि । किंच **विश्वाः हि मायाः** सर्वाः प्रज्ञाः प्रज्ञावतां त्वम् **अवसि** पालयितृत्वात् पालयसि उद्यन् अनुगृह्णासि । हे **स्वधावः**—अन्नवन् **पूषन्** यं त्वामेवमादिगुणयुक्तमद्राक्ष्म तव तस्य **भद्रा**—भन्दनीया स्तुत्या **रातिः** दानम् **इह** 10 अस्मिन् कर्मणि अस्मान् प्रति **अस्तु** इत्येतदाशास्महे ।

**तस्य एषा अपरा भवति** । सा पुनः किमर्थम् इति । पथि रक्षितृत्वे पूष्णोऽधिकारः । तत्परिप्रख्यापनार्थम् । अथवा ।

"इयं वै पूषा"

इति विज्ञायते । तद्व्युदासार्थम् ॥ १७ ॥   15

**"पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळर्कम् ।**

**स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्र पूषा ॥"**

---

2. *a. d. m.* omit ते. 3. *d.* यज्ञियमयत्नार्हं. 3-5. *m.* omits through mistake from यज्ञियं यज्ञार्हं to यज्ञेन यज°. 3-4. *d.* अयज्ञियमयज्ञियार्हमन्यत्. 5. *a. d.* तस्मादेतौ भगांशौ न यज्ञेन यजन्ते इति. 6. *a. d.* omit किंच. 9. *a. d.* read पालयिता for पालयितृत्वात्. 9-10. *a. d.* omit अन्नवन् and यं त्वाम्. 16 R. D. अभ्यानळर्कम्, Bi. अभ्यानळर्क्कम्, J. अभ्यानडर्कम्. 17. R. रसच्छु°, Bi. J. रासच्छु°.

---

1. पौष्णे हविषि—MS. I. 10. 1; 4. 10. 3.

3-4. अयज्ञियमयज्ञार्हमन्यत्—This inference of Durga is not supported by Yâska.

4. विज्ञायते हि—*Cf.* MS. 1. 6. 16: "तस्मादेतौ यज्ञेन यजन्ते."

14. इयं वै पूषा—MS. 2. 5. 5.

16-17. RS. VI. 49. 8; VS. 34. 42; TS. 1. 1. 14. 2.

पथस्पथोऽधिपतिं वचनेन कामेन कुतोऽभ्यानडर्कमभ्यापन्नोऽर्क-मिति वा । स नो ददातु चायनीयाग्राणि धनानि । कर्मकर्म च नः प्रसाधयतु पूषेति ॥

अथ यद्विषितो भवति तद्विष्णुर्भवति । विष्णुर्विशतेर्वा, व्यश्नोतेर्वा ।
5 तस्यैषा भवति ॥ १८ ॥

**पथस्पथः परिपतिम्**–इति । ऋजिश्वन आर्षम् । पौष्णे हविषि पञ्चमेऽहनि व्यूढे विनियोगः । **पथस्पथः** । सर्वमार्गाणामित्यर्थः । किम् इति । **परिपतिम्–अधिपतिं वचस्या–वचनेन** स्तुत्या **कामेन** स्वेन पूषणं कामेनैव प्रत्यभिमुखीकृत्य **अर्कम्** अहम् **अभ्यानट्** । स्तुत्या कामप्राप्त्यर्थमभिव्याप्नोमि । **सो**ऽभिव्याप्तः सन् **नो**ऽस्मभ्यं
10 **रासत्–ददातु** । किम् । **शुरुधश्चन्द्राग्राः** । शुच संरुन्धन्ति यानि **धनानि चायनीयाग्राणि** अभिपूजितागमानि । धर्म्य आगमो येषाम् । किंच । तैर्धनैर्धर्म-लब्धैः **धियं धियं सीषधाति**–साधयति **प्र पूषा** । **कर्म कर्म** अस्माकं इष्टिपशुसो-मादिलक्षणं **प्रसाधयतु पूषा** । यागायाविघ्नेनोपनामयतु इत्यर्थः ।

**अथ यत्** यदा **विषितो** व्याप्तोऽयमेव सूर्यो रश्मिभिः **भवति तत्** तदा
15 **विष्णुः** (११) **भवति** । **विशतेर्वा** । यदाविष्टः प्रविष्टः सर्वतो रश्मिभिर्भवति तदा विष्णुर्भवति । **व्यश्नोतेर्वा** । विपूर्वस्य वाश्नोतेः । यदा रश्मिभिरतिशयेनायं व्याप्तो भवति व्याप्नोति वा रश्मिभिरयं सर्वं तदा विष्णुरादित्यो भवति । **तस्य एषा भवति** ॥ १८ ॥

---

1. Bi. कुतोऽभ्यानडर्कम्, Bi. mss. क, ख, ग—कुतोऽभ्यानलर्कम्, J. R. कुतोऽभ्या-नडर्कम्, C. D. कुतोभ्यानलर्कम्. 5. Bi. J. conclude XII. ii. 7 with तस्यैषा भवति. 6. *m.* ऋजिश्विन for ऋजिश्वन of *bi. j.*; *d.* पौष्णहविषि. 8. *a. d.* एवं for एव. 9. *bi. j.* अभिव्याप्नोति. 10. *m.* शुरुध्यश्चन्द्राग्राः. 11. *m.* अभिपूजिता-निगमानि. 11–12. *a. d. m.* धर्मलब्धैः. 13. *a. d.* उपमानयतु. 14. *a. d.* विषतो, *bi. j.* विषिः, *m.* विषितो; *a. d. m.* omit तत्. 15. Bi. ms. क reads सर्वतो रश्मिर्भवति. 17. *a. d.* omit व्याप्तो भवति.

---

1. Durga does not repeat कुतो in his *vritti*.

1–2. Durga omits अभ्यापन्नोऽर्कमिति वा.

4. विष्णुर्विशतेर्वा—Durga reads विशतेर्वा only and omits विष्णुः.

11. चायनीया°—*Cf.* 'चायृ पूजानिशामनयोः' Dhâtup. I. 905.

15. 'विष्णुः'—Nigh. V. 6. 11.

"इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् ।
समूळ्हमस्य पांसुरे ॥"

यदिदं किं च तद्विक्रमते विष्णुः । त्रिधा निधत्ते पदम् । त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः । समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः । समूळ्हमस्य पांसुरे प्यायनेऽन्तरिक्षे पदं न दृश्यते । 5
अपि वोपमार्थे स्यात् समूळ्हमस्य पांसुल इव पदं न दृश्यत इति । पांसवः पादैः सूयन्त इति वा, पन्नाः शेरत इति वा, पिंशनीया भवन्तीति वा ॥ १९ ॥

इदं विष्णुः–इति । मेधातिथेरार्षम् । प्रायश्चित्ते आज्यासादने च विनियोगः ।

---

2. Bi. J. R. समूंळ्ह°; Bi. ms. क—समूंळ्ह°, Bi. ms. ख—समूंढ°; Bi. R. read पॉसुरे, Bi. mss. क, ख, ग and J. पांसुरे. 3. Bi. mss. क, ख, ग do not read त्रेधाभावाय, Bi. J. R. have it. 5. R., Bi. ms. च, and others समूढमस्य पांसुरे, Bi. समूळ्हमस्य पॉसुरे, C. J. समूळ्हमस्य पांसुरे, Bi. mss. क, ख, ग omit पॉसुरे. 5–6. Bi. J. दृश्यतेऽपि वोपमा°, R. and Bi. ms. च—दृश्यते । अपि वोपमा°. 6. Bi. J. C. समूळ्हमस्य पांसुल, R. Bi. ms. च and others समूढमस्य पॉसुल. 7. R. Bi. ms. च and others—पॉसवः, Bi. J. पांसवः; R. D. and Bi. ms. च—पंसनीया, C. पंसवनीया, Bi. J. पिंशनीया. 8. With भवन्तीति वा ends the *second páda* of the twelfth adhyâya; Bi. J. conclude here XII. ii. 8 and read as °भवन्तीति वा ॥ ८ ( १९ ) ॥ इति निरुक्तौ द्वादशाध्यायस्य **द्वितीयः पादः ॥ १२, २ ॥**; C. D. as usual mark the Khaṇḍa only as ॥ १९ ॥, and do not mark the páda.

---

1–2. RS. I. 22. 17; AV. 7. 26. 4; SV. 1. 222; 2. 1019; VS. 5. 15; TS. 1. 2. 13. 1; MS. 1. 2. 9: 18. 17–18; KS. 2–10; ṢB. 1. 6. 8.

3. **त्रेधाभावाय**—Bi. J. C. D. and R. read त्रेधाभावाय but Durga and Bi. mss. क, ख, ग omit it.

3, 7, 8. **त्रिधा, इति वा** after सूयन्त, and **इति** in भवन्तीति are omitted by Durga.

5. **पांसुरे**—Bi. mss. क, ख, ग omit पांसुरे.

5. प्यायने—Cf. 'प्यायी वृद्धौ' Dhâtup. I. 489.

9. प्रायश्चित्ते—Âśva. Śrau. 3. 10; MS. 1. 8. 9.

9. आज्यासादने—MS. 4. 1. 12.

**यदिदं किंचिद्विभागेनावस्थितं तद्विक्रमते विष्णुरा**दित्यः । कथमिति । यत आह । **त्रेधा निदधे पदं निधत्ते पदम्** । निधानं पदैः क्व । तत्र तावत् **पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः** । पार्थिवोऽग्निर्भूत्वा पृथिव्यां यत्किंचिदस्ति तद्विक्रमते तदधितिष्ठति । अन्तरिक्षे विद्युदात्मना दिवि सूर्यात्मना । यदुक्तम् ।

5 " तमू अकृण्वन् त्रेधा भुवे कम् "

इति । **समारोहणे** उदयगिरावुद्यन् पदमेकं निधत्ते । **विष्णुपदे** मध्यन्दिनेऽन्तरिक्षे । **गयशिरसि** अस्तंगिरौ **इत्यौर्णवाभः** आचार्यो मन्यते एवम् । **समूळ्हमस्य पांसुरे** । अस्मिन् **प्यायने** एतस्मिन् **अन्तरिक्षे** सर्वभूतवृद्धिहेतौ यन्मध्यन्दिनं **पदं** विद्युदाख्यं तत् **समूळ्हम्** अन्तर्हितम् । **न** नित्यं **दृश्यते** । तदुक्तम् । ' स्वप्नमेतन्म-
10 ध्यमं ज्योतिरनित्यदर्शनम् ' इति । **अपि वोपमार्थे स्यात् समूळ्हमिव पांसुले पदं न दृश्यत इति** । यथा पांसुले प्रदेशे पदं न्यस्तमुत्क्षेपणसमनन्तरमेव पांसुभिराकीर्णत्वात् न दृश्यते एवमस्य मध्यमं विद्युदात्मकं पदमाविष्कृतिसमकालमेव व्यवधीयते । नावतिष्ठत इत्यर्थः ॥

**पांसुरे** इति रो मत्वर्थः । अथ **पांसवः** कस्मात् । ते हि **पादैः सूयन्ते** ।
15 जन्यन्त इत्यर्थः । अथवा । **पन्नाः शेरत इति** । अथवा **पिंशनीयाः** ध्वंसनीयाः ध्वंसनार्हाः ते **भवन्ति** तदाकीर्णस्य दुर्दर्शीकत्वात् ॥ १९ ॥

**विश्वानरो व्याख्यातः । तस्यैष निपातो भवत्यैन्द्र्यामृचि ॥ २० ॥**

---

2. *a.* निदधात् पदैः, *d.* निधानपदैः; *a. d.* तत्तावत् for तत्र तावत्. 4. *d.* वैद्युतात्मना. 7. *a. d.* एवं मन्यते, *bi. j.* मन्यते एवम्. 8. *a. d.* omit पदं. 12. *d.* adds पदं after मध्यमं. 15–16. *a. d.* शेरत इति पिंशनीयाः दुर्दर्शीकत्वात्, *bi. j.* as text. 16. With दुर्दर्शीकत्वात् ends the commentary on the second pâda of the twelfth adhyâya; *bi. j.* read as °दुर्दर्शीकत्वात् ॥ ८ (१९) ॥ इति ऋज्वर्थायां निरुक्तवृत्तौ सप्तदशस्य (द्वादशस्य) अध्यायस्य द्वितीयः पादः ॥ १२।२ ॥; *a.* concludes as सप्तदशाध्यायस्य द्वितीयः पादः, *d.* as सप्तदशस्य द्वि°. 17. Bi. J. read तृतीयः पादः ।, before विश्वानरो व्याख्यातः; Bi. J. conclude XII. iii. 1 with °मृचि.

---

5. " तमू अकृण्वन् etc. "—RS. X. 88. 10.

9. तदुक्तम्—See Nir. V. 3.

**विश्वानरः** (१२) वक्तव्यः । स पुनरेषः **व्याख्यातः** अभिधानव्युत्पत्तितः ‘ प्रत्यृतः सर्वाणि भूतानि ’–इति । इह तु नियमतो द्युस्थानः । **तस्यैष निपातो भवत्यैन्द्र्यामृचि** ॥ २० ॥

“ **विश्वानरस्य वस्पतिमनानतस्य शवसः ।**

**एवैश्च चर्षणीनामूती हुवे रथानाम् ॥** ” 5

**विश्वानरस्यादित्यस्यानानतस्य शवसो महतो बलस्यैवैश्च कामैरयनैरवनैर्वा चर्षणीनां मनुष्याणामूत्या च पथा रथानामिन्द्रमस्मिन् यज्ञे ह्वयामि ॥**

**वरुणो व्याख्यातः । तस्यैषा भवति ॥ २१ ॥**

**विश्वानरस्य वस्पतिम्**–इति । 10

“ आ त्वा रथं यथोतये ”

इत्येतस्मिन्नैन्द्रे सूक्ते प्रियमेधेन दृष्टे निष्केवल्ये विनियोगः । **विश्वानरस्य–आदित्यस्य अनानतस्य शवसः** अनानतज्योतिर्बलस्य अनभिभूतप्रकाशस्यान्यैर्ज्योतिर्भिः, बल**पतिं** पातारं रक्षितार**मिन्द्रम् अस्मिन् यज्ञे वः** युष्माकमर्थसिद्धये आह्वयामः । केन इति । **एवैश्च कामैरयनैः चर्षणीनां–मनुष्याणाम् अवनैः** गमनैः तं 15 प्रति निमित्तभूतैः **ऊती ऊत्या च पथा** येन मार्गेण रंहणा रश्मय इमं लोकमागच्छन्ति तेन पथा भवतामह**मिन्द्रमाह्वयामि ।**

1. *d.* omits स before पुनः. 6. C. बलस्यैवैश्च. 7. R. and Bi. ms. च read यथा for पथा. 9. Bi. J. conclude XII. iii. 2, with तस्यैषा भवति. 10. *a.* marks verse 19, after इति. 12. *d.* °न्नैन्द्रसूक्ते. 14. *m.* बलपातिं; *a. d.* omit वः. 15. *a. d.* अयनैः for अवनैः. 16. *a. d. m.* omit ऊती; *d.* adds स before मार्गेण ? 17. *a. d.* add इति after आह्वयामि.

1. ‘ विश्वानरः ’—Nigh. V. 6. 12; व्याख्यातः, *i. e.* in Nir. VII. 21.

4-5. RS. VIII. 68. 4; SV. 1. 364.

6, 7. **महतो बलस्य, वा** and रथानां are omitted by Durga.

7. **रथानां**—Durga does not repeat this word but he explains it.

11. RS. VIII. 68. 1; SV. 1. 354; 2. 1121; AB. 3. 15. 2.

**विश्वानरस्य वस्पतिम्**–इति पतिशब्देनेन्द्रवाचिना व्यपदेशात् षष्ठ्यन्तस्य विश्वानरशब्दस्य द्युस्थानवाचित्वे सामर्थ्यमुपपद्यते ॥

**वरुणः** (१३) **व्याख्यातः** निर्वचनात् । इह त्वादित्यः । **तस्य एषा भवति** ॥ २१ ॥

5 **" येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।**

**त्वं वरुण पश्यसि ॥ "**

**भुरण्युरिति क्षिप्रनाम । भुरण्युः शकुनिर्भूरिमध्वानं नयति । स्वर्गस्य लोकस्यापि वोढा । तत्संपाती भुरण्युः । अनेन पावक ख्यानेन । भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि । तत्ते वयं स्तुम इति वाक्य-**
10 **शेषः । अपि वोत्तरस्याम् ॥ २२ ॥**

**येना पावक चक्षसा**–इति । प्रस्कण्वस्यैताः सर्वा आर्षम् । आश्विने विनियोगः । **'भुरण्युरिति क्षिप्रनाम'** । **भुरण्युः** क्षिप्रगामी **शकुनिः** । स पुनरयमेव योऽधियज्ञे अग्निश्चीयते स सुपर्णः । विज्ञायते हि

" स्वर्गाय वै लोकायाग्निश्चीयते "

15 –इति । **तत्संपाती** तेन युक्तोऽग्निचित् उपात्तापूर्वसंभारः स्वर्गं लोकं प्रति तदैव शीघ्रं

2. Bi. ms. क reads द्युस्थानवाचित्वेन. 3. *d. m.* निर्वचनतः for निर्वचनात of *bi. j.* 8. Bi. mss. क, ख, ग read वोल्हा, Bi. J. वोढा, C. D. वोळ्हा. 9. C. जनां अनु, Bi. J. जनाँ अनु, Bi. mss. क, ख, ग—जनां अनु. 10. Bi. J. conclude XII. iii. 3 with वोत्तरस्याम्. 11. *a.* marks verse 20, after इति. 13. *a.* only reads सुवर्णः for सुपर्णः of *bi. j.* and others. 15. *m.* तेन युक्तो निश्चिदुपात्तापूर्व°; *d.* स्वर्गलोकं प्रति; *bi. j.* तदेव.

3. 'वरुणः'—Nigh. V. 6. 13; व्याख्यातः, *i. e.* in Nir. X. 3.

5-6. RS. I. 50. 6; AV. 13. 2. 21; 20. 47. 18; VS. 33. 32.

7-8. Durga omits **भूरिमध्वानं नयति स्वर्गस्य लोकस्यापि वोढा** and **भुरण्युः अनेन.**

11. आश्विने विनियोगः—Āśva. Śrau. 6. 5.

12. 'भुरण्युरिति क्षिप्रनाम'—See Nigh. II. 15. 14.

14. " स्वर्गाय वै etc. "—The quotation is from MS. 3. 4. 8.

यः पतति गन्तुमिच्छति स भुरण्यति । हे भगवन् **वरुण पावक**–पावयितः **येन ख्यानेन**–दर्शनेन अनुग्राहकेण **त्वं** पुण्यकृतो **जनान् अनु भुरण्यन्तं** पूर्वेषां पुण्यकृतां मार्गेण देवयानेन क्षिप्रं गच्छन्तमनु**पश्यसि** किं तस्य दर्शनस्येति अपरिसमाप्तं वाक्यमिति यद्वृत्तमपेक्ष्य तद्वृत्तमध्याजहार । **तत्ते** दर्शनमनुग्राहकं **वयं स्तुमः इति वाक्यशेषः । अपि वोत्तरस्याम् ।** अपि चैवं यथोक्तमपि 5 चैवमन्यथा स्यात् । कथमिति । यथोत्तरा ऋक् । तयापि सहैकवाक्यतोपेक्ष्या । कथम् **इति** । यतः पुनः पठति ॥ २२ ॥

**" येना॑ पावक॒ चक्ष॑सा भु॒र॒ण्यन्तं॒ जनाँ॒ अनु॑ ।**
**त्वं व॑रुण॒ पश्य॑सि ॥ "**

**" वि द्यामे॑षि॒ रज॑स्पृ॒थ्वहा॒ मिमा॑नो अ॒क्तुभिः॑ ।** 10
**पश्य॒ञ्जन्मा॑नि सूर्य ॥ "**

**व्येषि द्यां रजश्च पृथु, महान्तं लोकमहानि च मिमानोऽक्तुभी रात्रिभिः सह, पश्यञ्जन्मानि जातानि सूर्य । अपि वा पूर्वस्याम् ॥२३॥**

**येना॑ पावक**–इति । **येन** हे **पावक वरुण चक्षसा** ख्यानेन **जनान् अनु भुरण्यन्तं पश्यसि** तेनैव ख्यानेन तयैव ख्यात्या प्रज्ञया युक्तस्त्वं **वि द्याम् एषि** 15

---

2. *bi. j.* अनुग्राहकेण, *m.* अनुग्राहेण; *a.* only omits त्वं; *a* सर्वेषां for पूर्वेषां of *bi. j.* 4–6. *m.* omits from वयं स्तुमः......to ऋक् । त. 7. *d.* पठंति. 12. Bi. J. द्यां रजश्च, Bi. mss. ख, ग—द्यॉ रजश्च; Bi. J. महान्तंल्लोकम°, R. महान्तॅल्लोकम°, Bi. mss. क, ख, ग—महान्तं लोकम°, C. as text; D. लोकं महानच ? Bi. J. मिमानो अक्तुभी, C. D. and Bi. ms. ख—मिमानोऽक्तुभी. 13. Bi. J. पश्यञ्जन्मानि, Bi. ms. क—पश्यन् जन्मानि; Bi. J. conclude XII. iii. 4, with पूर्वस्याम्. 14. *a.* marks verse 21, after इति; *a. d. m.* omit चक्षसा. 14–15. *bi.* जनां अनु, *j.* जनान् अनु, *m.* जनॉ अनु. 15. *d.* आख्यानेन, *bi. j.* ख्यानेन, *m.* व्याख्यानेन; *d.* ख्यात्या, *bi. j.* ख्याता.

---

8–9. RS. I. 50. 6.
10–11. RS. I. 50. 7; AV. 13. 2. 22; 20. 47. 19; Ars. 5. 12.
13. Durga omits वा after अपि.

विविधमेषि । अतिशयेन वा एषि । किमेषि । द्युलोकम् । **रजः च पृथु, महान्तं लोकम्** अन्तरिक्षम् । कि कुर्वाणः । **अहा–अहानि च मिमानः**–कुर्वन् **अक्तुभिः-रात्रिभिः सह । पश्यन् च जन्मानि–जातानि** सर्वभूतान्यनुग्राहकत्वेन **सूर्य** ।

अपि वोत्तरस्यामेकवाक्यता स्यात् । **अपि तर्हि पूर्वस्याम्** अप्युपेक्ष्या । कथम्
5 इति । यतः पठति ॥ २३ ॥

**"येना॑ पावक॒ चक्ष॑सा भुर॒ण्यन्तं॒ जनाँ॒ अनु॑ ।**
**त्वं वरु॑ण॒ पश्य॑सि ॥"**

**"प्र॒त्यङ् दे॒वानां॒ विशः॑ प्र॒त्यङ्ङुदे॑षि॒ मानु॑षान् ।**
**प्र॒त्यङ् विश्वं॒ स्व॑र्दृ॒शे ॥"**

10 **प्रत्यङ्ङिदं सर्वमुदेषि । प्रत्यङ्ङिदं ज्योतिरुच्यते । प्रत्यङ्ङिदं सर्वमभिविपश्यसीति । अपि वैतस्यामेव ॥ २४ ॥**

---

1. *d.* omits किमेषि. 1–2. *a. d.* omit पृथु महान्तं लोकम् अन्तरिक्षम्. 2. *d. m.* omit अहा; *a. d.* omit अहानि च. 3. *bi.* सूर्य, *j.* सूर्यः. 5. *d.* पठंति for पठति. 10–11. C. D. read प्रत्यङ्ङिदं सर्वमुदेषि प्रत्यङ्ङिदं ज्योतिरुच्यते । प्रत्यङ्ङिदं सर्वमभिविपश्यसीति, Bi. mss. क, ख, ग omit प्रत्यङ्ङिदं सर्वमुदेषि प्रत्यङ्ङिदं ज्योतिरुच्यते ।, Bi. J. read प्रत्यङ्ङिदं सर्वमुदेषि प्रत्यङ्ङिदं सर्वमिदमभिविपश्यसीति, R. Bi. ms. च and others read प्रत्यङ्ङिदं सर्वमुदेषि प्रत्यङ्ङिदं सर्वमभिविपश्यसीति; R. does not include प्रत्यङ्ङिदं ज्योतिरुच्यते into the text but mentions it in the foot-note. Durga, Bi. and J. also omit it. We follow C. D. 11. Bi. J. conclude XII. iii. 5, with एव.

---

6–7. RS. I. 50. 6.

8–9. RS. I. 50. 5; AV. 13. 2. 20; 20. 47. 17; Ārs. 5. 10.

9. स्वर्दृशे—Both Yâska and Durga do not explain this word.

10. The sentence, **प्रत्यङ्ङिदं ज्योतिरुच्यते** is omitted by Durga. It is superfluous here. The words इदं ज्योतिरुच्यते must have been incorporated into the text in this place from line 8, page 1132, section 26, for which see below.

**येना॑ पावक**–इति । हे **वरुण पावक येन** ख्यानेन ययैवानुग्रहबुद्ध्या **जनान् अनु भुरण्यन्तं पश्यसि** तयैव ख्यात्या प्रज्ञया युक्तः **प्रत्यङ् देवानां** या विशस्ताः कृत्वा पुरस्तात्तासाम् **उदेषि । मानुषान्** चैवमेव **प्रत्यङ्** कृत्वा तेषामपि पुरस्तादेव **उदेषि** । किं बहुना । हे **स्वः** आदित्य **प्रत्यङ् इदं सर्वम्** आत्मनः कृत्वा पुरस्तादुद्यन् **सर्वमभिविपश्यसि** । 5

न चेत् पूर्वस्यामुत्तरस्यां वा एकवाक्यता स्यात् **अपि** तर्हि **एतस्यामेव** ॥ २४ ॥

**" येना॑ पावक चक्ष॑सा भुरण्यन्तं जनाँ॑ अनु॑ ।**

**त्वं॑ व॑रुण पश्य॑सि ॥ "**

**तेन नो जनानभिविपश्यसि ॥**

**केशी । केशा रश्मयस्तैस्तद्वान् भवति । काशनाद्वा, प्रकाशनाद्वा ।** 10
**तस्यैषा भवति ॥ २५ ॥**

कथमिति । यतः पुनः पठति । **येना॑ पावक**–इति । हे **पावक वरुण येन** ख्यानेन ययैवानुग्राहकप्रज्ञया **जनाननु भुरण्यन्तं पश्यसि त्वं** पुण्यकारिणः **तेनैव** ख्यानेन तयैवानुग्रहकारकबुद्ध्या अस्माकं **जनानभिविपश्यसि** ।

को विशेषः प्रथमादध्याहारात् । प्रथमे हि तत्ते वयं स्तुम इति स्तुत्या परि- 15 समापितम् । इह पुनराशिषा **तेन नो जनानभिविपश्यसि** । स्तुत्याशिषोः संबन्ध- नित्यत्वाद्वाक्यस्य । एष साकाङ्क्षाणां मन्त्राणामेकवाक्यताप्रकार उपप्रदर्शितः ॥

1. *a.* marks verse 22, after इति; *a. d.* त्वं वरुण, *bi. j.* हे वरुण. 2. *d.* adds विशः after देवानां. 6. *a.* does not conclude the commentary on section §24 here, but after पुनः पठति ( see line 12, below ). 10. Bi. mss. क, ख, ग do not read प्रकाशनाद्वा. 11. Bi. J. conclude XII. iii. 6 with भवति. 12. *a.* marks verse 23, after पावक इति. 14. *d.* तथैवा°, *bi. j.* तयैवा°; *a. d. m.* अभिविपश्येति, *bi. j.* अभिविपश्यसि. 17. *bi. j.* उपप्रदर्शितः, *m.* उपदर्शितः.

7–8. RS. I. 50. 6.

10. Bi. mss. क, ख, ग and Durga omit **प्रकाशनाद्वा.** It is redundant after **काशनात्** as both mean one and the same thing; cf. Durga: रश्मयोऽपि **केशाः काशनादेव,** next page, line 2.

**केशी** (१४) इति वक्तव्यम् । अत्र **केशा रश्मयः तैस्तद्वानादित्यः** यो मध्यंदिने भवति । **काशनाद्वा** । प्रकाशनादित्यर्थः । रश्मयोऽपि केशाः काशनादेव । **तस्य एषा भवति** ॥ २५ ॥

**"केश्यं१ग्निं केशी विषं केशी बिभर्ति रोदसी ।**

5 **केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते ॥"**

**केश्यग्निं च विषं च । विषमित्युदकनाम, विष्णातेर्विपूर्वस्य स्नातेः शुद्ध्यर्थस्य । विपूर्वस्य वा सचतेः । द्यावापृथिव्यौ च धारयति । केशीदं सर्वमिदमभिविपश्यति । केशीदं ज्योतिरुच्यत इत्यादित्यमाह ।**

**अथाप्येते इतरे ज्योतिषी केशिनी उच्येते । धूमेनाग्नी रजसा च** 10 **मध्यमः । तेषामेषा साधारणा भवति** ॥ २६ ॥

**केश्य१ग्निम्**–इति । जूतेरार्षम् । **केश्यग्निं बिभर्ति** । वर्षेणोदकेनौषधीरभिनिष्पादयन् । आहुतिद्वारेण **केशी विषं बिभर्ति । विषमुदकं विष्णातेर्विपूर्वस्य स्नातेः शुद्ध्यर्थस्य । विपूर्वस्य वा सचतेः** । सर्वत्र ह्यतिशयेन यत्सक्तमिति तदपि केशी बिभर्ति । **रोदसी** अपि च केश्येव बिभर्ति । तन्निवासीनि

---

6–7. Bi. mss. क, ख, ग omit स्नातेः शुध्यर्थस्य विपूर्वस्य. 7. C. धारयसि, Bi. J. धारयति. 10. C. D. R. and Bi. ms. च read मध्यमस्तेषामेषा साधारणा भवति, Bi. mss. क, ख, ग and Bi. J. मध्यमस्तयोरेषा भवति; Bi. J. conclude XII. iii. 7, with भवति. 11. *a*. marks verse 24, after इति.

---

1. 'केशी'—Nigh. V. 6. 14.

4–5. RS. X. 136. 1.

6. विषमिति उदकनाम—See Nigh. I. 12. 15.

7. विपूर्वस्य वा सचतेः—Cf. 'विष्लृ व्याप्तौ,' Dhâtup. 3. 13.

7. **द्यावापृथिव्यौ च धारयति** is omitted by Durga.

8. Durga omits **इत्यादित्यमाह**.

10. The reading तेषामेषा साधारणा भवति seems to be the one followed by Durga too; cf. his *vritti* below: तेषां त्रयाणामपि केशिनाम् एषा साधारण्येन...भवति.

13. स्नातेः शुध्यर्थस्य—cf. 'ष्णा शौचे' Dhâtup. 2. 42.

13. विपूर्वस्य वा सचतेः—cf. 'षच सेचने सेवने च' Dhâtup. 1. 163.

भूतानि अनुगृह्णाति । अपि चायं स्वरादित्यः **केशी विश्वमिदं सर्वमिदम् अभिविपश्यति** यथाभिद्रष्टव्यम् । कोऽयं केशीति । यत आह दर्शयन्नेवादित्यं **केशीदं ज्योतिरुच्यते** इति ॥

अतः परं विचारः । **अथाप्येते इतरे ज्योतिषी** प्रथममाध्यमिके **केशिनी (१५) उच्येते** । तत्र तावत् **धूमेनाग्निः** केशी । स हि तस्य प्रकाशनाय निरूढस्यापि भवति । **रजसा च मध्यमः** । असावप्यमूर्तत्वात् अप्रकाशः सन् रजसोद्धृतेन प्रकाशते असौ वायुरागच्छतीति । उदकेन च वैद्युतः । तेषां त्रयाणामपि केशिनाम् **एषा** साधारण्येन प्रधानस्तुतिः **भवति** ॥ २६ ॥ 5

**" त्र॒यः॑ के॒शिन॑ ऋतु॒था वि च॑क्षते संवत्स॒रे व॑पत॒ एक॑ एषाम् ।**
**विश्व॒मेको॑ अ॒भि च॑ष्टे॒ शची॑भि॒र्ध्राजि॒रेक॑स्य ददृशे॒ न रू॒पम् ॥ "** 10

**त्रयः केशिन ऋतुथा विचक्षते । काले कालेऽभिविपश्यन्ति । संवत्सरे वपत एक एषामित्यग्निः पृथिवीं दहति । सर्वमेकोऽभिविपश्यति कर्मभिरादित्यः । गतिरेकस्य दृश्यते न रूपं मध्यमस्य ॥**

**अथ यद्रश्मिभिरभिप्रकम्पयन्नेति तद् वृषाकपिर्भवति, वृषाकम्पनः । तस्यैषा भवति ॥ २७ ॥** 15

---

4. *a. d.* उत्तरे for इतरे of *bi. j.* 6. *a. d. m.* निगूढस्य for निरूढस्य; *a. d.* तु for च; *m.* प्रकाशः सन् for अप्रकाशः सन्. 7. *d.* असौ वा पुरा गच्छतीति for असौ वायुराग.° 15. Bi. J. conclude XII. iii. 8, with भवति.

---

5. 'केशिनी'—Nigh. V. 6. 15.

7. उदकेन च वैद्युतः—These words seem to be an interpolation as the *third kes'in* according to Durga himself is Sûrya and not Vaidyutâgni. See Durga's *vritti* on the next Khaṇḍa: य एते त्रयः केशिनः अग्निवायुसूर्याः etc., next page, lines 2–3.

7–8. तेषां त्रयाणामपि केशिनाम्—As Ṛgveda contains no ṛk in which agni and vâyu only are addressed as Keśinî, Yâska quotes below a nigama in which *three kes'ins* are mentioned.

9–10. RS. I. 164. 44; AV. 9. 10. 26.

12–15. Durga omits इति ( in इत्यग्निः ), सर्वं, तद्, and वृषाकम्पनः.

**त्रयः केशिनः**–इति । दीर्घतमस आर्षम् । महाव्रते वैश्वदेवे शस्यते । य एते **त्रयः केशिनः** अग्निवायुसूर्याः **ऋतुथा काले काले विचक्षते,** यथाकालम् **अभिविपश्यन्ति** । स्वकर्माधिकारयुक्तेनानुग्रहेण लोकमनुगृह्णन्ति । **एषाम् एकः** पृथिवीस्थानः **अग्निः संवत्सरे पृथिवीं वपते । दहति** इत्यर्थः । तथा हि सा कर्मण्या संपद्यते ।
5 **विश्वमेको अभि चष्टे** । स्वाधिकारयुक्तैः **कर्मभिः अभिविपश्यति**–अनुगृह्णाति **आदित्यः । ध्राजिरेकस्य ददृशे । गतिरेकस्य** रजसोद्धूतेन पार्थिवेन उदकेन वा **दृश्यते न रूपं मध्यमस्य** ।

**अथ यद्रश्मिभिरभिप्रकम्पयन्नेति** । **अथ यत्** यदा आदित्यः **रश्मिभिः** उपसंहृतैरुपसंपन्नैर्भूतानि **अभिप्रकम्पयन् एति तत्** तदा **वृषाकपिः** (१६)
10 **भवति** । वर्षिता चावश्यायानां कम्पनश्च भूतानाम् । सर्वो हि भगवत्यदृश्ये तद्भयात् कम्पते । **तस्य एषा भवति** ॥ २७ ॥

" **पुनरेहि वृषाकपे सुविता कल्पयावहै ।**

**य एष स्वप्ननंशनोऽस्तमेषि पथा पुनर्विश्वस्मादिन्द्र उत्तरः ॥** "

**पुनरेहि वृषाकपे, सुप्रसूतानि वः कर्माणि कल्पयावहै । य एष**

---

1. *a.* marks verse 25, after इति. 2. *d.* अग्निर्वायुः सूर्याः?, *d.* काले only, for काले काले. 2–3. *a. d. m.* पर्वकालमपि (*m.*° भि°) विपश्यंति for यथाकालमभिविपश्यन्ति of *bi. j.* 3. *a. d. m.* तेषां for एषां. 4. *a. d.* वपति for वपते. 8–9. *a. d.* omit अथ यत् and आदित्यः, and read as यदा रश्मिभिः उपसंहृतै°. 9. *a. d. m.* omit तत् before तदा. 12. R. सुविता कल्पयावहै. 13. R. and Bi. ms. च—पुनः । विश्वस्मादिन्द्र°. 14. C. य एषः स्वप्ननंशनः.

---

1. वैश्वदेवे शस्यते—Ait. Ār. 5. 3. 2.

9. ' वृषाकपिः'—Nigh. V. 6. 16.

12–13. RS. X. 86. 21; AV. 20. 126 21; *cf.* Nir. XII. 9.

14. Durga omits वः.

**स्वप्नंनंशनः स्वप्नान् नाशयस्यादित्य उदयेन, सोऽस्तमेषि पथा पुनः ।**
**सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यम् ॥**

**यमो व्याख्यातः । तस्यैषा भवति ॥ २८ ॥**

**पुनरेहि वृषाकपे**–इति । वृषाकपेरार्षम् । पृष्ठ्यस्य षष्ठेऽहनि ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता । हे **वृषाकपे** भगवन् **यः एषः** त्वं **स्वप्नंनंशनः**–स्वप्ननाशनः 5
**स्वप्नान् उदयेन नाशयसि सोऽस्तमेपि पथा पुनः** । यश्च त्वं **विश्वस्मात्**–**सर्वस्मात्** जगतः **इन्द्रः** ईश्वरः **उत्तरः**–उद्गततरः स त्वं **पुनः एहि** आयाहि उदयं प्राप्नुहि । तत आवां **सुविता–सुप्रसूतानि** सुप्रवृत्तानि शोभनमर्थमुद्दिश्य जगतोऽनुग्रहमेतानि शोभनानि **कर्माणि** प्रवृत्तानि **कल्पयावहै** सगुणानि कुर्वः, त्वमुदयेनाहमनुष्ठानेनेति । 10

**यमः** (१७) वक्तव्यः । स पुनः **व्याख्यातः** निर्वचनतः । इह त्वादित्योऽभिधेयः । **तस्य एषा भवति** ॥ २८ ॥

**" यस्मिन् वृक्षे सुपलाशे देवैः सं पिबते यमः ।**
**अत्रा नो विश्पतिः पिता पुराणाँ अनु वेनति ॥ "**

---

1. C. D. R. Bi. ms. च, and Durga read नाशयस्यादित्य°, Bi. J. नाशयत्यादित्य°. 3. Bi. J. conclude XII. iii. 9, with भवति. 4. *a.* marks verse 26, after इति; *a.* concludes section 27 here after °रार्षम् and not before, after तस्य एषा भवति last page, line 11. 5. *d.* reads भगवन् वृषाकपे by inversion; *a. d. m.* omit स्वप्नंनंशनः. 6. *m.* सोस्तमेति पथा पुनः, *bi. j.* सोऽस्तमेषि पथा पुनः; *a. d.* यथा for पथा. 7. *m.* उद्गततरः; *a. d.* स त्वं पुनरेव हि उदयं प्राप्नुहि, *bi. j.* as above, *a. d.* omit एहि आयाहि, *m.* omits एहि only. 8. *m.* सुविताः for सुविता; *a. d. m.* omit सुप्रसूतानि. 11. *a. d.* add च after स.

---

1. स्वप्नंनंशनः—The word नंशनः is not used in Classical Sanskrit.
1. Durga omits आदित्यः.
2. य (before इन्द्र) and **तमेतद् ब्रूम आदित्यम्** are omitted by Durga.
5. विनियुक्ता—Âs'va. Śrau. 8. 3.
11. 'यमः'—Nigh. V. 6. 17; व्याख्यातः i. e. in Nir. X. 19.
13–14. RS. X. 135. 1; TA. 6. 5. 3.

यस्मिन् वृक्षे सुपलाशे स्थाने, वृतक्षये वा । अपि वोपमार्थे स्याद् वृक्ष इव सुपलाश इति । वृक्षो व्रश्चनात् । पलाशं पलाशनात् । देवैः संगच्छते यमो, रश्मिभिरादित्यः । तत्र नः सर्वस्य पाता वा पालयिता वा पुराणाननुकामयेत ॥

5 अज एकपात् । अजन एकः पादः । एकेन पादेन पातीति वा । एकेन पादेन पिबतीति वा । एकोऽस्य पाद इति वा ।

" एकं पादं नोत्खिदति "

इत्यपि निगमो भवति । तस्यैष निपातो भवति वैश्वदेव्यामृचि ॥२९॥

**यस्मिन् वृक्षे सुपलाशे**-इति । कुमारस्य यामायनस्यार्षम् । **यस्मिन् वृक्षे**-
10 आदित्ये । स हि स्वगत्या कालम् अतिक्रामयन् सर्वभूतानामायूंषि क्षपयति । **वृश्चतीति वृक्षः । वृतक्षये वा** । पुण्यकृद्भिर्वृते निवासे इत्यर्थः । **सुपलाशे** सुष्ठु पराशीर्णमले दीप्तिमति **देवैः** सह **रश्मिभिः संपिबते संगच्छते** अस्तं गच्छन्नादित्यः । तत्र किमिति । **अत्र नः** अस्मान् पुण्येन कर्मणा विद्यया च तत्प्रापिकया

---

1. C. D. and Bi. ms. क read वृतः क्षये, Bi. J. and R. वृतक्षये. 2. Bi. ms. क reads पलाशं पलासदनाद्देवैः, Bi. mss. ख, ग read पलाशं पलाशदनाद्देवैः. 5. Bi. J. अजन एकः पाद एकेन, Bi. mss. क, ख, ग—अजन एकपाद एकेन. 6. C. एकोस्य पाद. 8. Bi. J. conclude XII. iii. 10 with °मृचि. 9. *a.* marks verse 27, after इति; *a.* कुमारस्य यमार्षं, *d.* कुमारस्य यमायनस्यार्ष. 11. *a. d.* वृतः क्षये वा पुण्यकृद्भिर्वृतो निवास इत्यर्थः, *bi. j.* वृतक्षये वा पुण्यकृद्भिर्वृते निवासे इत्यर्थः; *m.* सुष्टु for सुष्ठु of *bi. j.* 12. *a. d.* read संपिबते but omit संगच्छते. 13. *d.* अत्रा for अत्र; *m.* अस्मन् for अस्मान्.

---

1. **स्थाने**—Durga omits this word.

2. **वृक्षो व्रश्चनात्, पलाशं पलाशनात्**—Durga does not give these etymologies.

3. Durga omits **तत्र,** and does neither repeat nor explain—**सर्वस्य पाता वा पालयिता वा.**

7. एकं पादं नोत्खिदति—AV. 11. 4. 21.

8. Durga omits **इति** in इत्यपि.

गतात्मनः **पुराणान्** इव तन्निवासिनः **अनु वेनति वेनतु कामयेत** कामयतु । संप्रीणयत्वित्यर्थः ॥

**वृक्षे इव सुपलाशे इति** ऐतिहासिकपक्षे । स्वगृहमुपागतानस्मान् सुपलाशवृक्षप्रख्यसुखनिवासे पितृराजो **यमः पुराणान्** इव तल्लोकनिवासिनः पितॄन् अनु कामयतु । अस्मिन् पक्षे देवैः संपिबत इति तदनुचारिणो गृह्यन्ते देवा इति ॥ 5

**अज एकपात्** (१८) इति वक्तव्यम् । स पुनः अयमादित्यः नित्यम् **अजनः**–गमनः । **एकः** च **पादः** ब्रह्मणः । विज्ञायते हि

"अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः"

–इति । **एकेन पादेन पातीति वा ।** सर्वमिदं जगत् एकेनांशेनानुप्रविश्य पाति रक्षति स्वापकाले प्राणात्मनाऽन्नं पचन् । अजनश्चेत्यज एकपात् । **एकेन पादेन** 10 **पिबतीति वा ।** एकेनांशेनोदकं सर्वस्माज्जगतः पिबत्यजनश्चेत्यज एकपात् । अथ **वा ।** अजनो गमनः **एकोऽस्य पाद इति** अज एकपात् । जीवभूतोऽस्य कृत्स्ने जगति एकः पादोऽनुप्रविष्टः ।

**निगमोऽपि** हि **भवति** एवास्मिन्नर्थे ।

"**एकं पादं नोत्खिदति** सलिलाद्धंस उच्चरन् । 15
स चेत्तमुद्धरेदङ्ग न मृत्युर्नामृतं भवेत् ।"

एकमात्मनः पादमंशं नोत्खिदति नोद्धरति इति आदित्यो हंसः महतस्तमसो वाध्वनो वा

---

1. *m.* तन्निवासीनः; *m.* omits वेनति, *d.* omits वेनति वेनतु; *a. d. m.* omit कामयेत. 2. *a. d.* read संप्रीणयतामित्यर्थः; *bi. j. m.* संप्रीणयत्वित्यर्थः. 3. *a. d.* उपगतान्. 3–4. *a. d.* सुपलाशवृक्षप्रख्यं सुखनिवासं. 11. *a. d.* omit च after अजनः. 12. *d.* जीवो for जीवभूतो. 17. *m.* पादमंत्रान्नोत्खिदति for पादमंशं नोत्खिदति, *a. d.* omit नोत्खिदति; *a. d. m.* omit इति after नोद्धरति; *a. d.* omit वा after तमसः.

---

6. 'अज एकपात्'—Nigh. V. 6. 18.

7. विज्ञायते हि "अग्निः पादो etc."—Cf. Chhân. Up. iii. 18. 2.

15–16. एकं पादं नोत्खिदति etc.—cf. Âśva. 11. 4. 21, where however the second half of the stanza stands as follows:—यदङ्ग स तमुत्खिदेत् नैवाद्य न श्वः स्यात् न रात्री नाहः स्यात् न व्युच्छेत् कदाचन ।

हन्ता । कुतः पुनर्नोत्खिदति । सलिलात् सन्मात्रे ब्रह्माणि लीनादेतस्माज्जगतः उच्चरन् । अहन्यहनि उद्यन्नित्यर्थः । स चेत् तं जीवभूतमात्मनः पादमेतस्मात् जगतः उद्धरेत् ततस्तदुद्धरणसमकालमेव अङ्ग क्षिप्रं न मृत्युर्नामृतं भवेत् । सर्वमिदमव्यपदेश्यं सदेव स्यादित्यर्थः । **तस्य एष निपातो भवति** साधारण्येन **वैश्वदेव्यामृचि** ॥ २९ ॥

5 "**पावीरवी तन्यतुरेकपादजो दिवो धर्ता सिन्धुरापः समुद्रियः ।**
**विश्वे देवासः शृणवन् वचांसि मे सरस्वती सह धीभिः पुरन्ध्या ॥**"

**पविः शल्यो भवति, यद्विपुनाति कायम् । तद्वत् पवीरमायुधम् । तद्वानिन्द्रः पवीरवान् ।**

"**अतितस्थौ पवीरवान्**"

10 **इत्यपि निगमो भवति । तद्देवता वाक् पावीरवी । पावीरवी च दिव्या वाक्, तन्यतुस्तनित्री वाचोऽन्यस्याः । अजश्चैकपाद्, दिवो धारयिता च सिन्धुश्चापश्च समुद्रियाश्च सर्वे च देवाः सरस्वती च सह पुरन्ध्या स्तुत्या प्रयुक्तानि धीभिः कर्मभिर्युक्तानि शृण्वन्तु वचनानीमानीति ॥**

**पृथिवी व्याख्याता । तस्या एष निपातो भवत्यैन्द्राग्न्यामृचि ॥३०॥**

---

3. *d.* सदैव for सदेव ? 11. C. °स्तनयित्री वाचोन्यस्याजश्चैक.° Bi. J. °स्तानित्री वाचोऽन्यस्या°. 11. Bi. ms. च and others, C. D. R. and Durga omit च after धारयिता; Bi. J. read it. 12. Bi. mss. क, ख, ग do not read च after समुद्रियाः, Bi. J. have it. 14. D. भवत्यैन्द्राग्न्यामृचि ?; Bi. J. conclude XII. iii. 11 with °मृचि.

---

5-6. RS. X. 65. 13.

9. RS. X. 60. 3.

10-13. **अपि निगमो भवति, पावीरवी** in the clause पावीरवी **च** दिव्या वाक्, the **च** after समुद्रियाः, **स्तुत्या,** and **इति** in इमानीति—these are omitted by Durga.

11. Durga, C. D. and R. omit **च** after धारयिता. In fact it is not necessary.

13. **प्रयुक्तानि** is neither repeated nor explained by Durga.

**पावीरवी तन्यतुः**–इति । वसुकर्णस्यार्षम् । वैश्वदेवे शस्त्रे विनियोगः । **पविः**–**शल्यो भवति** । कस्मात् । **यद् विपुनाति** विदारयति **कायम्** । तेन शल्येन **तद्वत् पवीरम् आयुधम्** । रो मत्वर्थे । तेन शल्यवता आयुधेन **तद्वान् इन्द्रः पवीरवान्** ।

यथा चैतदेवं तथैष निगमः । **अतितस्थौ पवीरवान्**–इति । 5

" यो जनान् महिषाँ इवातितस्थौ पवीरवान् । उतापवीरवान् युधा ॥ "

–इति । विप्रबन्धोरार्षम् । यः इन्द्रः महिषान् अतिमहतोऽप्यसुरजनान् युधा युद्धेन अति–अतीत्य तस्थौ–तिष्ठति पवीरवान्–आयुधवान् । अपि च अपवीरवान् । अनायुध इत्यर्थः । सायुधो निरायुधश्च नित्यमसुरजनान् महतोऽपि अतितिष्ठति यः स इदं नामास्माकं करोत्विति । **तद्देवता वाक् पावीरवी** । स इन्द्रो यस्या माध्यमिकाया 10 वाचो देवता सैन्द्री वाक् पावीरवी । **तन्यतुः**–**तनित्री** तनयित्री **वाचोऽन्यस्याः** । तदुक्तम् ।

" तां विश्वरूपाः पशवो वदन्ति । "

सा च **दिव्या वाक्** । **अजश्चैकपात्, दिवो धारयिता** । एतदत्र द्युस्थानत्वम् अजस्यैकपादः । **सिन्धुश्च** नदः । **आपश्च समुद्रियाः** । **विश्वे** च देवाः **सर्वे च** 15 **देवाः शृणवन्**–**शृण्वन्तु इमानि वचनानि** स्तुतिलक्षणानि । न । किं वचनान्येव । किं तर्हि । **सह धीभिः**–**कर्मभिः** हविर्दानयुक्तैः सहितानि । **सरस्वती**

1. *a.* marks verse 28, after इति. 2. *a. d.* add स before कस्मात्; *d. m.* शल्येन, *bi. j.* शाल्येन ?. 5. *a. d.* यथा चैवं मंत्रदृगाह । अतितस्थौ etc., *bi. j.* यथा चैतदेवं तथैष निगमः. 8. *d. m.* omit अति before अतीत्य. 9. *a. d. m.* निरायुधश्च, *bi. j.* निरायुधश्च. 10–11. *a. d.* वाचो माध्यमिकाया देवता, *bi. j.* माध्यमिकाया वाचो देवता. 11. *m.* omits तनित्री, *a. d.* omit तनयित्री. 15. *a. d.* अजस्यैकपादः, *m.* अजश्चैकपदः; *bi. j.* अजस्यैकपदः; *d.* reads आसमुद्रिया for आपश्च समुद्रियाः. 15–16. *a. d.* omit सर्वे च देवाः. 17. *a. d.* न किं तर्हि, *bi. j.* do not have न.

6. RS. X. 60. 3.

11. सैन्द्री वाक् पावीरवी—Cf. " पावीरवीं शंसति । वाग् वै सरस्वती पावीरवी, वाच्येव तद्वाचं दधाति "—AB. 3. 3. 12.

13. तां विश्वरूपाः etc.—RS. VIII. 100. 11; Nir. XI. 29.

**च** शृणोतु **पुरन्ध्या सह** बहुधान्या माध्यमिकया वाचा इत्येतदाशास्महे । निर्वचनस्यास्यामृच्युत्तरे पादे सम्यक् पाठोऽन्वेष्यः ॥

**पृथिवी** (१९) **व्याख्याता । तस्या एष निपातो भवति** दिवः पृथिव्याः **ऐन्द्राग्न्यामृचि** न स्तुत्यत्वेन । किं तर्हि । नैघण्टुकेन केवलम् ॥ ३० ॥

5 **"यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः ।**
**अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥"**

**इति सा निगदव्याख्याता ॥**

**समुद्रो व्याख्यातः । तस्यैष निपातो भवति पावमान्यामृचि ॥३१॥**

**यदिन्द्राग्नी परमस्याम्**-इति । कुत्सस्यार्षम् । हे **इन्द्राग्नी वृषणौ यद्**-
10 यदि युवां **परमस्यां पृथिव्यां** द्युलक्षणायां, यदि **मध्यमस्यां** मध्यमायामन्तरिक्षे, यदि **अवमस्याम्** अस्यामेव भूम्याम् । **उत स्थः** तथापि **परि आयातम्** अस्मान् प्रति । पर्येत्य **अथ सोमस्य पिबतम्** अभिषुतस्य स्वमंशमिति ।

**समुद्रः** (२०) **व्याख्यातः** । इह तु आदित्य इति विशेषः । अत्रापि समुद्र-वन्त्यस्मादापः इत्येवमादि तदेव निर्वचनम् । **तस्य एषः** समुद्रस्य **निपातो भवति**
15 **पावमान्यामृचि** ॥ ३१ ॥

---

2. *bi. j.* निर्वचनस्यास्याम्°, *d.* निर्वचनस्यात्युत्तरे पादे etc. 8. Bi. J. conclude XII. iii. 12, with पावमान्यामृचि. 9. *a.* marks verse 29, after इति; *a. d.* omit वृषणौ यद्; *m.* omits यद्. 10. *a. d. m.* omit मध्यमस्यां. 11. *d.* omits अस्यां before एव. 13. *a. d.* omit तु.

---

2. निर्वचनस्यास्यामृच्युत्तरे पादे सम्यक् पाठोऽन्वेष्यः—It is not clear what Durga means by this.

3. 'पृथिवी'—Nigh. V. 6. 19; व्याख्याता, i. e. in Nir. I. 13, 14; cf. IX. 31; XI. 36.

5-6. RS. I. 108. 10.

7. **इति सा निगदव्याख्याता**—As usual Durga does not notice this sentence in his vritti.

13. 'समुद्रः'—Nigh. V. 6. 20; व्याख्यातः, i. e. in Nir. II. 10.

"पवित्रवन्तः परि वाचमासते पितैषां प्रत्नो अभि रक्षति व्रतम् ।
महः समुद्रं वरुणस्तिरो दधे धीरा इच्छेकुर्धरुणेष्वारभम् ॥"

पवित्रवन्तो रश्मिवन्तो माध्यमिका देवगणाः पर्यासते माध्यमिकां वाचम् । मध्यमः पितैषां प्रत्नः पुराणोऽभिरक्षति व्रतं कर्म । महः समुद्रं वरुणस्तिरोऽन्तर्दधात्यथ धीराः शक्नुवन्ति धरुणेषूदकेषु कर्मण आर- 5
भमारब्धुम् ॥

अज एकपाद् व्याख्यातः । पृथिवी व्याख्याता । समुद्रो व्याख्यातः । तेषामेष निपातो भवत्यपरस्यां बहुदेवतायामृचि ॥ ३२ ॥

**पवित्रवन्तः परि वाचम्**–इति । पवित्रस्यार्षम् । प्रवर्गे विनियोगः । रश्मयः पवित्रवन्तः अमुष्मादादित्यमण्डलात् प्रसृताः मध्यस्थाने मरुत्प्रभृतिभिर्देवगणैः संयुज्यन्ते । 10
तत्संयोगात् **माध्यमिका देवगणाः पवित्रवन्तः रश्मिवन्तः** भवन्ति । ते च **माध्यमिकां वाचं** परिवार्य **आसते** । सः **वरुणः** विद्युदाख्यो **मध्यमः पिता**–पाता रक्षिता **एषां** मरुत्प्रभृतीनां **प्रत्नः–पुराणः व्रतं–कर्म** तदधिकारयुक्तम् **अभिरक्षति** । कथमिति । तदुच्यते । **महः**–महान् **वरुणः**–मध्यमः । महान्तं वा **समुद्रम्**–आदित्यं मेघजालेन यदा **तिरोदधाति,** दुर्दिनं कृत्वा वर्षति ओषधीषु, 15

---

3–4. Bi. mss. क, ख, ग read माध्यमका instead of माध्यमिका and omit माध्यमिकां वाचम्. 4. C. D. R. and Bi. mss. च and others, omit मध्यमः before पिता, Bi. J. have it. 5–6. C. आरंभमारब्धुं, Bi. J. D. as text. 8. Bi. J. conclude XII. iii. 13, with °देवतायामृचि. 9. *a.* marks verse 30, after इति; *a. d.* प्रवर्ग्ये, *bi. j.* प्रवर्गे. 9–10. *bi. j. m.* रश्मयः पवित्रतेऽमुष्मादा°, *a. d.* रश्मयः पवित्रवन्तोऽमुष्मादादित्य°. 11. *a. d. m.* omit रश्मिवंतः; *a. d.* add after भवन्ति,—ते च पर्युपासते ते (*d.* omits) च परिवार्य माध्यमिकां वाचमासते विद्युदाख्याम् ( this last word is added by *d.* only, *bi. j.* do not have it ), *m.* adds ते च पर्युपासते only, after भवन्ति. 13. *d. m.* तेषां for एषां.

---

1–2. RS. IX. 73. 3; TA. 1. 11. 1.
3–4. Bi. mss. क, ख, ग omit **माध्यमिकां वाचम्.**
5. **अन्तः**—omitted by Durga.
9. प्रवर्गे विनियोगः—Âśva. S'rau. 4. 6.

**अथ धीराः**-धीमन्तः **धरुणेषु-उदकेषु शेकुः-शक्नुवन्ति कर्मणः** कृष्यादेः वैदिकस्य वा **आरभम् आरब्धुम्** प्रारम्भम् इत्येवमभिरक्षति तेषां माध्यमिकानां व्रतम् । यदि ह्यसावावृणोति मेघैस्ततस्तेषामधिकारप्रतिलम्भो भवति ।

**अज एकपाद् व्याख्यातः** । इह तूत्तमः । **पृथिवी व्याख्याता । समुद्रः**
5 **व्याख्यातः । तेषामेष निपातो भवति** स्तुतिसाधारण्येन **अपरस्यां बहु-देवतायामृचि** ॥ ३२ ॥

**"उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात् पृथिवी समुद्रः ।**
**विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ॥"**

**अपि च नोऽहिर्बुध्न्यः शृणोत्वजश्चैकपात्, पृथिवी च समुद्रश्च सर्वे**
10 **च देवाः सत्यवृधो वा यज्ञवृधो वा, हूयमाना मन्त्रैः स्तुता, मन्त्राः कविशस्ता अवन्तु, मेधाविशस्ताः ।**

**दध्यङ् प्रत्यक्तो ध्यानमिति वा, प्रत्यक्तमस्मिन् ध्यानमिति वा ।**

---

1. *a. d.* omit अथ; *a. d.* omit शेकुः शक्नुवन्ति. 2. *a. d.* read after वैदिकस्य वा,—आरम्भं प्रारम्भमित्येवमभिक्षरति, *bi. j.* read आरभम् आरब्धुम् प्रारम्भम् इत्ये°, *d.* आरभं प्रारम्भं, *m.* omits आरब्धुम्. 4-5. *a. d.* omit these lines. 8. R. हुवाना स्तुता. 10. R. Bi. J. मन्त्रै स्तुता. 12. Bi. J. प्रत्यक्तमस्मिन् ध्यानमिति वा, Bi. mss. क, ख, ग have °ख्यानमिति वा.

---

4-5. अज एकपाद् व्याख्यातः—In Nir. XII. 29, 33. पृथिवी व्याख्याता—Nir. I. 13, 14; XII. 30. समुद्रः व्याख्यातः—Nir. II. 10; XII. 30.

7-8. RS. VI. 50. 14; VS. 34. 53; MS. 1. 6. 2: 88. 12-13; ApŚ. 5. 19. 4.

9. Durga omits च after अपि.

10. Durga in his *vritti* adds **उदकवृधो वा,** as the third meaning of ऋतावृधः ( see next page, line 6 ). His *Niruktapâtha* therefore must have been सत्यवृधो वा यज्ञवृधो वा उदकवृधो वा.

10. मन्त्राः—The insertion of the word मन्त्राः itself, from the ṛik into the bhâṣya after its rendering there by मन्त्रैः is confusing. Durga omits **मन्त्राः.**

**अथर्वा व्याख्यातः । मनुर्मननात् । तेषामेष निपातो भवत्यैन्द्र्या-मृचि ॥ ३३ ॥**

**उत नोऽहिर्बुध्न्यः शृणोतु**–इति । ऋजिश्वन आर्षम् । आग्निमारुते विनियोगः । **उत नः** अप्यस्माकम् **अहिर्बुध्न्यः शृणोतु** । अपि **अज एकपाद्** अपि **च पृथिवी** अपि **च समुद्रः विश्वे देवाः सर्वे** एते एवमादयो **देवाः ऋतावृधः**– 5 **सत्यवृधः यज्ञवृधः** उदकवृधो **वा हुवानाः**–**आहूयमानाः मन्त्रैः** यजुर्मयैः, **स्तुताः** च स्तोत्रैः सामभिः, **कविशस्ताः** कविभिश्च नैघण्टुकत्वेन **मेधाविभिः** शस्त्रैश्च **शस्ताः** स्तुतास्तेऽस्मान**वन्तु**, इत्येतदाशास्महे ।

**दध्यङ्, मनुः, अथर्वा** इति त्रित्वपक्षे आदित्य एवैते तद्गुणयोगाद् भवन्ति द्युस्थाने समाम्नानात् । पृथक्त्वे पुनर्द्युस्थानाः तत्सहचारिण एते ऋषयः ।　　10

**दध्यङ् (२१) प्रत्यक्तो ध्यानं** प्रतिगतो ध्यानमिति । ध्यानारम्भणे ह्येष युक्तः स्वमधिकारमनुतिष्ठति । अथवा । **प्रत्यक्तमस्मिन् ध्यानमिति वा** । अधिकरणं कारकम् । तथा हि तस्मिन् ध्यानकार्यं सफलं लक्ष्यत इति ॥

**अथर्वा (२२) व्याख्यातः** निर्वचनतः । न ह्ययं स्वस्मादधिकारात् थर्वति । न कदाचित् स्वमधिकारं मुञ्चति ॥　　15

**मनुः (२३)** अयं **मननात्** । न हि तदस्ति यदयं न मनुते ।

**तेषामेष निपातो भवति ऐन्द्र्यामृचि** ॥ ३३ ॥

---

2. Bi. J. conclude XII. iii. 14, with °मृचि. 3. *a.* marks verse 31, after इति. 4. *a. d. m.* omit उत नः. 6. *a. d.* omit सत्यवृधः यज्ञवृधः and read merely यज्ञवृधः after उदकवृधः. 7. *m.* omits कविशस्ताः only, *a. d.* omit कविशस्ताः कविभिश्च; *d.* omits नैघण्टु and reads कत्वेन only, *m.* नैवण्टुकेन, *bi. j.* नैघण्टुकत्वेन. 8. *a. d.* omit च शस्ताः after शस्त्रैः; *m.* omits शस्ताः. 11. *a. d.* युक्तः, *bi. j.* उक्तः. 13. *d.* सकलं for सफलं ? 14–15. *d.* reads कुर्वति for थर्वति and omits न and the next line.

---

3. आग्निमारुते विनियोगः—Âśva. Śrau. 5. 20.

11. ' दध्यङ् '—Nigh. V. 6. 21.

14. ' अथर्वा '—Nigh. V. 6. 22; व्याख्यातः, i. e. in Nir. XI. 18.

16. ' मनुः '—Nigh. V. 6. 23.

" यामथर्वा मनुष्पिता दध्यङ् धियमत्नत ।

तस्मिन् ब्रह्माणि पूर्वथेन्द्रं उक्था समग्मतार्चन्ननु स्वराज्यम् ॥ "

यामथर्वा च मनुश्च पिता मानवानां दध्यङ् च धियमतनिषत तस्मिन् ब्रह्माणि कर्माणि पूर्वेन्द्र उक्थानि च संगच्छन्तामर्चन्योऽनूपास्ते 5 स्वाराज्यम् ॥ ३४ ॥

**यामथर्वा**–इति । गोतमस्यार्षम् । पार्ष्ठिके पञ्चमेऽहनि विनियोगः । ऐन्द्रे सूक्ते **याम् अथर्वा मनुः च पिता मानवानां दध्यङ् च धियम् अत्नत**–**अतनिषत** । एतद्गुणविशिष्टोऽयमादित्यः यत्तत्कर्माहोनिर्वृत्यादिलक्षणं तनोति **तस्मिन्** सति **ब्रह्माणि**–अन्नानि, **उक्थानि च** शस्त्राणि, **पूर्वथा**–पूर्ववत् **इन्द्रे समग्मत**– 10 **संगच्छन्ताम्**–समागच्छन्तु यज्ञेषु । किलक्षणे इन्द्रे इति । यत आह । **अर्चन्** । यः इन्द्रमभिपूजयते **स्वाराज्यम् अनु उपास्ते**, यथाशास्त्रमनुतिष्ठतीत्यर्थः ।

पृथक्पक्षे आदित्यसहचारिण एते ऋषयः । तदा योज्यम् । य ऋषयः एते कर्म

---

3–4. Bi. mss. क, ख, ग read तस्मिन् कर्माणि ब्रह्माणीन्द्र उक्थानि. 5. Bi. J. conclude XII. iii. 15, with स्वाराज्यम्. With स्वाराज्यम् ends the third pâda of the twelfth adhyâya. Bi. J. read as °स्वाराज्यम् ॥ १५ (३४) ॥ इति निरुक्तौ **द्वादशाध्यायस्य तृतीयः पादः** ॥ १२, ३ ॥. 6. *a.* marks verse 32, after इति; *a.* only reads गौतमस्य. 7. *m.* omits च after दध्यङ्; *a. d. m.* omit अत्नत. 8. *m.* य आदित्यो यत्°, *bi. j.* ऽयमादित्यः यत्°; *a.* यस्त्वकर्माह-न्निर्वृत्यादिलक्षणं etc., *d.* यस्तत्कर्माहन्निवृत्यादिलक्षणं, *bi. j.* यत्तत्कर्माहोनिवृत्या°. 9. *a.* only omits उक्थानि. 10. *a. d. m.* omit संगच्छन्ताम्; *a. d.* समागच्छन्ति, *bi. j.* समागच्छन्तु. 11. *d.* य इन्द्रमाभिपू°, *bi. j. m.* य इन्द्रः अभिपू°. 12. *m.* आदित्येसहचारिण; *a. d.* य एते ऋषयः कर्म.

---

1–2. RS. I. 86. 16.

4. ब्रह्माणि—Yâska renders ब्रह्माणि of the ṛik by कर्माणि; Durga, by अन्नानि.

4. पूर्वेन्द्र—This should have been पूर्वथेन्द्र ( see the ṛik quoted above ). Durga reads पूर्वथा पूर्ववत् इन्द्रे. He does not read पूर्वेन्द्रे.

अतनिषत याज्ञं तस्मिन् ब्रह्माणि अन्नानि इन्द्रे पूर्ववत् समग्मत समागच्छन्तीति । शेषं समानमेवेति ॥ ३४ ॥

**अथातो द्युस्थाना देवगणाः । तेषामादित्याः प्रथमागामिनो भवन्ति । आदित्या व्याख्याताः । तेषामेषा भवति ॥ ३५ ॥**

**अथातो द्युस्थाना देवगणाः**–इति । एवमादि वक्तव्यम् । अतः परमेत- 5 देवोत्तमं ज्योतिर्गणशब्दाभिधेयत्वेन निर्वाच्यम् । एतदेव हि गुणविकारोपजनापेक्षया भेदाभेदाभ्यां मन्त्रदृशः पश्यन्तः स्तुवते । तदर्थं विशेषतः पुनरधिकारवचनम् **अथातो द्युस्थाना देवगणाः** इति । द्यौरेषां स्थानं त इमे द्युस्थाना इति । के पुनस्ते । देवगणाः इति देवानां मित्रप्रभृतीनां गणाः । पृथक्त्वपक्षे गणा इति बहुवचनमर्थवत् ।

**तेषामादित्याः** (२४) **प्रथमागामिनो भवन्ति** । ते कस्मात् । प्रत्यक्षत्वाच्छ- 10 ब्दस्य **सप्तऋषयः** इत्येवमादीनां च परोक्षत्वात् । **आदित्याः** । ते पुनरभिधानानिर्व- चनतो **व्याख्याताः** 'आदत्ते रसान्' इत्यत्र । केवलं त्वत्र बहुवचनमिति विशेषः ।

**तेषाम्** आदित्यानाम् **एषा** प्राधान्यस्तुतिः **भवति** यां दृष्ट्वेह द्युस्थाने गणाभि- धानेन समाम्नाताः ॥ ३५ ॥

**"इमा गिर॑ आदि॒त्येभ्यो॑ घृ॒तस्नूः॑ स॒नाद्राज॑भ्यो जु॒ह्वा॑ जुहोमि । 15**
**शृ॒णोतु॑ मि॒त्रो अ॑र्य॒मा भगो॑ नस्तुविजा॒तो वरु॑णो॒ दक्षो॒ अंशः॑ ॥"**

---

1. *a. d.* ऐन्द्रे, *bi. j.* इन्द्रे; *d.* सममेत, *bi. j.* समग्मत. 2. With °समान- मेवेति ends the commentary on the third pâda of the twelfth adhyâya; *bi. j.* read as °समानमेवेति ॥ १५ (३४) ॥ इति ऋज्वर्थायां निरुक्तवृत्तौ **सप्तदशस्याध्यायस्य** ( द्वादशाध्यायस्य ) **तृतीयः पादः** ॥ १२, ३ ॥. 3. Bi. J. read **चतुर्थः पादः** before अथातो°. 4. Bi. J. conclude XII. iv. 1, with भवति. 7. *a. d.* पश्यन्तोऽभिष्टुवते, *bi. j.* पश्यन्तः स्तुवते. 8. *a. d.* omit द्यौरेषां स्थानं त इमे, and read उत्तमे instead. 9. *d.* पृथक्त्वे पक्षे. 11. *a. d. m.* omit आदित्याः. 14. *a.* concludes this section as ॥ ३६ ॥, which is wrong.

---

4. 'आदित्याः'—Nigh. V. 6. 24; व्याख्याताः, i. e. in Nir. II. 13.
15–16. RS. II. 27. 1; VS. 34. 54; KS. 11–12.

घृतस्नूर्घृतप्रस्राविन्यो घृतप्रस्राविण्यो घृतसारिण्यो घृतसानिन्य इति वाहुतीरादित्येभ्यश्चिरं जुह्वा जुहोमि, चिरञ्जीवनाय, चिरंराजभ्य इति वा। शृणोतु न इमा गिरो मित्रश्चार्यमा च भगश्च बहुजातश्च धाता, दक्षो वरुणोंऽशश्च। अंशोंऽशुना व्याख्यातः ॥

5 सप्त ऋषयो व्याख्याताः। तेषामेषा भवति ॥ ३६ ॥

इमा गिरं आदित्येभ्यंः—इति। कूर्मस्य गार्त्समदस्य गृत्समदस्य वेयमार्षम्। इमा गिरः घृतस्नूः। घृतम् आहुतिलक्षणं याः प्रस्नुवन्ति प्रक्षरन्ति ता घृतस्नूः। अथवा। घृतप्रस्राविण्यः। धात्वन्यत्वमर्थैकत्वम्। घृतसानिन्यः वा। घृतं देवान् प्रति सानयन्ति संभाजयन्तीति तथा। सनोतेः संभजनार्थस्य। घृतसारिण्यः 10 वा। "सृ गतौ" इत्यस्य। देवान् प्रति घृतं याः सारयन्ति गमयन्तीति। ताभिः गीर्भिः तैर्मन्त्रैः सनाद्राजभ्यः, चिरं राजभ्यः चिरंतनेभ्यः सर्वलोकराजभ्यः। अथवा। सनादिति यावदायुषम्, अनुत्सर्गेण जुह्वा जुहूसंज्ञकेन पात्रेण जुहोमि। ताः पुनर्गिरोऽस्मदाशीर्युक्ताः। तत्समर्धनाय शृणोतु नः अस्माकं मित्रः अर्यमा भगः च, तुविजातः बहुजातश्च धाता, दक्षः वरुणः अंशः च।

---

1–2. C. D. R. and Bi. mss. च and others read घृतसानिन्यो घृतसारिण्य इति वा, Bi. J. घृतसारिण्यो घृतसानिन्य इति वा. 2. C. D. R. and Bi. mss. च and others omit चिरंजीवनाय. 5. Bi. J. conclude XII. iv. 2, with भवति. 6. *a.* marks verse 33, after इति. 9. *a. d.* omit the whole line through mistake. 10. *a. d.* omit गमयंतीति. 11. *a. d. m.* omit चिरं राजभ्यः. 12. *a. d.* omit जुह्वा. 13. *m.* °स्मदासीर्युक्ताः; *m.* तत्समवर्धनाय; *a. d. m.* omit नः; *m.* मित्राः, *bi. j.* मित्रः. 14. *a. d.* omit वरुणः.

---

2. आहुतीरादित्येभ्यश्चिरं—omitted by Durga.

3. The चs after मित्रः, अर्यमा and भगः are omitted by Durga.

7. घृतस्नूः—'ष्णु प्रस्रवणे' Dhâtup. 2. 28.

8. घृतप्रस्राविण्यः—*Cf.* 'स्रु गतौ' Dhâtup. 1. 965.

9. सनोतेः संभनार्थस्य—Cf. 'षण संभक्तौ' Dhâtup. 1. 465.

10. 'सृ गतौ'—Dhâtup. 1. 960.

तुवीति बहुनाम । सर्वविधातृत्वाद्बहुजन्मा धाता यावदधिकारं जन्मेति । **अंशः अंशुना व्याख्यातः ।**

प्रत्येकमप्येते मित्रादयो द्युस्थानत्वेनोपेक्ष्याः । शास्त्रातिगौरवभयात्तु न पृथक् पृथक् द्युस्थानत्वेन समाम्नाताः । ते त्वादित्यलिङ्गलिङ्गितेषु मन्त्रेषु पृथक् पृथग् उपेक्ष्याः, तत्स्तुतीनां पृथगपि विद्यमानत्वात् । 5

**सप्त ऋषयः** (२५) वक्तव्याः । ते पुनरमी **व्याख्याताः** निर्वचनतः । इह त्वभिधेया रश्मयः, इन्द्रियाणि वा । 'सप्त सृप्ता संख्या, ऋषिर्दर्शनात्' इति । सप्त च ते ऋषयश्च सप्तर्षयः । **तेषामेषा** प्राधान्यस्तुतिः **भवति** ॥ ३६ ॥

**"सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् ।**
**सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ ॥"** 10

**सप्त ऋषयः प्रतिहिताः शरीरे, रश्मय आदित्ये । सप्त रक्षन्ति सदमप्रमादं, संवत्सरमप्रमाद्यन्तः । सप्तापनास्त एव स्वपतो लोक-**

---

3. *m.* omits न before पृथक्; *a. d.* read one पृथक् only. 4. *a. d.* omit °लिङ्ग° before °लिङ्गितेषु. 5. *a.* concludes section 37, after विद्यमानत्वात्. 8. *a.* marks verse 34, after भवति, as भवति३४. 10. R. reads सत्रसदौ च देवौ. 12 D. Bi. mss. च and others read लोकमस्तमादित्यं यन्ति तत्र, C. R. also read यन्ति तत्र but otherwise as text, Bi. J. लोकमस्तमितमादित्यं यन्त्यत्र.

---

1. 'तुवीति बहुनाम'—See Nigh. III. 1. 2.

1–2. अंशः अंशुना व्याख्यातः—See Nir. II. 5.

6. 'सप्त ऋषयः'—Nigh. V. 6. 25; व्याख्याताः, i. e. 'सप्त' in Nir. IV. 26. and 'ऋषिः' in Nir. II. 11.

9–10. VS. 34. 55.

11–12. Durga omits आदित्ये and संवत्सरम्. He does not explain संवत्सरं.

12. त एव—These words are supplied by Yâska. They are not in the ṛik.

मस्तमितमादित्यं यन्ति । अत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ वाय्वादित्यौ । इत्यधिदैवतम् ।

अथाध्यात्मम् । सप्त ऋषयः प्रतिहिताः शरीरे, षडिन्द्रियाणि विद्या सप्तम्यात्मनि । सप्त रक्षन्ति सदमप्रमादं शरीरमप्रमाद्यन्ति । सप्ताप-
5 नानीमान्येव स्वपतो लोकमस्तमितमात्मानं यन्ति । अत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ, प्राज्ञश्चात्मा तैजसश्च । इत्यात्मगतिमाचष्टे । तेषामेषापरा भवति ॥ ३७ ॥

**सप्त ऋषयः प्रतिहिताः**–इति । हिरण्यगर्भस्यार्षम् । आथर्वणे आत्मस्तुतौ विनियोगः । उत्तरा च । शृणाति सर्वमिदमिति शरीरमादित्यः । आश्रयणाद्वा । सर्व-
10 मिदमस्मिन्नाश्रितमिति । तस्मिन् **सप्त ऋषयः–रश्मयः प्रतिहिताः** प्रत्येकं हिताः निहिताः । ते पुनः **सप्तैव** अन्यूनाधिकाः सन्तः सार्वदिक्कमुदकमुपनयन्तः तेनेद्धास्त-मादित्यं **सदं**–सदैव **अप्रमादम्–अप्रमाद्यन्तः** अनुत्सर्गेण स्वस्य कर्मणः **रक्षन्ति** । निरिन्धनः पार्थिवोऽपि ह्यग्निः इन्धनक्षयान्निर्वाप्येत । **त एव सप्त**–सप्ताः **आपनाः** सर्वस्य लोकस्य व्यापनाः **स्वपतः** अस्तमुपगच्छतः अस्यादित्यस्यैव तं **लोकम्**

1. C. D. R. Bi. mss. च and others read जागृतोऽस्वप्नजौ, Bi. J. जागृतो अस्वप्नजौ. 3. Bi. ms. ग and C. D. read षळिन्द्रियाणि; Bi. ms. क has षलिन्द्रियाणि. 4. D. सधमप्रमादं, Bi. J. सदमप्रमादं. 5. D. reads लोकमस्तमात्मानं यन्ति तत्र, B. J. लोकमस्तमितमात्मानं यन्त्यत्र, C. Bi. ms. च and R. लोकमस्त-मितमात्मानं यन्ति तत्र. 5–6. C. D. R. Bi. mss. च and others—जागृतोऽअस्वप्नजौ, Bi. J. जागृतो अस्वप्नजौ. 7. Bi. J. conclude XII. iv. 3, with भवति. 8. *a. d.* अथर्वणे. 11. *m.* सार्वदिक् मुदकमुपनयन्तः, *bi. j.* सार्वदिक्कमुदकमुपनयनन्तः; *d.* तेनेद्धांस्तमा°. 12. *a. d.* सदैव for सदेव of *bi. j.*; *a. d. m.* omit अप्रमादम्. 13–14. *a. d.* omit from पार्थिवोऽपि etc. to अस्तमुपगच्छतः ( including ) through mistake. 14. *a. d.* एतं for एव तं.

1–7. Durga omits **अस्तमितमादित्यं यन्ति** ( line 1 ), **अस्वप्नजौ सत्रसदौ च देवौ वाय्वादित्यौ** ( lines 1–2 ), **सप्त ऋषयः प्रतिहिताः षड्** ( line 3 ), **विद्या सप्तम्यात्मनि सदमप्रमादं** ( lines 3–4 ), **इमान्येव, आत्मानं यन्ति** ( line 5 ), **अस्वप्नजौ सत्रसदौ च देवौ, इत्यात्मगतिमाचष्टे** ( line 6 ). And he does not explain अस्वप्नजौ सत्रसदौ च देवौ ( line 1 ), विद्या सप्तम्यात्मनि (lines 3–4 ), and आत्मानं ( line 5 ).

9. शृणाति etc.—cf. ' शॄ हिंसायाम् ' Dhâtup. 9. 16.

आत्मानं गच्छन्ति । बाह्यं मण्डलं प्रविशन्ति । तेष्वनुप्रविष्टेषु **तत्र** सुप्तेषु उपरतप्रकाशवृत्तिषु तत्रान्तर्गतौ **जागृतः** तन्मण्डलान्तरपुरुषः तदधिष्ठाता योऽसौ "हिरण्यश्मश्रुः हिरण्यकेश" इति विज्ञायते वायुश्च **इत्यधिदैवतम्** ।

**अथाध्यात्मम्** । मण्डलवदस्मच्**छरीरे** रश्मिव**दिन्द्रियाणि प्रतिहितानि** निहितानि तच्छरीरं नित्यं रूपाद्यालोकनाद्युपकारेण **रक्षन्ति अप्रमाद्यन्ति** । **सप्तापनानि** व्यापनानि विषयाणां शरीरस्य वा । तान्येव **स्वपतोऽ**स्य जीवस्य सुखदुःखभोक्तुः **लोकं** शरीरमेव **प्रत्यस्तामितमीयुः** । बुद्धिद्वारेण भोक्तर्येव भावनारूपेण लीयन्ते । तद्भावनोपपादकः स्वप्नभोक्तुः स्वप्नो भवति । तत्र **जागृतः** शरीरपरिपालनार्थं **प्राज्ञश्चात्मा** परमात्मा चिन्मात्रेण यः शरीरं व्याप्य वर्तते । **तैजसश्च** प्राणोऽन्नपानपचनव्यूहस्वरसान्तर्भूतं तेजः वायुवृत्ति ।

**तेषामेषा अपरा भवति** । सा पुनः किमर्थम् । रश्मय एवेति स्फुटतायै ॥३७॥

**"तिर्यग्बिलश्चमस ऊर्ध्वबुध्नो यस्मिन्यशो निहितं विश्वरूपम् ।**
**अत्रासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः ॥"**

---

1. *bi. j.* वाह्यं, *m.* वाह्यं. 2. *a.* तत्रान्तर्गतो; *bi.* तदधिष्ठाता योऽसौ, *m.* तदधिष्ठाता योगयोऽसौ. 4. *bi.* मण्डलवदस्मच्छरीरे, *m.* मण्डलंवदस्मिछरीरे. 5. *a.* only omits निहितानि, *m.* reads प्रतिनिहितानि, *bi. j.* प्रतिहितानि निहितानि. 7. *a.* only reads शरीरमिव; *d.* भावनारूपेण, *bi. j. m.* भावनानुरूपेण. 8. *bi. j.* लीयते, *a. d. m.* लीयन्ते; *a. d. m.* यद्भावनोप°, *bi. j.* तद्भावनोप°. 9. *a.* चितिमात्रेण, *bi. j.* चिन्मात्रेण, *d.* परमात्माचितिन्मात्रेण etc.. 9–10. *a. d.* प्राणो अन्ने पानं पचन्व्यूहंख रसान्तर्भूतं तेजो वायुवृत्ति, *bi. j. m.* प्राणोऽन्नं पानं पचनव्यूहश्च रसान्तर्भूतं (*m.* °रसांभूतं°) तेजोवायुवृत्तिः. 11. *a.* concludes section 38 with किमर्थम्, and joins रश्मय एवेति स्फुटतायै with the following para. 12. R. तिर्यग्बिलश्चमस, Bi. J. तिर्यग्बिलं°, Bi. ms. ख reads तिर्यग्बिलंश्चमस°, while च reads तिर्यग्बिलंश्चमस.°

---

2–3. हिरण्यश्मश्रुः etc.—See Chân. Up. 1. 6. 6.

6–7. Durga reads **तानि** for इमानि, and **शरीरं** for आत्मानं of the *bhâṣya* ( see page 1148, line 5 ).

12–13. AV. X. 8. 9; ŚB. 14. 5. 2. 4–5; Bṛh. Up. 2. 2. 4–5.

**तिर्यग्बिलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा । यस्मिन्यशो निहितं सर्वरूपम् । अत्रासत ऋषयः सप्त सहादित्यरश्मयो, ये अस्य गोपा महतो बभूवुरित्यधिदैवतम् । अथाध्यात्मम् । तिर्यग्बिलश्चमस ऊर्ध्व-बन्धन ऊर्ध्वबोधनो वा । यस्मिन्यशो निहितं सर्वरूपम् अत्रासत ऋषयः**
5 **सप्त सहेन्द्रियाणि, यान्यस्य गोप्तॄणि महतो बभूवुरित्यात्मगतिमाचष्टे ॥**

**देवा व्याख्याताः । तेषामेषा भवति ॥ ३८ ॥**

**तिर्यग्बिलश्चमसः**–इति । तिर्यञ्चि अस्य मण्डलस्य मधुपूर्णस्येव रश्मिच्छिद्राणि । चमनं चोदकमेष सनोतीति **चमसः** । ऊर्ध्वं चैतद्ब्रह्ममाभूतसंप्लवान्न निपद्यत इति **ऊर्ध्व-बुध्नः** । ऊर्ध्वं वावस्थितः प्रकाशेन बोधयतीति ऊर्ध्वबुध्नः । तस्मिन् **चमसे** मण्डले
10 **यशः**–उदकं **निहितं** नियमेन आधिकं वा हितमवस्थापितं **विश्वरूपम्** अनेकप्रकार-मनेकरूपम् । कैः पुनस्तन्निहितम् इति । **ये अस्य महतः**–जगतः आत्मनो वा **गोपाः** –गोप्तारः एते **रश्मयः बभूवुः** भवन्ति । **ये** च **अत्र** एतस्मिन् मण्डले **साकम्**–एकीभूतास्तदधिष्ठात्रा सह **आसते** । तैर्हि चतसृषु दिक्षु ऊर्ध्वमधोमण्डलं चोत्सृप्तानि यानि ज्योतींषि अस्य । ते रश्मयः सप्त सर्पणाः ऋषणाद्दर्शनादस्य धर्मस्य ऋषय उच्यन्ते
15 **इत्यधिदैवतम् ॥**

---

4. Bi. J. उद्ध्वबोधनो, R. ऊर्ध्वबो°; Bi. mss. क, ख, ग read विश्वरूपम्, Bi. J. सर्वरूपम्. 5. Bi. mss. क, ख, ग read गोप्त्रीणि. 6. Bi. J. conclude XII. iv. 4, with भवति. 7. *a.* marks verse 35, after इति; *a. d.* read तिर्य(*d.* र्यं)च्यस्य for तिर्यञ्चोऽस्य of *bi. j. m.* 11. *m.* अस्य जगतः महतः. 13–14. *a. d.* उध्वमधोमंडलं वेति यानि सृप्तानि ज्योतींषि अस्य ते etc., *bi. j.* as above. 15. *a. d.* इत्याधिदैवरूपम्, *bi.* ms. ग—इत्यधिरूपम्.

---

1–6. Durga omits **तिर्यग्बिल ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा** ( line 1 ), **सर्वरूपं** and **आदित्य** in आदित्यरश्मयः ( line 2 ), **तिर्यग्बिल** ( line 3 ), **सर्वरूपं** and **अत्र** ( line 4 ).

4–5. Durga neither reads nor explains **ऊर्ध्वबोधनः** ( line 4 ), and **ऋषयः सप्त** ( lines 4–5 ), **इन्द्रियाणि यानि** and **गोप्तॄणि** ( line 5 ).

9. तस्मिन्—Durga reads तस्मिन् for यस्मिन् in the bhâṣya, but he reads यस्मिन् only while giving the *adhyâtma* explanation in the next para.

**अथाध्यात्मम्** इति । तिर्यक्छिद्रमिदमेव शिरश्चमसः । चम्यन्ते ह्यनेन रसा इति । **ऊर्ध्वबन्धनश्च** । उपरि ह्यवस्थितमेतद्बन्धनमस्य शरीरस्य । एतद्वियोगे हि विस्रंस्यते शरीरम् । **यस्मिन् यशो निहितं** विश्वरूपं नानाप्रकारमिन्द्रियानुभूतं रसाख्यं ज्ञानाख्यं वा । तस्य चमसस्य ये विधातारः तद्द्वारेण **अस्य** शरीरस्य **महतो** गोप्तारः तत्रैव चमसान्तरमनुप्रविष्टाः **साकं-सह** तद्यश उपजीवन्त **आसते** 5 इत्यात्मगतिमाचष्टे ॥

**देवाः** (२६) वक्तव्याः । ते पुनः 'देवो दानाद्वा दीपनाद्वा द्योतनाद्वा' इत्यत्र निर्वचनतः **व्याख्याताः** । इह तु रश्मयो बहुवचनेनोच्यन्त इति विशेषः ।

**तेषामेषा** प्राधान्यस्तुतिः **भवति** ॥ ३८ ॥

"**देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम् ।** 10
**देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे ॥**"

**देवानां वयं सुमतौ कल्याण्यां मतावृजुगामिनामृतुगामिनामिति**

---

2. *a.* only reads ऊर्ध्वबुध्नश्च for ऊर्ध्वबंधनश्च. 3. *a. d.* omit शरीरं, *m.* reads शरीरे, *bi. j.* शरीरम्; *bi. j. m.* °मिन्द्रियत्वेन भूतं for °मिन्द्रियानुभूतं. 4-6. *a. d.* read तस्य चमसो ये विधातारे(*d.* र )त्यात्मगतिमाचष्टे and conclude section 39 here. 7. *a. d.* omit ते पुनः; *a. d.* omit दीपनाद्वा. 8. *d.* इति विशेषात्. 9. *a.* joins this line with the next para as it concludes section 38 after आचष्टे ( line 6, above ), and not here. 12. Bi. mss. क, ख, ग, C. and D. omit सुमतौ.

---

7. 'देवाः'—Nigh. V. 6. 26.

8. व्याख्याताः, *i. e.* in Nir. VII. 15.

10. **भद्रा**—Yâska and Durga both omit this word. They do not explain it also.

10-11. RS. I. 89. 2; VS. 25. 15; MS. 4. 14. 21: 217. 7-10.

12. **सुमतौ**—omitted by Bi. mss. क, ख, ग, C. and D.

12. **कल्याण्यां मतौ**—Durga omits this: but he explains सुमतिः of the ṛik, as शोभना मतिः. He omits also **ऋजुगामिनाम्** and **इति**.

**वा । देवानां दानमभि नो निवर्तताम् । देवानां सख्यमुपसीदेम वयम् । देवा न आयुः प्रवर्धयन्तु चिरं जीवनाय ॥**

**विश्वे देवाः सर्वे देवाः । तेषामेषा भवति ॥ ३९ ॥**

**देवानां भद्रा**–इति । गोतमस्यार्षम् ।

5 "देवेभ्यो वशामालभेत"

इति विनियोगः । अस्य पशोर्वपायाः पुरोनुवाक्या । य एते **देवाः**–रश्मयः नित्यं ऋज्वेव मण्डलादनावरणत्वादन्तरिक्षस्य सर्वतो यन्ति । अथवा । **ऋजूयताम्–ऋतुगामिनाम्** ऋतावृतौ यथाकालमस्मात् मण्डलात् गच्छतां **सुमतिः** शोभना मतिः प्रसादाभिमुखी मतिः सा **नः** अस्मान् प्रति **निवर्ततां** नियमेन वर्तताम् । तत्पूर्विका
10 च **रातिः**–धनलाभोऽस्मान् प्रति नियमेन वर्तताम् । ततश्च तेन धनलाभेन उपजनितसामर्थ्याः सन्तः **वयं** तेषामेव **देवानां सख्यं**–समानतां याज्ञे कर्मणि समानमङ्गभावम् **उपसेदिम–उपसीदेम**–उपगच्छेम **वयम्** । ततश्च तथाभूतानामस्माकम् **आयुः** ते **देवाः प्रतिरन्तु–प्रवर्धयन्तु जीवसे चिरं जीवनाय** इत्येतदाशास्महे ।

15 **विश्वे देवाः** (२७) वक्तव्याः । **सर्वे देवाः** । त एव रश्मयः उपहितविश्व-

2. Bi. J. and C. have चिरं जीवनाय, D. has चिरजीवनाय. 3. Bi. J. conclude XII. iv. 5, with भवति. 4. *a.* marks verse 36, after इति; *a. d.* read दीर्घतमसः for गोतमस्य. 7. *a. d.* ऋज्वेव for ऋज्वेवं of *bi. j.* 8. *a. d.* omit one ऋतौ. 9. *a. d. m.* omit नः. 11. *a. d.* समानख्यानतां ( *a.* °नं तां ) for समानतां; *a. d.* यज्ञे कर्मणि. 12. *a. d. m.* omit उपसीदेम; *a. d.* read गच्छेम for उपगच्छेम of *bi. j.* 13. *a. d.* omit आयुः after अस्माकं and add it after प्रवर्धयन्तु; *a. d. m.* omit चिरं before जीवनाय. 14. *a.* concludes after °आशास्महे, section 40, as ॥ ४० ॥ and not at page 1153, line 2 below, which it joins to the next para. 15. *a. d.* विश्वे देवा इति वक्तव्यम्, *bi. j.* विश्वे देवा वक्तव्याः; *a. d.* omit सर्वे देवाः ते, *m.* omits सर्वे देवाः त एव रश्मयः; *a. d.* एवं for एव; *d.* उपहितावितेपुश्च विशेषणाः ?

1. Durga omits **वा** and **दानमभि.**
5. देवेभ्यो etc.—MS. 2. 5. 2.
6. पुरोनुवाक्या—See MS. 4. 14. 2.
15. ' विश्वे देवाः '—Nigh. V. 6. 27.

विशेषणाः सन्तो विश्वे देवा भवन्ति । **तेषां** तदभिधानविशिष्टानाम् **एषा** प्राधान्य-स्तुतिः **भवति** ॥ ३९ ॥

" ओमा॑सश्चर्षणीधृतो॒ विश्वे॑ देवास॒ आ ग॑त ।
दा॒श्वांसो॑ दा॒शुषः॑ सु॒तम् ॥ "

**अवितारो वावनीया वा मनुष्यधृतः सर्वे च देवा इहागच्छत,** 5
**दत्तवन्तः दत्तवतः सुतमिति । तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते । यत्तु किंचिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते । यदेव विश्वलिङ्गमिति शाकपूणिः । अनत्यन्तगतस्त्वेष उद्देशो भवति । 'बभ्रुरेक' इति दश द्विपदा अलिङ्गाः । भूतांशः काश्यप आश्विनमेक-लिङ्गम् । अभितष्टीयं सूक्तमेकलिङ्गम् ॥** 10

**साध्या देवाः साधनात् । तेषामेषा भवति ॥ ४० ॥**

**ओमासश्चर्षणीधृतः**–इति । मधुच्छन्दसा दृष्टा । प्रउगे ग्रहे विनियोगः । वैश्वदेवश्चानेन प्रातःसवने ग्रहो गृह्यते । हे **विश्वे देवाः** । ये यूयम् **ओमासः**–

1. *a. d.* तदभिधानाविशिष्टानां for °धानविशिष्टां of *bi. j.* 2. *a.* marks verse 37, after भवति. 4. R. दाश्वॉसो. 6. Bi. mss. क, ख, ग read तदेतदेकमिव. 8. Bi. mss. क, ख, ग read °उद्देशो भवति । भूतांशः काश्यप आश्विनमेकलिङ्गम् । अभितष्टीयं सूक्तमेकलिङ्गम् । बभ्रुरेक इति दश द्विपदा अलिङ्गाः । साध्या देवाः साधनात् । तेषामेषा भवति ॥, Bi. J. read as °उद्देशो भवति । बभ्रुरेक इति दश द्विपदा अलिङ्गाः । भूतांशः काश्यप आश्विनमेकलिङ्गम् । अभितष्टीयं सूक्तमेकलिङ्गम् । साध्या देवाः साधनात् । तेषामेषा भवति ॥. 9. R. भूतॉशः. 11. Bi. J. conclude XII. iv. 6, with °मेषा भवति. 12–13. *m.* omits from मधुच्छन्दसा दृष्टा to विश्वे देवाः. 12. *d.* प्रयुउगे.

3–4. RS. I. 3. 7; VS. 7. 33; 33. 47; TS. 1. 4. 16. 1; MS. 1. 3. 18: 37. 1–2; KS. 4. 7; ŚB. 4. 3. 1. 27; AA. 1. 1. 4. 11.

5. Durga omits वा (after अवितारो), **मनुष्यधृतः** and **सर्वे च देवा इहागच्छत.**

9. 'बभ्रुरेकः etc. '—RS. VIII. 29. Durga omits **बभ्रुरेक इति दश द्विपदा अलिङ्गाः.** भूतांशः काश्यपः is the ṛsi of RS. X. 106.

13. प्रातःसवने ग्रहो गृह्यते—MS. 1. 3. 18.

**अवितारः**–रक्षितारः **चर्षणीनां**–मनुष्याणां स्वेनोपकारेण **अवनीया वा** तर्पणार्हाः **धृतः**–धारयितारश्च स्थितिकर्तारः ते यूयं **दाश्वांसः–दत्तवन्तः**। मनसा कृतसंकल्पा भूत्वा इदं नामास्माभिरस्मै देयमिति। ततः अस्य **दाशुषः–दत्तवतः** हवींषि यजमानस्यैतं **सुतम्** अभिषुतं सोमं पातुम् **आगत** इत्येतदाशास्महे।

5 अधुना विश्वान् देवानधिकृत्य तद्गतमेवाधियज्ञे विचारयिष्यन्नुपोद्घन्ति। **तदेतदेकमेव वैश्वदेवं गायत्रं तृचम्** इत्येवमादि। **तत्** इति समाम्नायस्यानुस्मृतये। **एतत्** इति वक्ष्यमाणार्थसंनिधीकरणाय। **एकं तृचं** सूक्तं **वैश्वदेवं गायत्रं** गायत्रेण छन्दसा युक्तं **दशतयीषु** सर्वास्वपि बहुषु शाखासु **विद्यते**। नान्यदस्त्येवास्मिञ्छन्दसि। प्रयोजनं च गायत्रच्छन्दोयुक्तैरन्यैरपि बहुभिर्वैश्वदेवैर्मन्त्रैरधियज्ञे। तत्र किं कर्तव्यम् 10 इति। यत आह। **यत्तु किंचिद्बहुदैवतं** मन्त्रजातं गायत्रेण छन्दसा युक्तं **तद्वैश्वदेवानां स्थाने युज्यते**। न्याय्यमित्यतो **यदेव विश्वलिङ्गम्** विश्वशब्दोपेतं मन्त्रजातं सूक्तं वा तदेव वैश्वदेवानां स्थाने विनियुज्यते न बहुदेवतामात्रेण **इति शाकपूणिः** मन्यते तत् किमस्यापि यास्काचार्यस्यैतदेवाभिमतमुत न इति। यत आह। **अनत्यन्तगतस्त्वेष उद्देशो भवति**। अनैकान्तिक एष उद्देशः। उद्देशः 15 प्रतिज्ञा—यदेव विश्वलिङ्गोपेतं तदेव वैश्वदेवानां स्थाने विनियुज्यते इति। कथमनैकान्ति-

---

2. *a. d. m.* omit धृतः; *a. d.* add दत्तवंतः again after मनसा; *d.* repeats here some previous words by mistake. 5. *d.* विश्वे देवान् for विश्वान् देवान् of *bi. j.*; *d.* adds किंचित् before विचारयिष्यन्; *d.* उपोद्घन्ति for उपद्घन्ति. 6. *a.* तमिति समाम्नायानुस्मृतये, *d.* only reads तमिति for तदिति and in the rest agrees with text. 8. *a. d. m.* दाशतयीषु, *bi. j.* दशतयीषु; *d.* विद्यंते for विद्यते; *a. d.* अस्त्येव for अस्त्वेव of *bi. j.* 9. *d.* गायत्रं छंदोयुक्तैरन्यैरपि etc. for गायत्रच्छंदो°. 10. *m.* omits यत आह; *d.* बहुदेवतमंत्रजातं गायत्रेयछंदसा युक्तं. 11. *d.* स्थाने युज्यते न्याय्यसि। त्यतो यदेव etc. 11–12. *m.* omits from न्याय्यमित्यतो to विनियुज्यते. 11 *a. d.* omit विश्वलिङ्गम्. 12. *d.* तदेतदेव for तदेव. 13. *d.* मन्यन्ते for मन्यते ? *d.* यस्काचार्यस्येतदेवा°. 14. *a. d.* अनत्यंतगतस्त्वेष, *bi. j.* अनत्यन्तगस्त्वेष. 14–15. *a.* अनैकातिकं एष उद्देशः। उद्देशनं प्रतिज्ञा, *d. m.* agree with text but read उद्देशनं प्रतिज्ञा. 15. *a. d.* प्रयुज्यते for विनियुज्यते.

कम् इति। वैश्वदेवं हि मन्त्रजातं समाम्नाये क्रियार्थमुत्पद्यमानम् आम्नायस्य क्रियार्थत्वाद्गायत्रे छन्दसि तावदेवोत्पत्तुमर्हति विश्वयुक्तमन्त्रजातवत् यावत् कर्मसु सर्ववैश्वदेवेषु तच्छन्दस्केषु अलमिति । न च तत् सर्वास्वपि दशतयीष्वस्ति छन्दस्यलं कर्मोत्पादे । प्रयोजनं च तच्छन्दोयुक्तैरपि विविधैर्मन्त्रैर्भवति । न च ते तथाविधाः सन्तीति बहुदेवताश्च तस्मि-श्छन्दसि सन्ति । तत्किमस्तु तस्य कर्मणः प्रहाणम् उत वा तत्स्थाने बहुदेवतानि 5 सूक्तान्योप्यन्ताम् इति । उच्यते । युक्तं यद्बहुदेवतानि ओप्येरन्निति यास्काचार्यः पश्यन्नाह **यत्तु किंचिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते** । सेयमनुत्पत्तिर्गा-यत्रे छन्दसि वैश्वदेवानां मन्त्राणां यावदलं कर्मणि गमयति बहुविश्वशब्दयोरितरेतरार्था-भिधेयप्रत्यासत्त्या बहुदेवान्यपि वैश्वदेवानां स्थाने युज्यन्त एवेति । अपि चैवमनत्यन्तगत इत्युद्देशः । येन **भूतांशः काश्यप आश्विनमेकलिङ्गम्** । भूतांशो नाम ऋषिः 10 काश्यपः । स एकेनाश्विलिङ्गेन युक्तमनेकर्चं सूक्तं ददर्श । तत्र यास्वप्यश्विलिङ्गमृक्षु नास्ति तासामप्याश्विनीत्वं तेनैवैकेनाश्विलिङ्गेन । यथैकेनापि छत्रिणा मध्यगतेन छत्रिणो भवन्ति एवमेकेन विश्वलिङ्गतृचेन यावन्ति सूक्तानि कर्माणि संयुज्यन्ते बहुदेवतानि अविश्वलिङ्गा-न्यपि तानि तदर्थसाधकानीति ।

ऋध्याम अश्विलिङ्गं येन पर्फरीसूक्तं सर्वमाश्विनम् । 15

“ ऋध्याम स्तोमं सनुयाम वाजमा नो मन्त्रं सरथेहोप यातम् ।
यशो न पक्वं मधु गोष्वन्तरा **भूतांशो** अश्विनोः काममप्राः ॥ ”

---

1. *d.* वैश्वदेवं हि मन्त्रजात । माम्नयेत्क्रियार्थ etc., *a.* समाम्नायक्रियार्थ ? 2. *a. d.* तच्छंदस्ये( *d.* ष्व )त्वलमिति, *m.* तच्छन्दस्साम्येषु. 3. *m.* दाशतयीषु; *a.* अलं कर्मोत्पादौ ? 4. *a. d.* omit न च ते before तथाविधाः; *d.* omits तथाविधाः also and reads विविधैर्मन्त्रैर्भवति । सतीति ।. 5. *d.* छन्दासि सति for छन्दसि सन्ति; *d.* बहुदेवतायानि for बहुदेवतानि. 6. *m.* ओप्यताम् ?; *a. d.* omit उच्यते; *d.* यस्काचार्यः. 8. *d.* बहुशब्दयोः for बहुविश्वशब्दयोः. 9. *d.* बहुदेवतान्यपि. 11. *d.* अनैकर्चं ? *m.* यास्वप्याश्वि°. 12. *d.* तेनैवेकेन ? 14. *a.* only reads तदर्थकसाधकानि. 15. *m.* ऋध्यामाश्विलिङ्गम्; *a.* marks verse 38, after आश्विनम्. 16. *d.* reads up to सनुयामेति.

---

1. आम्नायस्य क्रियार्थत्वात्—*Cf.* ‘ आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् ’ Pûrva-mîmâṁsâ 1. 2. 1.

15. पर्फरीसूक्तम्—RS. X. 106. It is so called because words like जर्भरी, तुर्फरी, and पर्फरी are used in this sûkta.

16-17. RS. X. 106. 11.

इति । हे अश्विनौ वयं स्तोमं–त्रिवृत्पञ्चदशादिकम् ऋध्याम–ऋध्यास्म–वर्धयेम । किंच वाजं–हविर्लक्षणमन्नं युवाभ्यां सनुयाम–प्रयच्छेम । तस्माद् युवां सरथा–सरथौ–समानरथौ एकमेव रथमारूढौ सन्तौ इह–अस्मिन् कर्मणि नः–अस्मदीयं मन्त्रं–मननीयं स्तोत्रम् उपयातम्–उपागच्छतम् । गोष्वन्तः–गोरूधस्यवस्थितं पक्वं–परिणतं तदेव 5 मधु–मधुरं यशो न । यश इत्यन्ननाम । नश्चार्थे । क्षीराज्यादिलक्षणं महावीरपात्रे अवनीयमानम् अन्नं चापेक्ष्य आगच्छतमिति संबन्धः । एवमुक्तप्रकारेण **भूतांशः** एतन्नामा ऋषिः अश्विनोः कामम् अभिलाषमात्मीयाभिः स्तुतिभिः अप्राः–आपूरयत् । संपूर्णमकार्षीदित्यर्थः । " प्रा पूरणे " आदादिकः । व्यत्ययेन मध्यमः ॥

**अभितष्टीयं सूक्तं** चैन्द्रम् । तदपि **एकलिङ्गम्** इति । यथा ।

10 " शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ "

इति । विजयाय समत्सु–संग्रामेषु नित्यं घ्नन्तं वृत्राणि–वारकाणि शत्रुजातानि संजितं समस्तानां वीराणां धनानां च जेतारं शुनं शूनम् उत्साहेन प्रवृद्धं नृतमं जगतः अतिशयेन नेतारम् ऊतये रक्षणाय अस्मिन् भरे–संग्रामे वाजसातौ यस्मिन् शत्रून् जित्वान्नानि

---

1–8. *a. d.* substitute for all this, the following :—हे आश्विनौ सरथौ समानरंहणौ समानगती युवामायातम् । इम......वतः श्रुतवतोर्भवतोस्तोममृध्याम ऋद्धिं प्राप्नुमो वयम् । कथमिति । सनुयाम वाजसमन्नं भक्षेमाहि । किंच । यशो न पक्वं मधु क्षीरं घृतं च यद्गोष्वं तन्मध्वस्ति ( *d.* यद्गोष्टत्तन्मध्वस्ति° ) येन भूतांश अ( *d.* आ )श्विनोर्भवतोः काममप्राः आपूरयं ( *d.* य ) ते इत्यत आयातमिति. The *tîkâ* given above by *bi. j.* is the same as the commentary of Sâyaṇa on this *ṛk.* 5. *m.* omits मधु; *m.* क्षीरादि° for क्षीराज्यादि.° 10. *d.* reads the *pratîka* up to शुनं हुवेमेति. 12. *a. d. m.* शत्रुजात्यानि. 13. *d.* reads समस्तामावाराणां for समस्तानां वीराणां; *d.* omits धनानां च. 13–14. *a. d.* omit after जेतारं, 'शुनं शूनम् etc. to नेतारम्' (inclusive) and read as जेतार ये रक्षणायास्मिन्नंतरे संग्रामे etc. 13. *m.* उत्साहे प्रवृद्धम्. 14. *d.* reads up to रक्षणायास्मि and then omits the portion up to साध्या इति सर्वे एते प्रा ( inclusive ). Thus it reads as रक्षणायास्मि णा रश्मयो वेत्युपपद्यते ।, vide page 1158, line 17. 14. *d.* अस्मिन् for यस्मिन्; and शत्रूनजित्वा ?

---

9. अभितष्टीयं सूक्तम्—RS. III. 38. This sûkta is so called because the first ṛik of it begins with the word अभितष्टेव.

10–11. RS. III. 38. 10.

संभज्यन्ते तस्मिन् हुवेम वयमाह्वयामहे तम् इन्द्रम् एवमादिगुणयुक्तमात्मनो विजयायेति ।

**साध्याः** (२८) **देवाः साधनात्** । ते हि सर्वमिदं साधयन्ति । यदन्येन सर्व-कर्मभिरसाधितं तत्साधयन्तीति साध्या उच्यन्ते । ते च पुनः प्राणाः विश्वसृज ऋषयः ये सहस्रसंवत्सरसत्रेणेदं विश्वमसृजन्त त एवैते । अधिदैवं रश्मयः । विज्ञायते हि । 5

" प्राणा वै सप्त ऋषयः साध्या विश्वसृजः " इति ।

**तेषामेषा** प्राधान्यस्तुतिः **भवति** ॥ ४० ॥

" यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥"

**यज्ञेन यज्ञमयजन्त देवा, अग्निनाग्निमयजन्त देवाः ।** 10

**" अग्निः पशुरासीत्तमालभन्त । तेनायजन्त "**

**इति च ब्राह्मणम् । तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः समसेवन्त यत्र पूर्वे साध्याः सन्ति देवाः साधनात् । द्युस्थानो देवगण इति नैरुक्ताः । पूर्वं देवयुगमित्याख्यानम् ॥**

**वसवो यद्विवसते सर्वम् । अग्निर्वसुभिर्वासव इति समाख्या ।** 15 **तस्मात् पृथिवीस्थानाः । इन्द्रो वसुभिर्वासव इति समाख्या । तस्मा-**

---

1. *d.* ह्वेम for हुवेम. 4. *d.* उच्यते for उच्यंते ? 5. *a.* संवत्सरसहस्रेण सत्रेण etc., *d.* सहस्रसंवत्सरेण सत्रेण. 13. Bi. mss. क, ख, ग read संसेव्यन्त for समसवन्त; R. Bi. J. देवाः साधनाः; R. द्युस्थाणा, Bi. J. द्युस्थानो.

---

3. ' साध्याः '—Nigh. V. 6. 28.

6. " प्राणा वै सप्त etc. "—cf. AB. ii. 4. 3.

8-9. RS. I. 164. 50; X. 90. 16; AV. 7. 5. 1; VS. 31. 16.

11. " अग्निः पशु° "—*Cf.* AB. i. 16. 36, 38-40; KS. 5. 5. 4; VS. 23. 17; ŚB. 13. 2. 7. 13. TS. 5. 7. 26. 1 reads अग्निः पशुरासीत्ते-नायजन्त only. It has not got तमालभन्त.

11-16. Durga omits **अग्निः पशुरासीत्तमालभन्त तेनायजन्तेति च ब्राह्मणम्, ह, समसेवन्त, साधनात्, द्युस्थानो देवगण इति नैरुक्ताः पूर्वं देवयुगमित्याख्यानम्, यद्विवसते सर्वम्** and **वसुभिः**.

**न्मध्यस्थानाः। वसव आदित्यरश्मयो विवासनात्। तस्माद् द्युस्थानाः। तेषामेषा भवति ॥ ४१ ॥**

**यज्ञेन यज्ञमयजन्त**–इति । दीर्घतमस आर्षम् । **अग्निनाग्निमयजन्त देवाः ।** उक्तं च 'तमुन्निन्यथुः सर्वगणं सर्वनामानम्' इति । **तम्** अग्निं स्थावरजंगमभावे-
5 नेति । 'तं वंश्वराथां वयं वसत्या' इत्येतस्माद्दर्शनवतः प्रयोक्तुः सर्वमिदमग्निरित्य-भिप्रेत्य ब्रवीति । **यज्ञेन–अग्निना** स्थावरजंगमभावमापन्नेन हविर्भूतेन **यज्ञम्–अग्निम्** एव सर्वदेवताभूतमादित्यादिप्रनाडिकया महान्तमात्मानम् **अयजन्त देवाः** देवभा-विनः पूर्वे ज्ञानकर्मसमुच्चयकारिणो यजमानभावमापन्नाः **साध्याः** विश्वसृजः ऋषयः प्राणाः । **तानि धर्माणि** तानि कर्माणि तथाविधज्ञानयुक्तानि **प्रथमानि** मुख्यानि
10 महदात्मभावापत्तये **आसन्** । तैरपि क्रियन्ते इत्यर्थः । **ते** च तानि कृत्वा नियमेनैवान-न्यभावित्वात् तत्फलस्य **महिमानः** तदानुपूर्व्येण जातमहदात्मभावाः सन्तः तमेव **नाकं** महान्तमात्मानम् एकान्तसुखं **सचन्त** । तद्भावमेव ते आपेदिरे । किं त एव इति । नेत्युच्यते । **यत्र पूर्वे साध्याः सन्ति देवाः ।** शब्दार्थोपदेशानित्यत्वाद्यत्र पूर्वे च पूर्वतरे च ज्ञानकर्मसमुच्चयकारिण आसते । सन्ति जग्मुरित्यर्थः । विज्ञायते हि

15 "विश्वसृजः प्रथमे सत्रमासत"

इति । शिरो ह्यध्यात्मं द्युस्थानभक्तिः । अतः सप्त ऋषयः देवाः विश्वेदेवाः साध्या इति सर्व एते प्राणाः रश्मयो वेत्युपपद्यते । ब्राह्मणमपि चैतमर्थमेवानुविदधाति

---

2. Bi. J. conclude XII. iv. 7 with भवति. 3. *a.* marks verse 39, after इति. 4. *a. d.* उक्तं for उक्तं च of *bi. j.* 4–5. *a.* reads after °भावेनेति,—आहुतिश्वरवोस्थावरात्वेनेतित्यत्र । तस्माद्दर्शनं तं वश्वराथा; *d.* तं वश्वराथा वयं च (व) सत्ये ( त्वे ) तत्तस्माद्दर्शनवतः प्रयोक्तुसर्वमिद etc. 5. *m.* इत्येतत्तस्माद्दर्शनवतः. 6. *a. d. m.* omit यज्ञेन; *a. d. m.* omit यज्ञम्. 7. *d.* सर्वे देवताभूतं ?, *m.* सर्वदेवताभूतां. 7–8. *d.* देवभाविन for °भाविनः. 8. *d.* विश्वसृजवऋषयः. 9. *a. d.* omit तानि कर्माणि; *d.* तथाविज्ञानयुक्तानि ? 10. *d.* तैरणक्रियन्तेत्यर्थः. 11. *d.* जातमहदात्मभावसन्तः. 12. *d. m.* असचन्त for सचन्त. 14. *d.* जग्मुः for जग्मुः, *m.* संविजग्मुः for सन्ति जग्मुः. 17. *d.* omits all up to सर्वं एते प्रा here and begins with णा रश्मयो etc., vide page 1156, line 14.

---

4. तमुन्निन्यथुः etc.—See Nir. VI. 36.

14. विज्ञायते हि—For the quotation following, see TB. 3. 12. 9.

" अग्निः पशुरासीत् "

-इत्येवमादि ।

**वसवः** (२९) इति वक्तव्यम् । ते पुनरमी त्रिस्थानाः । ते यस्मात् सर्वमिदं विभागेनावस्थितमाच्छादयन्ति । कथम् इति । **वासवोऽग्निरिति समाख्या । तस्मात् पृथिवीस्थानाः । इन्द्रो वसुभिर्वासव इति समाख्या । तस्मात् मध्यस्थानाः । वसव आदित्यरश्मयो विवासनात् । तस्मात् द्युस्थानाः । तेषाम् एषा** प्राधान्यस्तुतिः **भवति** ॥ ४१ ॥ 5

**सुगा वो देवाः सुपथा अकर्म य आजग्मुः सवनमिदं जुषाणाः ।**

**जक्षिवांसः पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि ॥**

**स्वागमनानि वो देवाः सुपथान्यकर्म य आगच्छत सवनानीमानि । जुषाणाः खादितवन्तः पीतवन्तश्च सर्वेऽस्मासु धत्त वसवो वसूनि । तेषामेषापरा भवति ॥ ४२ ॥** 10

**सुगा वो देवाः**-इति । परमेष्ठिन आर्षम् । समिष्टयजुःषु विनियोगः । हे **देवाः ये यूयम् आजग्मुः** नित्य**मागच्छत इदं सवनम्** इमं यज्ञम् अस्माभिः सह **जुषाणाः**-प्रीयमाणाः । तेषां **वः अनुगच्छतां सुगाः-स्वागमनानि** शोभनानि 15

---

1. *d.* पशुरासीत्येवमादि ? 3. *d.* adds च between इति and वक्तव्यम्. 6. *a. d.* विवासनाः for विवासनात्. 7. *a.* concludes as ॥४२॥, sect. 42. 8. Bi. J. सुपथा अकर्म, R. C. Bi. ms. च, and D. read सदंननकर्म, C. सुपथामकर्म. 9. R. जक्षिवाँसः पपिवाँसश्च. 12. Bi. J. conclude XII. iv. 8, with °अपरा भवति. 13. *a.* marks verse 40, after इति. 14. *a. d.* यूयं ये for ये यूयं of *bi. j.* 15. *d.* अनुगच्छन्तां; *a. d. m.* omit सुगाः.

---

3. 'वसवः'—Nigh. V. 6. 29.

4. Durga reads वासवोऽग्निरिति समाख्या, while the bhâṣya has अग्निर्वसुभिर्वासवः.

8-9. MS. 1. 3. 38 : 44. 10-11; KS. 4. 12; S'B. 4. 4. 4. 10; TS. 1. 4. 44. 2; AV. 7. 97. 4; VS. 8. 18.

10-11. Durga omits **अकर्म, सवनानीमानि** and **सर्वे**.

13. विनियोगः—See MS. 4. 8. 4; Mânav. Śrau. 2. 5. 4. 16.

आगमनानि पुनः पुनरस्मद्यज्ञेषु एवमेव **सुपथानि**—सुमार्गाणि सन्तु। किंच एतस्मिन् यज्ञे **जक्षिवांसः खादितवन्तः** हवींषि **पपिवांसश्च पीतवन्तश्च** सोमतृप्ताः सन्तः **अस्मे—अस्मासु धत्त**—निधत्त हे **वसवः वसूनि** एतदाशास्महे। समिष्ट-यजुःषु तृतीयसवने विनियोगादत्र द्युस्थानाः वसवः।

5 **त्रिस्थानाः** इत्युक्तम्। यत इतरयोरपि स्थानयोः प्रदर्शयति। **तेषाम्** एषा **अपरा भवति** ॥ ४२ ॥

**"ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्राः।**
**अर्वाक् पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य॥"**

**ज्मया अत्र वसवोऽरमन्त देवाः। ज्मा पृथिवी, तस्यां भवा उरौ**
10 **चान्तरिक्षे मर्जयन्त गमयन्त शुभ्राः शोभमानाः। अर्वाच एनान् पथो बहुजवाः कुरुध्वम्। शृणुत दूतस्य जग्मुषो नोऽस्याग्नेः॥**

**वाजिनो व्याख्याताः। तेषामेषा भवति ॥ ४३ ॥**

**ज्मया अत्र वसवः**—इति। वसिष्ठस्यार्षम्। **ज्मा पृथिवी। तस्यां भवाः** ये नित्यं भवन्ति ते **ज्मयाः। रन्त—अरमन्त। अत्र** एतस्मिन् कर्मणि अस्मिन्
15 वा लोके **देवाः वसवः।** ये **च उरौ** विस्तृते **अन्तरिक्षे** विस्तीर्णे **मर्जयन्त।**

1. *a.* only reads तस्मिन् for एतस्मिन्. 2. *d.* खादितवतो; *a. d. m.* omit पपिवांसश्च. 2–3. *d.* सोमतृप्ताः सतो, *bi. j.* सोमं तृप्ताः. 3. *a. d. m.* omit अस्मे; *a. d.* add इति after वसूनि. 3–4. *a. d.* read समिष्टयजुःषु विनियोगादेव द्युस्थाना वसवः; *d.* joins this with the following. 6. *a.* concludes as ॥४३॥ sect. 43, *bi. j.* as ॥ ८ (४२) ॥. 10. C. D. R. add रमयन्त after गमयन्त. 11. Bi. J. नो अस्याग्नेर्वाजिनो, C. D. and Bi. mss. च and others नोऽस्याग्ने-र्वाजिनो. 12. Bi. J. conclude XII. iv. 9, with भवति. 13. *a.* marks verse 41, after इति. 13–14. *a. d. m.* omit भवाः ये, *m.* omits भवाः only. 14. *d.* रमंत for अरमन्त.

---

7–8. RS. VII. 39. 3.

10. C. D. R. add रमयन्त after गमयन्त. Durga omits **गमयन्त** and **अर्वाच एनान्.**

मार्ष्टिर्गत्यर्थः । **गमयन्तः** यद्यत्तेषां गमयितव्यम् । अथवा । वर्तमानाः । **शुभ्राः शोभमानाः** । एवमनयोः स्थानयोः वसून् विभज्याधुना द्युस्थानांस्तान् कृत्वा ब्रवीति । ये यूयमेवं त्रिस्थानाः तान् वो ब्रवीमि । नित्यम् **अस्य अग्नेः नः** अस्मद् **दूतस्य जग्मुषः** युष्मान् प्रति गतवतः **शृणुत** यदयं ब्रवीति । श्रुत्वा चास्मान् **अर्वाग्**- आभिमुख्येन **उरुज्रयः बहुजवाः** बहुप्रकारं शतसहस्रमागमनेनैव **पथः** मार्गान् 5 प्रहतान् **कुरुध्वम्** इत्येतदाशास्महे ।

**वाजिनः** (३०) **व्याख्याताः**, अपि स वाजी वेजनवान् इत्यत्र । केवलमत्र बहुवचनकृतो विशेषः । रश्मयश्च अभिधेयाः । पृथक्त्वे देवाश्वाः । **तेषाम् एषा भवति प्राधान्यस्तुतिः** ॥ ४३ ॥

"शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः ।　　10

जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः ॥"

**सुखा नो भवन्तु वाजिनो ह्वानेषु देवतातौ यज्ञे । मितद्रवः सुमितद्रवः । स्वर्काः स्वञ्चना इति वा स्वर्चना इति वा, स्वर्चिष इति वा ।**

---

1. *a.* appears to read गमयन् for गमयंतः, *d.* गमयन्तं तषां गमयितव्यं ? *d.* वर्तमानाः. 2. *a.* reads तान् for वसून्; *d.* स्थानयोस्तान्विभज्य; *d.* द्युस्थानांस्तानकृत्वा ? 3. *a.* adds अग्नेः again after नः 4. *a. d.* omit युष्मान् प्रति; *d.* reads जग्मुषे । गतवंतः श्रृणुत यदयं ब्रवीति; *a. d.* अर्वाङ्. 5-6. *a.* appears to read बहुप्रकार (*d.* गयो) गतयो नित्यमग्नेरहतान्कुरुध्वमित्येतदाशास्महे. 5. *m.* omits पथः. 7. After अपि *d.* adds the portion omitted from page 1156, line 14, to page 1158, line 17, and hence reads as रक्षणायास्मिन्नंतरे संग्रामे etc. to सर्वे एते प्रा-स वाजी केवलवानित्यत्र. 8. *a.* देवाश्च for देवाश्वाः. 9. *a.* concludes here as ॥ ४४ ॥, sect. 44, *bi. j.* as ॥ ९,४३ ॥. 11. R. रक्षाँसि, Bi. J. रक्षांसि. 13. R. स्वर्चन इति वा.

---

7. 'वाजिनः'—Nigh. V. 6. 30; व्याख्याताः i. e. in Nir. II. 28.

10-11. RS. VII. 38. 7; VS. 9. 16; 21. 10.

12-13. Durga omits **सुमितद्रवः, इति वा** (after स्वञ्चनाः, as well as after स्वर्चनाः), and **इति** only (after स्वर्चिषः).

13. स्वर्काः स्वञ्चना इति वा etc. Cf. Durga on Nir. XI. 14.

**जम्भयन्तोऽहिं च वृकं च रक्षांसि च क्षिप्रमस्मद्यावयन्त्वमीवा देवाश्वा इति वा ॥**

**देवपत्न्यो देवानां पत्न्यः । तासामेषा भवति ॥ ४४ ॥**

**शं नो भवन्तु वाजिनः**–इति । वसिष्ठस्यार्षम् । वाजिनयागे विनियोगः ।
5 **देवताता** एतस्मिन् **देवताते**–यज्ञे **हवेषु**–आह्वानेषु **शं नः** अस्माकं **सुखाः भवन्तु** सन्तु **वाजिनः** । किंलक्षणाः । **मितद्रवः** सुश्लिष्टं शोभनं ये द्रवन्ति । **स्वर्काः** ये **स्वञ्चनाः** । शोभनम् अञ्चन्ति गच्छन्ति । **स्वर्चनाः** शोभनं वा अर्चनं येषां स्तुतिः । **स्वर्चिषः वा** । येषां शोभना अर्चिषो दीप्तयः त आगच्छन्तु । आह्वानेष्वस्माकम् । **जम्भयन्तः** । किम् इति । **अहिं च वृकं** च । यश्चास्मानाहन्ति । यश्च
10 वृकस्तस्करो मुष्णाति । **रक्षांसि च** । येऽस्मान् रहसि क्षिण्वन्ति । तांश्चास्मत्तः **जम्भयन्तः**–हिंसन्तः **सनेमि**–**क्षिप्रम्** । सामर्थ्यादिह सनेमि इति क्षिप्रनाम । **युयवन्** । सामर्थ्यात् अप इत्यध्याहृत्य अप**यावयन्तु** अपमिश्रयन्त्वित्यर्थः । इष्टं च रक्षसां नाशनं न मिश्रणमिति ॥

**देवपत्न्यः** (३१) वक्तव्याः । ताः पुनः **देवानां पत्न्यः** पालयित्र्यः पालनीया

---

1. Bi. mss. क, ख, ग read यावन्नमीवा. 3. Bi. J. conclude XII. iv. 10, with तासामेषा भवति. 4. *a.* marks verse 42, after इति; *a. d.* add इयं after आर्षं; *d.* वाजिनयोगे. 5. *a. d.* omit देवताता. 5–6. *a. d.* omit नः and भवन्तु. 6. *d.* सुश्लिष्टशोभनं. 7. *d.* स्वर्काश्च (श्च ?) ये स्वंचनाः; *d.* reads येषामर्चनं by inversion. 8. *d.* शोभनां for शोभना; *a. d.* सुदीप्तयः for दीप्तयः. 12. *a. d.* युयवन for युयवन्; *d.* अपेत्य व्याहृत्यापावयं मित्रश्रयं त्वित्यर्थः; *a. d.* read हि for च after इष्टं. 13. *d.* omits न after नाशनं.

---

1. अहि—*Cf.* Durga on the word अहि in Nir. II. 17.

1. रक्षांसि—*Cf.* Durga on the word रक्षस् in Nir. IV. 18.

1–2. **अस्मत्, अमीवा देवाश्वा इति वा**—are omitted by Durga.

4. विनियोगः—Âśva. S'rau. II. 16.

12. यावयन्तु—cf. 'यु मिश्रणे अवमिश्रणे च' Dhâtup. 2. 23. The root 'यु' means both, 'to join' and 'to separate'. Yâska uses it in the latter sense. Durga, however, misunderstands him and feels the necessity of supplying the *upasarga* अप.

14. 'देवपत्न्यः'—Nigh. V. 6. 31.

वा । पत्नीसंयाजेष्वेता इज्यन्त इत्यतस्तृतीयसवनभक्तित्वादादित्यं भजन्ते । तदुक्तम् । ' अथैतान्यादित्यभक्तीन्यसौ लोकस्तृतीयसवनम् ' इति ॥ ४४ ॥

**" देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये ।**
**याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत ॥"**

**देवानां पत्न्य उशत्योऽवन्तु नः । प्रावन्तु नोऽपत्यजननाय चान्न-संसननाय च । याः पार्थिवासो या अपामपि व्रते कर्मणि ता नो देव्यः सुहवाः शर्म यच्छन्तु शरणम् । तासामेषापरा भवति ॥ ४५ ॥** 5

**देवानां पत्नीः**-इति । प्रतिक्षत्रस्येयमार्षम् । आग्निमारुते पत्नीसंयाजेषु च विनियोगः । या एता देवपत्न्यो नित्यमस्मत्तो हविरुशन्ति कामयन्ते ता अस्मत्तो हवि-रुपभुज्य ततोऽस्मानवन्तु प्रतितर्पयन्तु धनेन । किंच । **प्रावन्तु नस्तुजये** । प्रकर्षेण 10 **अवन्तु** रक्षन्तु **अपत्यजननाय वाजसातये च अन्नसंसननाय** अन्नसंभजनाय **च** । कतमास्ताः । **याः पार्थिवासः** पृथिव्यां भवाः **याः अपामपि व्रते-कर्मणि** वर्षोत्सर्गे व्यापृताः सर्वाः **सुहवाः**-स्वाह्वानाः अस्माकं **यच्छत-यच्छन्तु** ददतु **शर्म शरणं** गृहं सुखं त्राणं वा इत्येतदाशास्महे ।

---

1. *a. d.* पत्नीसंयाजेष्ये( *d.* ष्ये )ता तृतीयसवन॰ 2. *a.* concludes section 45, here instead of §44. 5. C. D. R. प्रावन्तु नस्तुजयेपत्यजननाय, Bi. mss. च and others—॰तुजयेऽपत्य॰, Bi. J. प्रावन्तु नोऽपत्यजननाय. 6. C. D. R. and Bi. ms. च read या अपामपि व्रते कर्मणि, Bi. J. या अपामपि कर्मणि व्रते. 7. Bi. J. conclude XII. iv. 11, with ॰अपरा भवति. 8. *a.* marks verse 43, after इति. 11. *a. d.* omit अन्नसंसननाय. 12-13. *a.* appears to read कर्माणि ह वर्षोत्सर्गव्यापृताः. 13. *a. d.* add ताः before सर्वाः; *a. d. m.* omit यच्छत; *a.* probably, and *d.* omit शर्म.

---

1-2. तदुक्तम्—See Nir. VII. 11.

3-4. RS. V. 46. 7; AV. 7. 49. 1.

5-6. Durga omits **देवानां पत्न्य उशत्यः, नः** ( in अवन्तु नः ), and **ता नो देव्यः**.

5-6. अन्नसंसननाय—cf. ' षण संभक्तौ ' Dhâtup. 1. 465.

8. आग्निमारुते—Âs'va. Śrau. 5. 20. पत्नीसंयाजेषु—Âs'va. S'rau. 1. 20.

**तासाम् एषा अपरा भवति** । सा पुनः किमर्थम् । सामान्यतः पूर्वस्यामुक्ताः । विशेषतः परस्यामुच्यन्ते । पूर्वयैव समानार्षविनियोगा ॥ ४५ ॥

" उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्य १ग्नाय्यश्विनी राट् ।
आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम् ॥ "

5 **अपि च ग्ना व्यन्तु देवपत्न्यः । इन्द्राणीन्द्रस्य पत्न्यग्नाय्यग्नेः पत्न्यश्विन्यश्विनोः पत्नी । राड् राजतेः । रोदसी रुद्रस्य पत्नी । वरुणानी च वरुणस्य पत्नी । व्यन्तु देव्यः कामयन्ताम् । य ऋतुः कालो जायानां, य ऋतुः कालो जायानाम् ॥ ४६ ॥**

**इति द्वादशोऽध्यायः ।**

10 **उत ग्ना व्यन्तु देवपत्नीः**–इति । पुरुषैः पीतमग्न्यादिभिः **उत–अपि ग्नाः**– स्त्रियः **व्यन्तु**–पिबन्तु एतदाज्यम् । कतमाः । **इन्द्राण्य १ग्नाय्यश्विनी राट् । आशृणोतु** च **रोदसी** । **वरुणानी** च । आभिमुख्येन च स्थित्वा शृणोतु । **रोदसी**

1. *a.* concludes after भवति, section 47. 2. *a. d.* read समानार्षविनियोगः for °विनियोगा and mark verse 44, after it and join with the next para. 5. Bi. mss. क, ख, ग do not read च after अपि. 7–8. Bi. mss. च and others and R. read य ऋतुः कालो जायानाम्, once only. 8. Bi. J. conclude XII. iv. 12, with जायानाम्. Here ends the *fourth pâda* of the twelfth adhyâya. Bi. J. read as °कालो जायानाम् ॥ १२ ( ४६ ) ॥ **इति द्वादशाध्यायस्य चतुर्थः पादः ॥ १२, ४ ॥**; C. D. conclude as ॥ ४६ ॥ and then C. reads इति द्वादशोध्यायः । दामोदरेण लिखितं and then gives the chain; D. reads the chain first and then concludes the adhyâya as इति नैरुक्ते उत्तरषट्के षष्ठोऽध्यायः. 10. *a. d. m.* omit उत. 12. *a. d.* omit च before रोदसी, and वरुणानी च.

3–4. RS. V. 46. 8; AV. 7. 49. 2; MS. 4. 13. 10: 213. 10–11; TB. 3. 5. 12. 1.

5. Bi. mss. क, ख, ग and Durga omit **च** ( after अपि ).

5–8. Durga omits **च, देवपत्न्य इन्द्राणीन्द्रस्य पत्न्यग्नाय्यग्नेः पत्न्यश्विन्यश्विनोः पत्नी, राट् राजतेः** and **देव्यः कामयन्ताम्.**

**रुद्रस्य पत्नी** । आथर्वणे रोदसीत्यप्रगृह्यं पदम् । तदपेक्ष्यैकवचनेन भाष्यकारो निराह **रोदसी रुद्रस्य पत्नी** इति । **वरुणानी च वरुणस्य पत्नी** । सर्वाः अप्येताः **व्यन्तु**–पिबन्तु एतदाज्यम् । **य ऋतुर्जनीनाम्** । **यः कालः** भोजनकालः **जायानाम्** । तस्मिन् काले दीयमानम् । कश्चासौ । भुक्तवत्सु पुरुषेष्विति ॥ ४६ ॥

जम्बूमार्गाश्रमवासिनो भगवद्दुर्गाचार्यस्य कृतौ

ऋज्वर्थायां निरुक्तवृत्तौ

द्वादशोऽध्यायः समाप्तः ॥ १२ ॥

**( [१] अथातो द्युस्थाना [२] वसातिषु स्मेहेह [३] जाता [४] प्रातर्युजा [५] प्रातर्यजध्व-[६] मुषस्तच्चित्रमेता [७] उ त्याः [८] सुकिंशुकं [९] वृषाकपाय्यपागूहं [१०] स्त्वष्टा [११] दुहित्रे [१२] सविता [१३] विश्वा [१४] रूपाणि प्रातर्जितमुदु [१५] त्यं [१६] चित्रं [१७] शुक्रं [१८] ते पथस्पथ [१९] इदं [२०] विष्णुर्विश्वानरो [२१] विश्वानरस्य [२२——२५] येना पावकेति चतुष्कं [२६] केश्यऽग्निं [२७] त्रयः**

1, *a. d.* अथर्वणे. 2. *d.* omits इति. 3. *a. d. m.* omit कालः. 4. Bi. J. conclude as °ष्विति ॥ १२ (४६) ॥, *a.* concludes section 48, as ॥ ४८ ॥ इति सप्तदशाध्यायस्य चतुर्थः पादः ॥, *d.* सप्तदशस्याध्यायस्य चतुर्थः पादः. 5. *a.* जंबूमार्गाश्रमवासिनो भगवद्दुर्गाचार्यस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ सप्तदशोऽध्यायः समाप्तः । इयं निरुक्तभाष्यवृत्तिः । स्वस्ति सं० १९१८ ना शाके १७८३ प्रबल (?) भाद्रपदकृष्णसप्तमी गुरुवारे श्रीराजदुर्गमध्ये लिखितमिदं ॥ खंड ४८ म द (?) मंत्र ४४. पत्र २२. सं० ५७५ एकंदरम् ४४४. *d.* reads like *a.* up to समाप्तः and then reads:—शुभं भवतु । कल्याणमस्तु । परहस्त परभृष्ट° ॥ ॥ संवत् १८०२ वर्षे मावबद. ११ रवौ लखीतं । यद्दशं पुस्तिकं दृष्ट्वा ताद्दशं लखितं मया । यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ १ ॥ श्री ॥ ४६४. The size of this manuscript is about $3\frac{1}{2}$ inches by 9 inches; *bi. j.* सप्तदशोऽध्यायः (द्वादशोऽध्यायः) समाप्तः । इति ऋज्वर्थायां निरुक्तवृत्तौ सप्तदशाध्यायस्य (द्वादशाध्यायस्य) तुरीयः पादः ॥ १२।४ ॥ जम्बूमार्गा.° 8. D. वसातिषु स्म च रथो स्मेहेह. 10. C. उदुत्यं शुक्रन्ते. 11. C. D. विश्वानरो व्याख्यातो विश्वानस्य वस्पति येना etc.

3. व्यन्तु—*cf.* ‘ वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु ’ Dhâtup. 2. 38.

केशिनः [२८] पुनरेहि [२९] यस्मिन् वृक्षे [३०] पावीरवी [३१] यदिन्द्राग्नी [३२] पवित्रवन्त [३३] उत नोऽ[३४]हिर्या[३५]मथर्वाथातो द्युस्थाना देवगणा [३६] इमा गिरः [३७] सप्त [३८] ऋषयस्ति-र्यग्बिलो [३९] देवानां [४०] भद्राश्मासो [४१] यज्ञेन [४२] सुगा वो [४३] ज्मया अत्र [४४] शं नो भवन्तु [४५] देवानां पत्नीरुत [४६] ग्ना व्यन्त्विति षट्चत्वारिंशत् ॥ )

5 इति निरुक्ते ( उत्तरषट्के षष्ठोऽध्यायः ) द्वादशोध्यायः ॥ १२ ॥

दैवतं काण्डं समाप्तम् ।

इति नैरुक्तोत्तरार्धः समाप्तः ।

---

1–2. C. D. उत नोहिर्धमथर्वा. 3. C. D. सुगा वो देवा. 4. C. D. omit इति and read as व्यन्तु षट्चत्वारिंशत्. 5. Bi. ms. ज reads इति नैरुक्ते उत्तरषट्के षष्ठोऽध्यायः. 6. Some mss. read निघण्टुव्याख्यानमिहैव समाप्तम्. 7. The mss. क, ख of Bi. read इति नैरुक्तोत्तरार्द्धः समाप्तः.

# अथ त्रयोदशोऽध्यायः ।

अथेमा अतिस्तुतय इत्याचक्षते । अपि वा संप्रत्यय एव स्यान्माहाभाग्याद्देवतायाः । सोऽग्निमेव प्रथममाह ।

"त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः"

इति यथैतस्मिन् सूक्ते ।

"न हि त्वदारे निमिषश्चनेशे"

इति वरुणस्य । अथैपेन्द्रस्य ॥ १ ॥

**अथेमा अतिस्तुतय इत्याचक्षते**–इत्येवमादि वक्तुं प्रकृतशेषमनुवर्तते । किं चात्र प्रकृतम् । स्तुतिलक्ष्या देवतेति । 'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् 10

---

2. J. अथ त्रयोदशाध्यायस्य प्रथमः पादः. 3. C. °चक्षतेपि वा. 3-4. Bi. J. माहाभाग्या°, R. महाभाग्या.° 4. C. सोग्निमेव, Bi. J. सोऽग्निमेव. 5-6. C. Bi. J. °क्षणिरिति. 6. Bi. C. यथैतस्मिन्सूक्ते. 8. Bi. J. conclude XIII. 1. 1. after अथैषेन्द्रस्य. 9. *m.* अनुवर्ण्यते, *bi. g.* अनुवर्तते. 10. *m.* °मिछंस्तु°.

---

2. अथ त्रयोदशोध्यायः—That the thirteenth adhyâya of the Nirukta-Pariśista was regarded as an integral part of the Nirukta, by the time when Sâyaṇa wrote the introduction to his commentary on the Ṛgveda, is clear from the following quotation from it:—

तद्व्याख्यानं च समाम्नायः समाम्नात इत्यारभ्य तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवतीत्यन्तैर्द्वादशभिरध्यायैर्यास्को निर्ममे । तदपि निरुक्तमित्युच्यते । See F. Max Muller: Ṛigveda Saṁhitâ, second edition, page 21, lines 10-11.

5. त्वमग्ने etc. RS. II. 1. 1; Nir. VI. 1.

7. न हि त्वदारे etc. RS. II. 28. 6.

10. यत्काम°—See Nir. VII. 1.

स्तुतिं प्रयुङ्क्ते' इत्यत्र ताः स्तुतयः कर्माधिकारनिरताः । स्वकर्माधिकारातिक्रमेण स्वगुणातिशयेन च याः ता उपप्रदर्श्याः । तदर्थं विशेषतः पुनरधिकारवचनम् **अथ** इति । **इमाः** या वक्ष्यमाणास्ताः **अतिस्तुतयः इत्याचक्षते** । अन्येऽप्याचार्या एवमेवैता **आचक्षते**–कथयन्ति शिष्येभ्यः अतिस्तुतय एता इति । प्रसिद्धा हीयमेतासु 5 संज्ञेत्यभिप्रायः । **अपि वा** अथवा । नैवैतदतिस्तवनम् । किं तर्हि । **संप्रत्यय एव स्यात्** । देवतासमानमेव । किं कारणम् । न ह्यतिशयो नाम देवतायाः स्तुतेरस्ति । कस्मात् । **माहाभाग्याद् देवतायाः** इति । न हि विभूतेरियत्तास्ति यामतिरिच्य स्तूयेत । तदुक्तम् 'ऋचीषमः' इति । तथा च 'नार्वागिन्द्रं प्रतिमानानि देभुः' इति ।

नैरुक्तसमयानुवृत्तये अतिस्तुतयः प्रदर्श्यन्ते । **सः** इति स्तोता असावाचार्यः 10 **अग्निमेव** अधिकृत्य **प्रथममाह** । किं कारणम् । येनैव हि क्रमेण स्तुतयः उपप्रदर्शिताः तेनैवात्र क्रमेणातिस्तुतयो न्याय्याः प्रदर्शयितुम् । न ह्यसति कारणे मुख्यातिक्रमो न्याय्य इति । क्व । यथा "**त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः**" **इति यथैतस्मिन् सूक्ते** स्वकर्माधिकारव्यतिरेकेण अतिशयेन वा स्तुतिः ।

मध्यस्थाने **न हि त्वदारे निमिषश्चनेशे इति वरुणस्य** ।

15 "अपो सु म्यक्ष वरुण भियसं मत्सम्राडृतावोऽनु मा गृभाय ।

दामेव वत्साद्वि मुमुग्ध्यंहो न हि त्वदारे निमिषश्चनेशे ॥"

इति । हे भगवन् वरुण सम्राट् ऋतवन् यदेतत् अपः–कर्म किंचित् भियसं–भयंकरमस्मासु अंहः–पापं यदात्मनः कायकृतं तदस्मत्तो दामेव वत्सात् विमुमुग्धि त्वं प्रभुं च । ततश्च तत्प्रमुच्य सु म्यक्ष सुष्ठु गमय नाशयेत्यर्थः । कस्मात्पुनरेवं ब्रूमहे । इतः यस्मात् 20 न हि त्वदारे निमिषश्चनेशे । त्वदन्तिकेऽपि वर्तमानस्य दूरेऽपि च यः कश्चित्तस्यापि त्वदन्यो नेशे । त्वमेव दूरे चान्तिके च ईशिषे इत्यभिप्रायः ।

**अथ एषा इन्द्रस्य ॥ १ ॥**

1. *m.* कर्माधिकारनियरताः. 3–4. *m.* omits from अतिस्तुतयः इत्याचक्षते to शिष्येभ्यः (inclusive). 5. *a. m.* omit अपि वा. 6. Bi. J. स्तुतिरस्ति. 22. Some mss. of the *ṭīkā* read as °न्द्रस्य । इति निरुक्तटीकायामुत्तरषट्के निघण्टपञ्चाध्यायेन सह अष्टादशाध्याये प्रथमः खण्डः.

8. ऋचीषमः—See Nir. VI. 23. नार्वागिन्द्रं—See Nir. V. 12.
15–16. RS. II. 28. 6.

"यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्युः।
न त्वा वज्रिन् सहस्रं सूर्या अनु न जातमष्ट रोदसी॥"

यदि त इन्द्र शतं दिवः शतं भूमयः प्रतिमानानि स्युर्न त्वा वज्रिन् सहस्रमपि सूर्या न द्यावापृथिव्यावप्यभ्यश्नुवीतामिति। अथैषादित्यस्य॥ २॥

**यद् द्याव इन्द्र ते शतम्**-इति। पुरुहन्मन आर्षम्। बृहती। वैरूपे स्तोत्रियानुरूपे। हे भगवन् इन्द्र **यत्-यदि ते-तव शतं द्यावः-दिवः शतं** च **भूमीः-भूमयः सहस्रं** च **सूर्याः रोदसी उत-अपि** च समः ते **प्रतिमानानि**-उपमानानि **स्युः**-भवेयुः कथंचित् तथापि **त्वा**-त्वां जातमात्रमपि सर्वाणि अपि तानि **नाष्ट नैवाभ्यश्नुवीरन्**। किं तर्हि। त्वमेवैतानि सर्वाणि अभ्यश्नुवीथाः। 10
अतिरिच्य वर्तेथा इत्यर्थः। **अथ एषा आदित्यस्य**॥ २॥

"यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन।
क्व१स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः॥"

---

2. Bi. R. वज्रिन्त्सहस्रं. 3-4. Bi. C. वज्रिन्त्सहस्रम°. 4. Certain mss. of Bi. (ग, छ, झ) and Durga omit अपि after सहस्रम्. 5. Bi. J. conclude XIII. 1. 2, with आदित्यस्य. 7-8. *a. m.* omit यत्, ते, द्यावः, and भूमीः. 8. *a. m.* omit उत; *a.* reads समस्ते for समः ते. 9. *m.* omits उपमानानि; *a. m.* omit स्युः and त्वा.

---

1-2. RS. VIII. 70. 5.

2. जातमष्ट—Yâska in his *bhâṣya* below does not repeat the word जातम्. He does not also give a synonym for it.

3-5. The commentary omits the नs in 'न त्वा' and 'न द्यावापृथिव्यौ'; it also omits वज्रिन्, अपि, and अभ्यश्नुवीताम्.

6-7. स्तोत्रियानुरूपे—Âs'va. Śrau. 7. 10.

12-13. RS. X. 86. 22.

**यदुदञ्चो वृषाकपे गृहमिन्द्राजगमत, क्व स्य पुल्वघो मृगः, क्व स बह्वादी मृगः । मृगो मार्ष्टेर्गतिकर्मणः । कमगमद्देशं जनयोपनः । सर्वस्माद्य इन्द्र उत्तरस्तमेतद्ब्रूम आदित्यम् । अथैषादित्यरश्मीनाम् ॥ ३ ॥**

5 **यदुदञ्चो वृषाकपे**–इति । पङ्क्तिः । इन्द्राण्या आर्षम् । पृष्ठ्यस्य षष्ठेऽहनि विनियोगः । हे भगवन् **वृषाकपे इन्द्र** यदा त्वम् **उदञ्चः** उदङेव वर्तमानः प्रदक्षिणं भुवनानि परिगच्छन् **गृहम् अजगन्तन** । गृहानुप्रवेशो हि व्यवधीयते । व्यवधीयते च भगवानस्तं गच्छन्नादित्यः इत्येतस्मात् सामान्यादुच्यते **गृहमिन्द्राजगन्तन** इति । तदा त्वयि गृहमुपगते अदृश्यो निरालोको लोकः सहसैव विस्मितो ब्रवीति । **क्व स्य** 10 **पुल्वघो मृगः** । **स्यः** सः । **पुल्वघः** पुरुशब्दात् पूर्वपदं घसेरुत्तरपदम् । **क्व सः बह्वादी मृगः** । बह्वसावत्ति सर्वप्राणिष्ववस्थितः । तदुक्तम् ।

"सूर्य आत्मा जगतस्तस्थुषश्च"

इति । **मृगो मार्ष्टे**र्गत्यर्थस्य । न ह्यसाववतिष्ठते । मार्ष्टर्येव हि मृगः । **कमगन्** कं **देशमगमत्** गतवान् । येनास्माकमदृश्यः स देवो **जनयोपनः**–जनमोहनो 15 बभूव । उदयास्तमयपरिगमनादादित्यस्य जना मुह्यन्ते तत्त्वापरिज्ञानात् । **विश्व-**

---

3. C. उत्तमः for उत्तरः of Bi. J. and Durga. 4. Bi. J. conclude XIII. i. 3, with °रश्मीनाम्. 6. *m.* वृषकपे, *bi. j.* वृषाकपे. 9. *bi. j.* अदृश्ये, *m.* अदृश्यो; *a.* reads निरालोकः for निरालोको लोकः. 10. *a. m.* omit पुल्वघः; *a.* reads पुरुषशब्दात्. 13. *a. m.* omit कमगन्.

---

1. Durga omits **यद्** but reads यदा for that.

1. Durga does not read **अजगमत.** The form cannot be explained grammatically.

2. बह्वादी—This should be बह्वदी according to Classical Sanskrit.

2. मृगो मार्ष्टेर्गतिकर्मणः—*Cf.* Nir. I. 20.

2. Durga reads गत्यर्थस्य for गतिकर्मणः in the bhâsya.

3. Durga reads तमेतं for तमेतद् of the *bhâṣya.*

5. विनियोगः—Âśva. S'rau. 8. 3.

11. सूर्य आत्मा—RS. I. 115. 1.

14. जनयोपनः—cf. 'युप विमोहने' Dhâtup. 4. 129.

**स्मात्–सर्वस्मात्** जगतः **यः** त्वम् **इन्द्र उत्तरः तमेतं** त्वामादित्यम् एवं **ब्रूमः यदुदश्चो वृषाकपे** इति ।

**अथ एषा आदित्यरश्मीनाम्** अतिस्तुतिः ॥ ३ ॥

**" वि हि सोतोरसृक्षत नेन्द्रं देवममंसत ।**

**यत्रामदद् वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः॥ "** 5

**व्यसृक्षत हि प्रसवाय । न चेन्द्रं देवममंसत । यत्रामाद्यद् वृषाकपिरर्य ईश्वरः पुष्टेषु पोषेषु, मत्सखा मम सखा मदनसखा । ये नः सखायस्तैः सहेति वा । सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यम् । अथैषाश्विनोः ॥ ४ ॥**

**वि हि सोतोरसृक्षत**–इति । पूर्वयैव समानार्थविनियोगच्छन्दस्का । **व्यसृक्षत** 10 यदादित्यो रश्मीनहन्यहनि **सोतोः** सर्वभूत**प्रसवाय** अभ्यनुज्ञानाय तत्प्रकाशितलोकस्य सर्वकर्मोपपत्तेः । तदा किम् इति । तदा ते रश्मयः सर्वकर्मण्यनुगमनात् **नेन्द्रं देवममंसत** । तमेवेन्द्रमादित्यं येन विसृष्टाः तमतमात्मनो दीपयितारं न मन्यन्ते । स्वमहिम्नैव वयं दीप्यामह इति मन्यन्ते । कदा । यदा रश्मिपोषं पुष्यति **पुष्टेषु** एकीभूतेषु मध्यंदिने **मत्सखा मम सखा** इति मन्त्रदृगाह । अथवा । सर्व एव मन्यते 15 **ममायं सखा ममायं सखा** इति । अथवा । **मदनसखा** । हर्षसखेत्यर्थः । अथवा । **ये नः सखायः** रश्मयः **तैः सहेति** । **विश्वस्मात्** इति उक्तार्थः ॥

**अथैषा** वाचः प्रवल्हिता इव ॥ ४ ॥

---

9. Bi. J. conclude XIII. i. 4, with °अश्विनोः. 10. *a. m.* add व्यसृजत after व्यसृक्षत. 14. *m.* reads कदा यदा अमदद्वृषाकपिः अर्यः स्वामी रश्मिपोषं पुष्यति, *bi. j.* as text. 18. *a.* writes the figure ॥ ६ ॥ for ॥ ४ ॥, here.

---

4. नेन्द्रं देवममंसत—Quoted in Nir. I. 4.

4–5. RS. X. 86. 1.

6. प्रसवाय—cf. ' षु प्रसवैश्वर्ययोः ' Dhâtup. 2. 31.

6–9. Durga omits **हि, च, यत्रामाद्यद् वृषाकपिरर्य ईश्वरः, पोषेषु,** and **वा** ( after सहेति ).

9. For अथैषाश्विनोः, Durga reads अथैषा वाचः प्रवल्हिता इव, and these very words occur at the end of the eighth Khaṇḍa.

"सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका।
उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु॥"

सृण्येवेति। द्विविधा सृणिर्भवति। भर्ता च हन्ता च। तथाश्विनौ चापि भर्तारौ। जर्भरी भर्तारावित्यर्थः। तुर्फरीतू हन्तारौ। नैतोशेव 5 तुर्फरी पर्फरीका। नितोशस्यापत्यं नैतोशम्। नैतोशेव तुर्फरी क्षिप्रहन्तारौ। उदन्यजेव जेमना मदेरू। उदन्यजेवेत्युदकजे इव रत्ने। सामुद्रे चान्द्रमसीति वा। जेमने जयमने। जेमना मदेरू। ता मे जराय्वजरं मरायु। एतज्जरायुजं शरीरं शरदमजीर्णम्। अथैषा सोमस्य॥ ५॥

"तरत्स मन्दी धावति धारा सुतस्यान्धसः।
10 तरत्स मन्दी धावति॥"

तरति स पापं सर्वं मन्दी यः स्तौति। धावति गच्छत्यूर्ध्वां गतिम्। धारा सुतस्यान्धसः। धारयाभिषुतस्य सोमस्य मन्त्रपूतस्य वाचा स्तुतस्य। अथैषा यज्ञस्य॥ ६॥

"चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
15 त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश॥"

7. Bi. mss. च, छ, ज and C. D. R. read चान्द्रमसे वा for चान्द्रमसीति वा of Bi. J. 8. Bi. J. conclude XIII. i. 5, with सोमस्य. 13. Bi. J. conclude XIII. i. 6, with यज्ञस्य.

1. Sections 5, 6, 7 and 8 are omitted by the commentary attributed to Durga.

1-2. RS. X. 106. 6.

9-10. RS. IX. 58. 1.

9. मन्दी—Cf. 'मदि स्तुतौ' Dhatup. 1. 13.

14-15. RS. IV. 58. 3. This Rik is quoted by Patañjali in the introduction to his '*Mahābhāṣya*' and is interpreted there as referring to the terms of grammar.

चत्वारि शृङ्गेति वेदा वा एत उक्ताः। त्रयोऽस्य पादा इति सवनानि त्रीणि । द्वे शीर्षे प्रायणीयोदयनीये । सप्त हस्तासः सप्त छन्दांसि । त्रिधा बद्धस्त्रेधा बद्धो मन्त्रब्राह्मणकल्पैर्वृषभो रोरवीति । रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिर्यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति । महो देव इत्येष हि महान् देवो यद्यज्ञो मर्त्याँ आविवेशेति । एष हि मनुष्यानाविशति यजनाय । तस्योत्तरा भूयसे निर्वचनाय ॥ ७ ॥ 5

स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी ।

यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे ॥

स्वर्गच्छन्त ईजाना वा नेक्षन्ते । तेऽमुमेव लोकं गतवन्तमीक्षन्त- 10 मिति । आ द्यां रोहन्ति रोदसी । यज्ञं ये विश्वतोधारं सर्वतोधारं सुविद्वांसो वितेनिर इति । अथैषा वाचः प्रवल्हितेव ॥ ८ ॥

" चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।

गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥ "

चत्वारि वाचः परिमितानि पदानि । तानि विदुर्ब्राह्मणा ये मेधाविनः। 15

1. C. D. त्रयोऽस्य, Bi. J. त्रयो अस्य. 7. Bi. J. conclude XIII. i. 7, with निर्वचनाय. 9, 12. Bi. ms. च reads सुविद्वाँसो. 10. C. D. read गतवंतमीक्षंतमिति, but C. also marks a variant marginally as गतवंत इच्छंत इतिः Bi. mss. ख, ग have गतवन्त ईक्षन्त इति. 12. Bi. J. conclude XIII. i. 8, with प्रवल्हितेव.

1. चत्वारि शृङ्गेति वेदा वा—Cf. Gopatha Brāhmaṇa I. 2. 16.
8-9. MS. 2. 10. 6; KS. 18. 4; VS. 17. 68; AV. 4. 14 4.
13-14; RS. I. 164. 45.

गुहायां त्रीणि निहितानि नार्थं वेदयन्ते । गुहा गूहतेस्तुरीयं त्वरतेः ।
कतमानि तानि चत्वारि पदानि । ओंकारो महाव्याहृतयश्चेत्यार्षम् ।
नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः । मन्त्रः कल्पो ब्राह्मणं
चतुर्थी व्यावहारिकीति याज्ञिकाः । ऋचो यजूंषि सामानि चतुर्थी
5 व्यावहारिकीति नैरुक्ताः । सर्पाणां वाग्वयसां क्षुद्रस्य सरीसृपस्य
चतुर्थी व्यावहारिकीत्येके । पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्म-
प्रवादाः । अथापि ब्राह्मणं भवति ।

" सा वै वाक् सृष्टा चतुर्धा व्यभवत् । एष्वेव लोकेषु त्रीणि, पशुषु
तुरीयम् । या पृथिव्यां साग्नौ सा रथन्तरे । यान्तरिक्षे सा वायौ सा
10 वामदेव्ये । या दिवि सादित्ये सा बृहति सा स्तनयित्नौ । अथ पशुषु ।
ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुः । तस्माद् ब्राह्मणा उभयीं
वाचं वदन्ति या च देवानां या च मनुष्याणाम् । "

इति । अथैषाक्षरस्य ॥ ९ ॥

**चत्वारि वाक्परिमिता पदानि**-इति । दीर्घतमस आर्षम् । वाग्देवते पशौ
15 विनियोगः । प्रवल्हितेत्यनभिव्यक्तिविशिष्टो वाक्यार्थः । **चत्वारि वाक्परिमिता**–
**वाचः परिमितानि पदानि** । न पञ्चमं पदमस्ति । **तानि** पुनः **ब्राह्मणा**
**विदुः** । किं सर्वे । न । **ये मनीषिणः–मेधाविनः** । तेषां च पुनः पदानां

1. C. adds पदानि after निहितानि, D. as text. 4. Bi. ms. च reads यर्जूषि. 6. Bi. mss. ख, ग, झ and the commentary ( see next page, line 12 ) read तूणवे for तूणवेषु. 9. D. साग्नौ रथन्तरे, Bi. J. C. साग्नौ सा रथन्तरे. 10. C. सा बृहस्पति, D. Bi. J. सा बृहति. 11. C. वागत्यरिच्यतस्तां, D. Bi. J. वागत्यरिच्यत तां; Bi. mss. ख, ग, झ—ब्राह्मणे न्यदधुस्तस्माद्. 11-12. C. उभयंतां वाचं for उभयी वाचं of Bi. J. D. 13. Bi. J. conclude XIII. i. 9, with अक्षरस्य. 14. *m*. वाङ्देवतौ पशौ. 15. *a*. *m*. omit वाक्परिमिता. 17. *a*. *m*. add ये before मेधाविनः.

1-2. The commentary omits **गुहा गूहतेः**, and **ओंकारो महाव्याहृत-यश्चेत्यार्षम्**.

6. इत्येके—cf. S'B. 4. 1. 3. 15-16.

7-12. ब्राह्मणं भवति—*cf.* MS. 1. 11. 5.

15. विनियोगः—Âs'va. Srau. Sû. 3. 8.

**गुहा**-गुहायां **त्रीणि निहिता**-निहितानि **नेङ्गयन्ति** नार्थं वेदयन्ते न प्रख्यापयन्ति । **तुरीयं** चतुर्थं भागम् एकं पदं **मनुष्याः** परिज्ञानार्थं **वदन्ति** । **तुरीयं त्वरतेः** । ताद्धि त्वरितमिव निर्गतं भवति त्रिभ्यः ।

**कतमानि तानि चत्वारि पदानि** इति विचार्यः प्रश्नः । तत्र तावन् **नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः** मन्यन्ते । तत्राप्रसिद्धार्थ- 5 त्वादाख्यातोपसर्गनिपातपदानि अर्थं न वेदयन्ते । नामानि तु प्रसिद्धतरार्थत्वाद् गवाश्वादीन् वेदयन्त्यर्थान् । एवम् । **मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिकाः** । अत्रापि व्यावहारिक्येव तु वेदयत्यर्थम् । **ऋचो यजूंपि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः** । अत्रापि व्यावहारिक्येव वेदयते । **सर्पाणां वाक्, वयसाम्, क्षुद्रस्य सरीसृपस्य, चतुर्थी व्यावहारि-** 10 **कीत्येके** । सर्पादीनामित्यधिभूतविदः । अत्रापि व्यावहारिक्येव वेदयते नेतराः । **पशुषु तूणवे मृगेष्वात्मनि चेत्यात्मप्रवादाः** । आत्मानं ये प्रवदन्ति आचार्यास्ते आत्मप्रवादाः । **ब्राह्मणमपि च भवति** एतस्मिन्नर्थे **सा वै वाक् सृष्टा चतुर्धा व्यभवत्** इत्येवमादि । तदेतदभिव्यक्तार्थमेव । **ततो या वागत्यरिच्यत तां ब्राह्मणे न्यदधुः** निहितवन्तः । **तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति** 15 **या च देवानां या च मनुष्याणाम्** । लौकिकी वैदिकी चेत्यर्थः ।

**अथ पुनः एषा अक्षरस्य** अक्षरस्तुतिः प्रतिल्हितेव ॥ ९ ॥

“ ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥ ”

**ऋचो अक्षरे परमे व्यवने यस्मिन्देवा अधिनिषण्णाः सर्वे । यस्तन्न** 20 **वेद किं स ऋचा करिष्यति । य इत्तद्विदुस्त इमे समासत इति विदुष**

1. *a. m.* omit गुहा; *a. m.* omit निहिता. 2. *a. m.* read एकं पदं for एकपदं of *bi. j.* 4. *a. m.* read विचारार्थः for विचार्यः. 11. *a.* reads नेतरा, *bi. j.* नेतराः. 12. *a. m.* read पशुषु तूणवेषु मृगे॰ etc., *bi. j.* पशुषु तूणवे मृगे॰. 17. *m.* अथ पुनरेषाऽक्षरस्यातिस्तुतिः प्रवल्हितेव, *a.* reads अतिस्तुतिः प्रवल्हितेव for अक्षरस्तुतिः प्रतिल्हितेव of *bi. j.* 20-21. C. यस्तं न वेद.

18-19. RS. I. 164. 39.

**उपदिशाति । कतमत्तदेतदक्षरम् । ओमित्येषा वागिति शाकपूणिः । ऋचश्च ह्यक्षरे परमे व्यवने धीयन्ते नानादेवतेषु च मन्त्रेषु ।**

**"एतद्ध वा एतदक्षरं यत्सर्वां त्रयीं विद्यां प्रति प्रति ।"**

**इति च ब्राह्मणम् ॥ १० ॥**

5 **ऋचो अक्षरे परमे**–इति । दीर्घतमस आर्षम् । अस्या निर्वचनत्रयम् अधियज्ञाधिदैवाध्यात्मविकल्पेन ॐकार आदित्य आत्मा चेति । तत्र तावच्छाकपूणिपक्षमाश्रित्याधियज्ञगतमुच्यते ।

**कतमत् तदक्षरम्** । "ॐ" **इत्येषा वाक् इति** शाकपूणेः अभिप्रायः । ॐकारमृते न ह्यचर्यन्ति । तस्याः **अक्षरे परमे व्योमन्** व्योम । विविधमस्मिन् 10 शब्दजातमोतमिति व्योम । तस्मिन् तिसृषु मात्रासु अकारोकारमकारलक्षणासूपशान्तासु यदवशिष्यते तदक्षरं परमं व्योम । शब्दसामान्यमभिव्यक्तमित्यभिप्रायः । **यस्मिन् देवा अधिनिषण्णाः सर्वे** । ऋगादिषु ये देवाः ते मन्त्रद्वारेणाक्षरे निषण्णाः तस्य शब्दकारणत्वात् । अथवा प्रथमायां मात्रायां पृथिवी अग्निः ऋग्वेदः पृथिवीलोकनिवासिन इत्येव । द्वितीयायां मात्रायाम् अन्तरिक्षम् वायुः यजूंषि तल्लोकनिवासिनो जना इति । 15 तृतीयायां मात्रायां द्यौः आदित्यः सामानि तल्लोकनिवासिनो जना इति । विज्ञायते हि "ॐकार एवेदं सर्वम्" इति । **यस्तन्न वेद** अनया विभूत्याक्षरं **किम्** असौ **ऋचा** ऋगादिभिर्मन्त्रैः **करिष्यति** यस्तान्यक्षरात्मना न पश्यति । **य इत्तद्विदुस्त इमे समासते इति विदुष उपदिशाति** । ते हि तत्परिज्ञानात्ताद्भाव्यमुपगताः प्रणवविग्रहमात्मानमनुप्रविश्य समीकृता निर्वान्ति शान्तार्चिष इवानलाः इति ॥ १० ॥

2. C. °देवतेषु मन्त्रेषु. 4. Bi. J. conclude XIII. i. 10, with ब्राह्मणम्. 8. *a. m.* कतमत्तदेतदक्षरं; *m.* ओमित्येषा. 9. *a. m.* तस्या अक्षरं परमं व्योम for तस्याः अक्षरे परमे व्योमन् व्योम of *bi. j.* 9–11. *m.* omits from विविधमस्मिन् ......to परमं व्योम ( inclusive ). 11. *a. m.* add अपरमाकाशमपेक्ष्य तत्परं व्योम before शब्दसामान्य°; *a.* reads तस्मिन् for यस्मिन्. 13. *a. m.* read तद्यथा for अथवा. 17. *a. m.* omit ऋचा; *a. m.* read यस्तान्यक्षरात्मना न पश्यति, *bi. j.* यस्तन्नाक्षरात्मना पश्यति. 19. *a. m.* omit इति, after इवानिलाः.

3. ब्राह्मणम्—Kauṣī. Br. 6. 12.

15. विज्ञायते हि—The quotation following is not traced.

आदित्य इति पुत्रः शाकपूणेः । एषग्भवति यदेनमर्चन्ति । प्रत्यृचः सर्वाणि भूतानि । तस्य यदन्यन्मन्त्रेभ्यस्तदक्षरं भवति । रश्मयोऽत्र देवा उच्यन्ते य एतस्मिन्नधिनिषण्णा इत्यधिदैवतम् । अथाध्यात्मम् । शरीरमत्र ऋगुच्यते यदेनेनार्चन्ति । प्रत्यृचः सर्वाणीन्द्रियाणि । तस्य यदविनाशिधर्म तदक्षरं भवति । इन्द्रियाण्यत्र देवा उच्यन्ते यान्य- 5
स्मिन्नधिनिषण्णानीत्यात्मप्रवादाः ॥ ११ ॥

**आदित्य इति पुत्रः शाकपूणेः । एष ऋग्भवति** इति मण्डलमभिप्रेतम् । **यदेनमर्चन्ति ।** यस्मादेनमर्चन्ति तस्मादृक् । **तस्य यदन्यत् मन्त्रेभ्यः** मण्डलगतेभ्योऽवयवेभ्यः **तत्** परमम् **अक्षरं** व्यवनं तत्र सर्वमोतमिति ।

" य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते " 10

इति श्रुतेः । **रश्मयोऽत्र देवा उच्यन्ते य एतस्मिन्नधिनिषण्णा इति ।** यस्तन्मण्डलमक्षरात्मना न वेद किं स ऋचा—आदित्येन मण्डलात्मना करिष्यति । नासौ यथावदादित्यं वेदेत्यर्थः । ' य इत्तद्विदुस्त इमे समासते ' इति व्याख्यातम् ।

1. Bi. mss. ख, ग, झ read शाकपूणिरेषर्ग् भवति. 2. Bi. mss. ख, ग, झ and Bi. mss. च, छ, ज read यदन्यन्मात्रेभ्यस्तदक्षरं, Bi. J. यदन्यन्मन्त्रेभ्य°. 5–6. C. D. R. यान्यस्मिन्नात्मन्येकं भवंतीत्यात्मप्रवादाः for यान्यस्मिन्नधिनि° of Bi. J. 6. Bi. J. conclude XIII. i. 11, with °प्रवादाः. 8. *a. m.* omit मंत्रेभ्यः. 9. *bi. j.* परम् अक्षरं, *m.* परममक्षरं. 10. *a. m.* omit from य एष...... to दृश्यते इति श्रुतेः ( inclusive ). 11. *a. m.* read °षण्णा भवंति for °षण्णा इति.

1. एषग्भवति—This is a wrong reading. What Yâska wants to say is एषः ऋग् भवति and not एषा ऋग् भवति; this is clear from the reading of Durga, which is एष ऋग्भवति. See the *vṛtti* below.

1–2. प्रत्यृचः सर्वाणि भूतानि is omitted by Durga.

3. Durga reads आत्मेत्यात्मप्रवादाः for अथाध्यात्मम्.

2–6. Durga omits **भवति** ( after अक्षरं ), **अधिदैवतम्, अथाध्यात्मं शरीरमत्र ऋगुच्यते यदेनेनार्चन्ति प्रत्यृचः सर्वाणीन्द्रियाणि, यान्यस्मिन्नधिनिषण्णानि.** In fact Durga's *Niruktapâṭha* in sections 10 and 11 differs very much from the *bhâṣya*, above.

10. य एषोऽन्तरा°—Tait. Âr. X. 13.

13. इति व्याख्यातम्—See Nir. XIII. 10, last page.

आत्मेत्यात्मप्रवादाः । अयमृग्भवति शरीरमिति । **इन्द्रियाण्यत्र देवा उच्यन्ते** । तानि हि विषयेषु द्योतयन्त इति देवाः । **तस्य यदविनाशिधर्म** चेतनासतत्वमात्रविज्ञानं **तत् परमम् अक्षरं** व्यवनम् । यत्तदक्षरं न वेद किमसौ ऋचा शरीरेण करिष्यति । न तस्य जीवितेनार्थः । **य इत्तद्विदुः** इति व्याख्यातम् ॥ ११ ॥

5 **अक्षरं न क्षरति, न क्षीयते वाक्षयो भवति । वाचोऽक्ष इति वा । अक्षो यानस्याञ्जनात् । तत्प्रकृतीतरद्वर्तनसामान्यात् । इत्ययं मन्त्रार्थचिन्ताभ्यूहोऽभ्यूल्हः । अपि श्रुतितोऽपि तर्कतः । न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः । प्रकरणश एव तु निर्वक्तव्याः । न ह्येषु प्रत्यक्षमस्त्यनृषेरतपसो वा । पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो 10 भवतीत्युक्तं पुरस्तात् । मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् । को न ऋषिर्भविष्यतीति । तेभ्य एतं तर्कमृषिं प्रायच्छन् मन्त्रार्थचिन्ताभ्यूहमभ्यूल्हम् । तस्माद्यदेव किंचानूचानोऽभ्यूहत्यार्षं तद्भवति ॥ १२ ॥**

**अक्षरं** कस्मात् । तद्धि **न क्षरति** । नान्यथाभावमापद्यते । अथवा । **न क्षीयते** । न कदाचिदप्यामूलतो विनश्यति । अथवा । **वाक्क्षयो भवति** । नादो हि वर्णलक्ष15 णाया वाचो निवासः । **वाचोऽक्षः इति वा** । अक्षरो ह्यक्ष इवानुप्रविश्य व्यञ्जनानि धारयति ।

अथ **अक्षः** कस्मात् । उच्यते । **यानस्य** । यानाक्षः तावत् **समञ्जनात्** । नित्यमसौ

---

2. *a. m.* द्योतन्त इति देवाः; *a. m.* तस्य यदविनाशधर्मि, *bi. j.* as above. 5. C. D. R. and Bi. mss. च, छ, ज read वाक्षरं भवति for वाक्क्षयो भवति of Bi. J. 6. Bi. mss. ख, ग, झ—वाक्षोपादानस्या° for वाक्षो यानस्या° of Bi. J. 7. Bi. mss. च, छ, ज and D. R. °भ्यूहोऽभ्यूढोपि, C. °भ्यूहोभ्यूढोपि, Bi. J. भ्यूहोऽभ्यूल्होऽपि. 11-12. C. D. R. and Bi. mss. च, छ, ज—°भ्यूहमभ्यूढं तस्माद्यदेव किञ्चानूचानो, Bi. J. °भ्यूहमभ्यूल्हं तस्माद्यदेव किञ्चानूचानो. 12. Bi. J. conclude XIII. i. 12, with भवति. 15. *m.* omits from अक्षरो ह्यक्ष etc. to अथ अक्षः कस्मात् ( inclusive ). 17. *a. m.* omit यानस्य.

---

6. अञ्जनात्—Durga reads समञ्जनात् for अञ्जनात् of the *bhāṣya*.

8. प्रकरणश एव तु निर्वक्तव्याः—Cf. Nir. I. 20; II. 4.

10. पुरस्तात्—See Nir. I. 16.

म्रक्ष्यते तैलादिना। **तत्प्रकृतीतरत्** स्वराख्यमक्षरं **वर्तनसामान्यात्**। स्वरमधिरूढानि व्यञ्जनानि वर्तन्ते। **इति**। परिसमाप्त्यर्थ इतिकरणः। उपप्रदर्शनार्थो वान्तस्य॥

एवमत्र **मन्त्रार्थचिन्ताभ्यूहोऽभ्यूढः**। मन्त्रार्थचिन्तानामभ्यूहो मन्त्रार्थचिन्ताभ्यूहः वितर्कितः शक्यते एतावता मन्त्रार्थोऽभ्यूहितुमिति। पुनः अयम् **अपि श्रुतितः अपि तर्कतः**। श्रुतिभ्यो ब्राह्मणेभ्यो निगमशेषेभ्यश्चोन्नीतार्थाभिधानसामर्थ्येभ्यो वाक्यार्थसामर्थ्यात्। तस्योपरि पर्यायास्तर्कोऽभ्यूहो लक्षणन्याय इति। यद्यप्ययमभ्यूहः तथापि **न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः**। कुतः पृथक्त्वेन। प्रकरणात्। किं तर्हि। **प्रकरणश एव तु निर्वक्तव्याः**। तान्येतानि प्रकरणानि मन्त्राणां याज्ञं दैवतमध्यात्ममितिहासानुप्रवेश इति। किं कारणम्। **न ह्येषु** मन्त्रेषु **प्रत्यक्षम्** अर्थदर्शनम् **अस्ति**। किं नास्त्येव। न नास्ति। किं तर्हि। **अनृषेः अतपसो वा** इति। तस्येदानीमपि स्याद्य ऋषिस्तपस्वी च। निर्दग्धकल्मषयोस्तयोः प्रतिबन्धकाभावाद् यथावदर्थं मन्त्राणां पश्यतः। येऽन्ये पुनरौपदेशिकाः तानधिकृत्योच्यते। **पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति इत्युक्तं पुरस्तात्** इति। य एतेषु उपदेशतः पारोवर्येण परोवरभावेन मन्त्रार्थान् प्रतिपद्यन्ते ते पारोवर्यविदः। तेषु यः कश्चिद्भूयोविद्यः बहुश्रुतो भवति स एव मन्त्रार्थपरिज्ञाने प्रशस्यो भवति। मन्त्रार्थ एव ह्ययं सर्वविद्यावस्थानभावेन विष्वग्भूतो लोकव्यवहारभावेन च विप्रकीर्णो विजृम्भत इति तमबहुश्रुतो नालमुत्प्रेक्षितुमिति युक्तं यत्तत्परिज्ञानयोगे भूयोविद्यः प्रशस्यत इति। पुरस्तादपि चैतदुक्तम्। इह तु प्रसङ्गादुच्यते।

अतः परमागमविशुद्धये प्रस्तौति। **मनुष्या वा ऋषिषु उत्क्रामत्सु देवानब्रुवन्** इति। पूर्वमपि हि 'साक्षात्कृतधर्माण ऋषयो बभूवुः' इत्युक्तम्। इह तु मन्त्रार्थाभ्युपप्रदर्शनार्थमिति विशिष्यते। **मनुष्या वा ऋषिषूत्क्रामत्सु देवान-**

1. *a. m.* read वर्तमानसामान्यात्. 2. *m.* परिसमाप्त्यर्थ, *bi. j.* परिसमाप्त्यर्थः. 3. *m.* एवमत्र, *bi. j.* एवमर्थ. 5. *a. m.* तर्कितः; *bi. j.* तर्कतः. 6. *m.* तस्यापर पर्यायास्तर्को. 8. *m.* निवक्तव्याः. 9. *a.* नह्येषु, *bi. j.* स ह्येषु. 10. *a.* प्रत्यक्षप्रदर्शनं, *bi. j.* प्रत्यक्षम् अर्थदर्शनम्; *m.* आनृषेरतपसो. 12. *m.* यथावदर्थमंत्राणाम्. 16. *a.* मंत्रार्थ एव ह्ययं सर्वविद्यावस्था°, *bi. j.* मन्त्रार्थ एव स्वयं विद्यावस्थानभावेन. 17. *m.* विजृंभित इति, *bi. j.* विजृम्भत इति; *a. m.* तत्परिज्ञाननियोगे.

1. स्वराख्यमक्षरम् cf. 'स्वरोऽक्षरम्'—*Ṛk-Prātiśākhya*, Paṭala 18. 17.
13. इत्युक्तं पुरस्तात्—See Nir. I. 16.
20. इत्युक्तम्—See Nir. I. 20.

**ब्रुवन् को न ऋषिर्भविष्यति इति ।** एवमादिपुराकल्परूपोऽर्थवादः शास्त्रावतारस्तुतये । **तेभ्यः एतं मन्त्रार्थचिन्ताभ्यूहमभ्यूहं प्रायच्छन्** ते देवाः एतं समस्तार्थमूहमपि भवन्तोऽनेन मन्त्रार्थान् शक्यन्तेऽभ्यूहितुमिति । यस्मादेतदेवं **तस्मात्** अस्मिन् सूक्ते निरुक्तशास्त्रे यः **अनूचानः** विद्वान् **यदेव** किंचिन्मन्त्रार्थेषु
5 **अभ्यूहति आर्षं तत् भवति ।** तथैव तदृषयोऽभ्यूहितवन्त इत्यभिप्रायः । न तत् स्वमनीषिकयोच्यते । मन्त्रार्थोऽप्येतस्मिन् विषये बृहस्पतिना दृष्टो ब्रह्म वा स्वयं प्राह । तद्यथा ॥ १२ ॥

**" हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संयजन्ते सखायः ।**
**अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो वि चरन्त्यु त्वे ॥ "**

10 **हृदा तष्टेषु मनसां प्रजवेषु यद् ब्राह्मणाः संयजन्ते समानख्याना ऋत्विजः । अत्राह त्वं विजहुर्वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिः । ओहब्रह्माण ऊहब्रह्माणः । ऊह एषां ब्रह्मेति वा । सेयं विद्या श्रुतिमतिबुद्धिः । तस्यास्तपसा पारमीप्सितव्यम् । तदिदमायुरिच्छता न निर्वक्तव्यम् । तस्माच्छन्दःसु शेषा उपेक्षितव्याः । अथागमो, यां यां देवतां निराह**
15 **तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति ॥ १३ ॥**

**इति निरुक्ते त्रयोदशोऽध्यायः ॥**

---

3. *a.* reads शक्ष्यते, *bi.* ms. क—लक्ष्यन्ते for शक्यन्ते of *bi. j.* 10. C. D. R. समानाख्याना, Bi. J. समानख्याना. 11. Bi. mss. ग, झ—प्रवृत्तिभिः. 12–13. C. °रोहब्राह्मण ऊहब्राह्मण ऊह एषां etc., D. °रोहब्रह्माण ऊहब्राह्मण ऊह एषां, Bi. J. °रोहब्रह्माण ऊहब्रह्माण ऊह एषां. 15. R. does not repeat अनुभवति. But all the mss. do so to indicate the end of the chapter. Bi. J. conclude XIII. i. 13, with अनुभवति; C. D. conclude as भवति ॥ १३ ॥; then C. reads इति निरुक्ते त्रयोदशोध्यायः; D. अथ परिशिष्ट.

---

8–9. RS. X. 71. 8.

12. Durga omits ऊहब्रह्माणः.

12. वा—The वा after ब्रह्मेति is not required.

14. Durga reads up to उपेक्षितव्याः, and omits **अथागमो यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति ॥**

14. अथागमः—The sentence following this viz. यां यां देवतां etc. cannot be traced to any Brâhmaṇa.

**हृदा तष्टेषु**–इति । **हृदा** हृदयेन बुद्ध्या **तष्टेषु** सूक्ष्मतामापादितेषु अचिन्त्याध्यात्मादिषु विद्वद्भिः **मनसो जवेषु मनसां प्रजवेषु** ये प्रजवाः प्रगमाः न साक्षात्त दृश्यन्ते तेष्वर्थेषु स्वर्गापूर्वदेवतादिषु **ब्राह्मणाः** अधिगतमन्त्रार्थतत्त्वाः विचारयन्तः किमत्र तत्त्वं किं वा अतत्त्वमिति प्रवचनेन ततः **संयजन्ते** परस्परेण संपूजयन्ति । कतमे ते इति । **सखायः समानख्यानाः ऋत्विजः** । ते हि प्रयोगे अभियुक्त- 5 त्वादतितरां विद्वांसः । तेषु किम् इति । **अत्राह । त्वम्** इति । **अत्र**–तत्र तेषु अर्थेषु सूक्ष्मेषु **विजहुः** तत्यजुः **त्वम्**–एकं त्यक्तवन्तः मन्त्रार्थव्याख्याने । कम् । अविद्वांसम् । केन तत्यजुः । **वेद्याभिः वेदितव्याभिः प्रवृत्तिभिः** । न हि तासां मनोवृत्तीनामन्तोऽस्ति यासु प्रतिभानवतामपि मनोवृत्तयो न प्रवर्तन्ते । अतस्ता वेदितव्या एव भवन्त्यविद्वद्भिः । ये पुनः **ओहब्रह्माणः** । इदं निरुक्तशास्त्रम् **ऊहः** 10 **ब्रह्म येषा**मस्ति ते शब्दार्थसंकटेष्वप्रतिबध्यमाना अतिक्रम्य अविद्वांसं **वि**–विशेषतः सर्वत्रैव प्रतिपूज्यमानाः **चरन्ति त्वे**–एके इत्यर्थः ।

एवमेतस्मिन्मन्त्रे अस्या उद्गाहितार्थानेवोद्दिश्य मन्त्रार्थचिन्ताभ्यूहस्य ब्रह्मत्वं श्रूयते । तस्मादिदमपि निरुक्तशास्त्रं ब्रह्मैव । वेद इत्यर्थः ।

इदानीमुपसंहरति **सेयं विद्या** इति । **श्रुतिमती**ति । आद्या इयमेवैका विद्या बुद्धिं 15 वर्षति । ज्यायसी सर्वाभ्यो विद्याभ्यः । महानेष तर्कः । **तस्याः तपसा पारमीप्सितव्यम्** । गन्तुमिति वाक्यशेषः । पदवाक्यप्रमाणविदा ब्राह्मणेन । यस्माद्वेदो विधिनिषेधप्रतिप्रसवनियमपरिसंख्यापुनर्वचनपरार्थवादगहनः अर्थवादाश्च यथाश्रुतप्रमाग्राहिणो विदुषोऽपि परमभ्रान्तिहेतवः तस्मात् परमदुर्विज्ञानवेदनीयत्वात् वेदवाक्यानामिमां विद्यामन्तरेण सम्यगर्थावगमो न भवति । अतोऽस्या अखिलपुरुषार्थोपकारप्रवृत्ताया 20 अन्तरेण तपःपारगमनं नास्तीत्यत इदमुक्तमाचार्येण **तस्यास्तपसा पारमीप्सित-**

---

1. *m.* quotes the whole of the ṛik; *a.* omits इति; *a. m.* omit हृदा. 1–2. *m.* चित्याध्यात्मा°, *bi. j.* अचिन्त्याध्यात्मा°. 2. *a. m.* मनोजवेषु, *bi. j.* मनसो जवेषु; *a. m.* omit प्रजवेषु. 6. *m.* omits इति before अत्र; *a. m.* omit अत्र. 8. *a. m.* omit वेदितव्याभिः. 10–11. *m.* ओह ब्रह्म for ऊह ब्रह्म. 11. *a. m.* omit वि. 13. *a. m.* read उद्गाहितोश्चानेदाद्वेद इति मंत्रार्थचिन्ता°, *bi. j.* उद्गाहितार्थानेवोद्दिश्य मन्त्रा°. 15. *a.* श्रुतिमतीयेयमेवैका विद्या etc., *bi. j.* श्रुतिमतीत्याद्यर्थमेवैका विद्या, *m.* श्रुतिमतीत्याद्येयमेवैका. 18. *a. m.* विधिप्रतिषेधप्रसवनियम°, *bi. j.* विधिनिषेधप्रतिप्रसव°. 18–19. प्रमाणग्राहिणो, *bi. j.* प्रमाग्राहिणो. 19. *a.* परमभ्रान्तिहेतवः, *bi. j.* परमभ्रान्तहेतवः.

**व्यम्** इति । अयमभ्युपायः तस्याः पारगमने । **तदिदम्** अतपस्विना सर्वथापि **आयुरिच्छता** निरुक्तशास्त्रं **न निर्वक्तव्यम्** । अतपस्वी ह्यागमवान् अपि मलिना-न्तःकरणत्वान्न शक्नुयात् । ततोऽस्यायुच्छिद्येत । तपस्विनापि च निर्ब्रुवता **तस्मात् छन्दःसु** शाखान्तरेषु निगमोदाहरणानामाकाङ्क्षित्वनिराकाङ्क्षायै **शेषाः** वाक्यशेषाः 5 पादार्धर्चादिलक्षणाः **उपेक्षितव्याः** ॥ १३ ॥

इति श्रीमज्जम्बूमार्गाश्रमवासिनो भगवद्दुर्गाचार्यस्य कृतौ
ऋज्वर्थायां निरुक्तवृत्तौ
त्रयोदशाध्यायः ( अष्टादशाध्यायः ) समाप्तः ॥ १३ ॥
निरुक्तवृत्तिः समाप्ता ॥

10 **व्याख्यातं दैवतं यज्ञाङ्गं चेत्यादि ॥**

**( अथेमा यद् द्यावो यदुदञ्चो वि हि सोतोः सृण्येव तरत्स चत्वारि-शृङ्गा स्वर्यन्तश्चत्वारि वागृचो अक्षर आदित्य इत्यक्षरं न क्षरति हृदा तष्टेषु त्रयोदश ॥ )**

(The words of this chain are numbered १ to १३ above the line.)

**इति निरुक्ते ( उत्तरषट्के ) त्रयोदशाध्यायः समाप्तः ॥ १३ ॥**

15 ( अतिस्तुति-प्रकरणं समाप्तम् ) ।

**इति नैरुक्ते प्रथमं परिशिष्टं समाप्तम् ॥ १ ॥**

---

3. *m.* ततो ह्यायुश्छिद्येत, *bi. j.* as text. 4. *a. m.* read निराकांक्षितायै and omit शेषाः. 6. *a.* reads the colophon as जम्बूमार्गाश्रमवासिनो भग° ऋज्वर्थायां निरुक्तवृत्तिः समाप्ता संवत् १९४० ज्ये. श्रु ॥ १४ भौमे. Bi. J. उपेक्षितव्याः ॥१३॥ इति ऋज्वर्थायां निरुक्तवृत्तौ अष्टादशाध्यायस्य (त्रयोदशाध्यायस्य) प्रथमः पादः ॥१३।१॥ जम्बूमार्गाश्रमवासिनो भगवद्दुर्गाचार्यस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ अष्टादशाध्यायः (त्रयो-दशाध्यायः) समाप्तः ॥ १३ ॥ इति सपादसप्तदशाध्यायी ऋज्वर्था नाम निरुक्तवृत्तिः समाप्ता ॥ व्याख्यातं दैवतं यज्ञाङ्गं चेत्यादि ॥. 11. C. gives the chain; D. does not give it. Bi. ms. क does not contain the परिशिष्ट at all. Bi. mss. ख, ग, ङ do not conclude the thirteenth adhyâya here but only the *first pâda* of it. They continue with the fourteenth adhyâya, which in their case is the remaining pâdas of the thirteenth adhyâya.

# अथ चतुर्दशोऽध्यायः ।

व्याख्यातं दैवतं, यज्ञाङ्गं च । अथात ऊर्ध्वमार्गगतिं व्याख्यास्यामः । "सूर्य आत्मा" इत्युदितस्य हि कर्मद्रष्टा । अथैतदनुप्रवदन्ति । अथैतं महान्तमात्मानमेषर्ग्गणः प्रवदन्ति ।

"इन्द्रं मित्रं वरुणमग्निमाहुः ।" इति । 5

अथैष महानात्मात्मजिज्ञासयात्मानं प्रोवाच ।

---

1. Bi. J. read as अथ चतुर्दशाध्यायः । अथवा त्रयोदशस्यैव द्वितीयादिस्त्रिपादी । तत्राद्यः द्वितीयपादः. 2. D. reads हरिः ॐ म्, and C. ॐ only before व्याख्यातं. 3. Bi. mss. ख, ग, झ have कर्म द्रष्टा. 4. Bi. J. °मेषगणः (wrongly), R. °मेषर्ग्गणः; Bi. J. R. प्रवदन्ति, Bi. mss. ग, ज, झ—प्रवदति.

---

1. अथ चतुर्दशोऽध्यायः—There is no Durgavritti on this adhyâya. Sâyaṇa also never refers to this.

2. व्याख्यातं दैवतम्—i. e. in Nirukta, adhyâyas VII to XII.

2. यज्ञाङ्गं च—The यज्ञाङ्ग is after all a part of the दैवत and so it might be said to be included in the दैवतकाण्ड also. It is not, however, separately treated in Nirukta.

3. सूर्य आत्मा—This is a fragment of RS. I. 115. 1; *cf.* Nir. XII. 16.

3. उदितस्य हि कर्मद्रष्टा—This is unintelligible.

3–4. अथैतं महान्त°—Cf. Nir. VII. 18.

4. एषर्ग्गणः = एषः ऋग्गणः. The *sandhi* is wrong.

5. इन्द्रं मित्रं—RS. I. 164. 46.

"अग्निरस्मि जन्मना जातवेदाः"। "अहमस्मि प्रथमजाः" इत्येताभ्याम् ॥ १ ॥

"अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।
अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥"

5 "अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम ।
यो मा ददाति स इदेव मावदहमन्नमन्नमदन्तमद्मि ॥"

इति । स ह ज्ञात्वा प्रादुर्बभूव । एवं तं व्याजहारायं तमात्मानमध्यात्मजमन्तिकमन्यस्मा आचचक्ष्वेति ॥ २ ॥

---

2. C. D. ॥ १४ ॥, Bi. J. ॥ १ ( १४ ) ॥ १—This indicates the method used by various mss. in numbering the sections of this adhyâya. The Bi. mss. ख, ग, छ and C. D. mark the *Khaṇḍas* in continuation of those of the thirteenth adhyâya, as ॥ १४ ॥; Bi. ms. छ does not show the पाद division at all; Bi. mss. च, ज mark the sections as 1, 2 and so on, as of the fourteenth adhyâya; and lastly Bi. ms. झ marks the pâdas, and these as those of the thirteenth adhyâya; so that XIII. 14=XIV. 1=XIII. ii. 1. 4. R. and Bi. ms. च read धर्मो, for घर्मो wrongly. 5. C. D., Bi. mss. च and others, नाभिः for नाम of Bi. J. 6. C. omits मा after यो, and C. D. read स इदेवमांवा अहमन्न°, R. and Bi. mss. च etc. स इदेवमावां अहमन्न°. 7. C. व्याजहारतमात्मा°, D. R. and Bi. mss. च etc. व्याजहारायतमात्मा°, B. J. व्याजहारा यं तमात्मा°. 7–8. C. D. R. °नमभ्यात्मज° for °नमध्यात्मज° of Bi. J. 8. C. D. ॥ १५ ॥, Bi. J. ॥ २ ( १५ ) ॥ २.

---

1 and 3. अग्निरस्मि etc.—RS. III. 26. 7.

1 and 5. अहमस्मि etc.—ARS. 1. 9; TB. 2.8. 8. 1; TA. 9. 10. 6; TU. 3. 10. 6; Nṛp. U. 2. 4. *Cf.* प्रजापतिः प्रथमजा ऋतस्यात्मनात्मानमभिसंबभूव Mahânârâyaṇopaniṣad 2. 7.

" अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।

स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ॥ "

आ वरीवर्ति भुवनेष्वन्तरिति ।

अथैष महानात्मा सत्त्वलक्षणस्तत्परं तद् ब्रह्म तत् सत्यं तत् सलिलं तदव्यक्तं तदस्पर्शं तदरूपं तदरसं तदगन्धं तदमृतं तच्छुक्रं 5 तन्निष्ठो भूतात्मा। सैषा भूतप्रकृतिरित्येके। तत् क्षेत्रं तज्ज्ञानात् क्षेत्रज्ञमनुप्राप्य निरात्मकम्। अथैष महानात्मा त्रिविधो भवति। सत्त्वं रजस्तम इति। सत्त्वं तु मध्ये विशुद्धं तिष्ठत्यभितो रजस्तमसी। रज इति कामद्वेषस्तम इत्यविज्ञातस्य विशुध्यतो विभूतिं कुर्वतः क्षेत्रज्ञपृथक्त्वाय कल्पते। परिभातिलिङ्गो महानात्मा तमो- 10 लिङ्गः। विद्याप्रकाशलिङ्गस्तमः। अपि निश्चयलिङ्ग आकाशः ॥ ३ ॥

आकाशगुणः शब्दः। आकाशाद्वायुर्द्विगुणः स्पर्शेन। वायोर्ज्योतिस्त्रिगुणं रूपेण। ज्योतिष आपश्चतुर्गुणा रसेन। अद्भ्यः पृथिवी पञ्चगुणा गन्धेन। पृथिव्या भूतग्रामस्थावरजङ्गमाः। तदेतदहर्युगसहस्रं जागर्ति। तस्यान्ते सुषुप्स्यन्नङ्गानि प्रत्याहरति। भूतग्रामाः 15

2. Bi. mss. छ etc. विषूचीर्वसान॰. 6–7. C. तदज्ञात्क्षेत्र°, D. and Bi. mss. च etc. तदज्ञानात्क्षेत्र°, Bi. J. तज्ज्ञानात् क्षेत्र°. 7. C. D. R. and Bi. mss. च etc. निरात्मज° for निरात्मक° of Bi. J. 9. C. D. R. and Bi. mss. च and others omit रजः before इति. 10. C. D. प्रतिभाति° for परिभाति° of Bi. J. 11. C. D. ॥ १६ ॥, Bi. J. ॥ ३ ( १६ ) ॥ ३.

1–2. RS. I. 164. 31; X. 177. 3.

9. कामद्वेषः should have been कामद्वेषौ, and विशुध्यतः must be corrected into विशुद्धस्य. The Sanskrit of the whole of this *Khaṇḍa* is corrupt and incorrect.

14 and 15. We should read भूतग्रामाः स्थावरजङ्गमाः for भूतग्रामस्थावरजङ्गमाः, and सुषुप्सत् for सुषुप्स्यन्.

पृथिवीमपियन्ति। पृथिव्यपः। आपो ज्योतिषम्। ज्योतिर्वायुम्। वायुराकाशम्। आकाशो मनः। मनो विद्याम्। विद्या महान्तमात्मानम्। महानात्मा प्रतिभाम्। प्रतिभा प्रकृतिम्। सा स्वपिति युगसहस्रं रात्रिः। तावेतावहोरात्रावजस्रं परिवर्तेते। स कालस्तदेतदहर्भवति।

5 युगसहस्रपर्यन्तमहर्यद् ब्रह्मणो विदुः।

रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः॥ इति॥ ४॥

तं परिवर्तमानमन्योऽनुप्रवर्तते। स्रष्टा द्रष्टा विभक्तातिमात्रोऽहमिति गम्यते। स मिथ्यादर्शनेदं पावकं महाभूतेषु चिरोण्वाकाशाद्वायोः प्राणाः चक्षुश्च वक्तारं च तेजसोऽद्भ्यः स्नेहं पृथिव्या मूर्तिः।
10 पार्थिवांस्त्वष्टौ गुणान् विद्यात्। त्रीन्मातृतस्त्रीन् पितृतः। अस्थिस्नायुमज्जानः पितृतः। त्वङ्मांसशोणितानि मातृतः। अन्नं पानमित्यष्टौ। सोऽयं पुरुषः सर्वमयः सर्वज्ञानोऽपि कॢप्तः॥ ५॥

स यद्यनुरुध्यते तद्भवति। यदि धर्मोऽनुरुध्यते तद्देवो भवति। यदि ज्ञानमनुरुध्यते तदमृतो भवति। यदि काममनुरुध्यते संच्यवते। इमां
15 योनिं संदध्यात्। तदिदमत्र मतम्। श्लेष्मा रेतसः संभवति। श्लेष्मणो रसः। रसाच्छोणितं, शोणितान्मांसं, मांसान्मेदो, मेदसः स्नावा,

---

4. C. स कलस्तदेतद° for स कालस्तदेतद° of Bi. J. and D. 6. C. D. ॥ १७ ॥, Bi. J. ॥ ४ ( १७ ) ॥ ४. 8. Bi. ms. ख reads स मिथ्यां दर्शनेदम्पावकं; C. चिरण्योकाशा° for चिरोण्वाकाशा° of Bi. J. and D. 9. Bi. mss. च, छ, ज and R. प्राणश्चक्षुश्च. 10. Bi. ms. च has पार्थिवॉस्त्वष्टौ. 11. C. D. R. and Bi. mss. च, छ, ज read मातृतोन्नपानमित्यष्टौ, Bi. J. मातृतोऽन्नं पानमित्यष्टौ. 12. C. D. ॥ १८ ॥, Bi. J. ॥ ५ ( १८ ) ॥ ५. 13. Bi. mss. च, छ, ज and R. यदि धर्ममनुरुध्यते, Bi. J. यदि धर्मोऽनुरुध्यते. 15. C. reads रेतः for रेतसः of Bi. J. and D.

---

1, 4, 5. ज्योतिषम् should have been ज्योतिः; रात्रिः should be रात्रिम्; and यत् should be ये.

5-6. Bh. Gîtâ. VIII. 17.

स्नाव्नोऽस्थीन्यस्थिभ्यो मज्जा, मज्जातो रेतः । तदिदं योनौ रेतः सिक्तं पुरुषः संभवति । शुक्रातिरेके पुमान् भवति, शोणितातिरेके स्त्री भवति । द्वाभ्यां समेन नपुंसको भवति । शुक्रेण भिन्नेन यमो भवति । शुक्रशोणितसंयोगान्मातृपितृसंयोगाच्च । तत् कथमिदं शरीरं परं संयम्यते । सौम्यो भवति । एकरात्रोषितं कललं भवति । पञ्चरात्राद् 5 बुद्बुदाः । सप्तरात्रात् पेशी । द्विसप्तरात्रादर्बुदः । पञ्चविंशतिरात्रस्वस्थितो घनो भवति । मासमात्रात्कठिनो भवति । द्विमासाभ्यन्तरे शिरः संपद्यते । मासत्रयेण ग्रीवाव्यादेशो, मासचतुष्केण त्वग्व्यादेशः । पञ्चमे मासे नखरोमव्यादेशः । षष्ठे मुखनासिकाक्षि । श्रोत्रं च संभवति । सप्तमे चलनसमर्थो भवत्यष्टमे बुद्ध्याध्यवस्यति । नवमे 10 सर्वाङ्गसंपूर्णो भवति ।

मृतंश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः ।
नानायोनिसहस्राणि मयोषितानि यानि वै ॥

आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ।
मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ॥ 15

---

3. C. शुक्रभिन्ने, Bi. J. D. शुक्रेण भिन्नेन, R. and Bi. mss. च, छ, ज —शुक्रभिन्नेन. 4. Bi. mss. ख, ग, झ do not have तत्. 7. Bi. mss. ख, ग, झ read द्युतो भवति for घनो भवति of Bi. J.; C. D. R. and Bi. ms. च read कठिणो, Bi. J. कठिनो. 12. D. मृतश्चाहं, R. मृतंश्चाहं. 13. D. नाना, R. नानां; D. मयोषितानिं यानि वैं, R. मयोषितानि यानिं वै. 14. D. आहारा, R. आहारा. 15. D. मातरो विविधा, R. मातरो विविधा.

---

2. शुक्रातिरेके पुमान् भवति—Cf. AB. 2. 5. 5; 3. 3. 13.

12–13. For the verses मृतश्चाहं and आहारा विविधा, cf. the *Garbhopaniṣad*. 4.

अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः ।

साङ्ख्यं योगं समभ्यस्येत् पुरुषं वा पञ्चविंशकम् ॥ इति ।

ततश्च दशमे मासे प्रजायते । जातश्च वायुना स्पृष्टो न स्मरति जन्ममरणे । अन्ते च शुभाशुभं कर्मैतच्छरीरस्य प्रामाण्यम् ॥ ६ ॥

5 अष्टोत्तरं संधिशतम् । अष्टाकपालं शिरः संपद्यते । षोडश वपा पलानि । नव स्नायुशतानि । सप्तशतं पुरुषस्य मर्मणाम् । अर्धचतस्रो रोमाणि कोट्यो, हृदयं ह्यष्ट कपालानि, द्वादश कपालानि जिह्वा, वृषणौ ह्यष्ट सुपर्णौ । तथोपस्थगुदपायु । एतन्मूत्रपुरीषं कस्मात् । आहारपानसिक्तत्वात् । अनुपचितकर्माणावन्योन्यं जायेते इति । तं 10 विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च । महत्यज्ञानतमसि मग्नो जरामरणक्षुत्पिपासाशोकक्रोधलोभमोहमदभयमत्सरहर्षविषादेर्ष्यासू-यात्मकैर्द्वन्द्वैरभिभूयमानः सोऽस्मादार्जवं जवीभावानां तन्निर्मुच्यते । सोऽस्मात्पापात्महाभूमिकावच्छरीरान्निमेषमात्रैः प्रक्रम्य प्रकृतिरधि-

1. D. does not accent अवाङ्मुखः पीड्यमानो, R. अवाङ्मुखः पीड्यमानो; D. जन्तुश्चैव समन्वितः, R. जन्तुश्चैव समन्वितः. 2. D. does not accent साङ्ख्यं etc. 3–4. C. D. R. and Bi. mss. च, छ, ज read स्पृष्टस्तन्न स्मरति जन्ममरणमन्ते, Bi. J. स्पृष्टो न स्मरति जन्ममरणेऽन्ते. 4. C. D. ॥ १९ ॥, Bi. J. ॥ ६ ( १९ ) ॥ ६. 5–6. D. षोडश वापलानि, Bi. J. C. षोडश वपा पलानि. 8. C. D. ततोपस्थ°, Bi. J. तथोपस्थ°. 8–9. Bi. mss. ख, छ read कस्मादाहारापान°. 9. Bi. ms. छ reads सिक्तत्वानुचित°, C. D. °सिक्तत्वादनुपचित°, Bi. J. सिक्तत्वानुपचित°; C. D. and Bi. mss. ख, छ read कर्मणावन्योन्यं जायेते, Bi. J. कर्माणावन्योन्यं जयेते; Bi. ms. ग ends section ॥ ७ ॥, with इति. 10. Bi. J. R. मग्नौ. 13. C. and Bi. J. सोस्मापान्नं, D. सोस्मापानं.

1–2. अवाङ्मुखः पीड्यमानो—This verse is not traced.

3–4. ततश्च दशमे मासे etc.—These lines are superfluous after the verses above, and better be omitted.

4. The passage रसाच्छोणितम् ( see page 1186, line 16 )......... to शुभाशुभं कर्म is almost identical with the Garbhopaniṣad, 2–4.

परीत्य तैजसं शरीरं कृत्वा कर्मणोऽनुरूपं फलमनुभूय तस्य संक्षये पुनरिमँल्लोकं प्रतिपद्यते ॥ ७ ॥

अथ ये हिंसामाश्रित्य विद्यामुत्सृज्य महत्तपस्तेपिरे चिरेण वेदोक्तानि वा कर्माणि कुर्वन्ति ते धूममभिसंभवन्ति । धूमाद्रात्रिं, रात्रेरपक्षीयमाणपक्षम् । अपक्षीयमाणपक्षाद्दक्षिणायनं, दक्षिणायनात् 5 पितृलोकं, पितृलोकाच्चन्द्रमसं, चन्द्रमसो वायुं, वायोर्वृष्टिं, वृष्टेरोषधयश्चैतद्भूत्वा तस्य संक्षये पुनरेवेमँल्लोकं प्रतिपद्यते ॥ ८ ॥

अथ ये हिंसामुत्सृज्य विद्यामाश्रित्य महत्तपस्तेपिरे ज्ञानोक्तानि वा कर्माणि कुर्वन्ति तेऽर्चिरभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षादुदगयनमुदगयनाद्देवलोकं, देवलोकादादित्यमा- 10 दित्याद्वैद्युतं, वैद्युतान्मानसम् । मानसः पुरुषो भूत्वा ब्रह्मलोकमभिसंभवन्ति । ते न पुनरावर्तन्ते । शिग्रा दन्दशूका य इदं न जानन्ति । तस्मादिदं वेदितव्यम् । अथाप्याह ॥ ९ ॥

---

1. Bi. mss. ख, ग, झ read प्रकृतिरभिपरीत्य, Bi. J. R. प्रकृतिरधिपरीत्य. 2. Bi. J. R. पुनरिमँल्लोकं, all mss. of Bi. except च,—पुनरिमं लोकं; C. D. ॥ २० ॥, Bi. J. ॥ ७ ( २० ) ॥ ७. In Bi. ms. ख, the second *pâda* of the thirteenth adhyâya ends with section 7; the ms. ग writes in the margin—पक्षे द्वितीयः पादः. But ms. झ, and other mss. of Roth giving the *pâda* division do not end the second pâda here. 7. Bi. mss. ख, ग, झ do not have तस्य संक्षये; Bi. J. R. पुनरेवेमँल्लोकं, all mss. of Bi. except च—पुनरेवेमं लोकं; C. D. ॥२१॥, Bi. J. ॥८ (२१)॥ ८. 11–12. Bi. mss. क, ग, झ have °मभिसंभवति and पुनरावर्तते; Bi. mss. च, छ, ज and R. read यत इदं for य इदं of Bi. J. 13. C. D. ॥२२॥, Bi. J. ॥९(२२)॥ ९.

---

1. प्रकृतिरधिपरीत्य—This should be प्रकृतिमधिपरीत्य.

7. ओषधयः should be ओषधीः.

2–7. See Br. Up. 6. 2. 16.

7. प्रतिपद्यते singular, should have been the plural प्रतिपद्यन्ते, to agree with other verbs in the previous sentence.

8–12. Cf. Br. Up. 6. 2. 15.

12–13. शिग्रा दन्दशूकाः etc. Cf. Bṛh. Up. 6. 2. 16.

" न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥ "

न तं विद्यया विदुषो यमेवं विद्वांसो वदन्त्यक्षरं ब्रह्मणस्पतिम् । अन्य-
द्युष्माकमन्तरमन्यदेषामन्तरं बभूवेति । नीहारेण प्रावृतास्तमसा जल्प्या
5 चासुतृप उक्थशासः प्राणं सूर्यं यत्पथगामिनश्चरन्ति । अविद्वांसः
क्षेत्रज्ञमनुप्रवदन्ति । अथाहो विद्वांसः क्षेत्रज्ञोऽनुकल्पते । तस्य तपसा
सहाप्रमादमेत्यथाप्तव्यो भवति । तेनासंततमिच्छेत् । तेन सख्यमिच्छेत् ।
एष हि सखा श्रेष्ठः संजानाति भूतं भवद्भविष्यदिति । ज्ञाता कस्माज्जा-
यतेः । सखा कस्मात् सख्यतेः । सह भूतेन्द्रियैः शेरते । महाभूतानि
10 सेन्द्रियाणि प्रज्ञया कर्म कारयतीति वा । तस्य यदापः प्रतिष्ठा ।
शीलमुपशम आत्मा ब्रह्मेति स ब्रह्मभूतो भवति । साक्षिमात्रो
व्यवतिष्ठतेऽबन्धो ज्ञानकृतः ॥

अथात्मनो महतः प्रथमं भूतनामधेयान्यनुक्रमिष्यामः ॥ १० ॥

हंसः । घर्मः । यज्ञः । वेनः । मेधः । कृमिः । भूमिः । विभुः । प्रभुः ।
15 शंभुः । राभुः । वधकर्मा । सोमः । भूतम् । भुवनम् । भविष्यत् ।

---

2. D. जल्पा, Bi. J. जल्प्या; D. चासुतृपं, Bi. J. चासुसुपं. 3. Bi. J. विद्वांसो, R. विद्वॅसो. 4. D. जल्पा, Bi. J. जल्प्या. 5. Bi. mss. ख, ग, झ read प्राणं सूर्यं यन्त्यथ गामिन्यश्चरन्त्यविद्वांसः क्षेत्रज्ञमनुप्रवदन्त्यथाहो विद्वांसः क्षेत्रज्ञो न कल्पते, Bi. J. R. as text above. 8-9. Bi. mss. ख, ग, झ read कस्माज्जानतेः for कस्माज्जायतेः of Bi. J. 9. Bi. mss. ख, ग, झ read शेते, Roth's mss. read खे शेते. 10. Bi. mss. च, छ, ज, C. D. and R. omit वा before तस्य; Bi. mss. ख, ग, झ read यत्तपः for यदापः of Bi. J. R. 13. C. भूते for भूत° of Bi. J. D.; Bi. mss. च, छ, ज and R. °धेयान्युत्क्रमिष्यामः; C. D. ॥ २३ ॥, Bi. J. ॥ १० ( २३ ) ॥ १०. 14. C. मेधः, R. मेधंः । कृमिंः । भूमिंः. 15. D.R. वधकर्मा । सोमंः ।

---

1-2. न तं विदाथ etc.—RS. X. 82. 7; VS. 17. 31; TS. 4. 6. 2. 2; KS. 18. 1; MS. 2. 10. 3: 135. 1.

आपः। महत्। व्योम। यशः। महः। स्वर्णीकम्। स्मृतीकम्। स्वृतीकम्। सतीकम्। सतीनम्। गहनम्। गभीरम्। गह्वरम्। कम्। अन्नम्। हविः। सद्म। सदनम्। ऋतम्। योनिः। ऋतस्य योनिः। सत्यम्। नीरम्। हविः। रयिः। सत्। पूर्णम्। सर्वम्। अक्षितम्। बर्हिः। नाम। सर्पिः। अपः। पवित्रम्। अमृतम्। इन्दुः। हेम। स्वः। 5 सर्गाः। शम्बरम्। अम्बरम्। वियत्। व्योम। बर्हिः। धन्व। अन्तरिक्षम्। आकाशम्। आपः। पृथिवी। भूः। स्वयंभूः। अध्व। पुष्करम्। सगरम्। समुद्रः। तपः। तेजः। सिन्धुः। अर्णवः। नाभिः। ऊधः। वृक्षः। तत्। यत्। किम्। ब्रह्म। वरेण्यम्। हंसः। आत्मा। भवन्ति। वर्धन्ति। अध्वानम्। यद्वाहिष्ठ्या। शरीराणि। अव्ययं च संस्कुरुते। 10 यज्ञः। आत्मा। भवति। यदेनं तन्वते।

अथैतं महान्तमात्मानमेतानि सूक्तान्येता ऋचोऽनुप्रवदन्ति ॥ ११ ॥

---

1. D. R. आपः; D. R. यशः। महः।. 1–2. D. R. स्वर्णीकम्। स्मृतीकम्। स्वृतीकम्। सतीकम्।. 2. D. R. गह्वरम्. 3. D. R. अन्नम्, सद्म, योनिः, ऋतस्य योनिः।. 4. Bi. mss. ख, ग, झ omit हविः after नीरम्; D. R. सर्वम्. 5. D. R. नाम. 6. D. R. सर्गाः, वियत्. 7–8. Bi. mss. च, छ, ज omit स्वयम्भूः and ऊधः. 7. D. R. आपः, C. D. R. अध्वा. 8. C. D. R. सगरः, समुद्रः, तपः, तेजः, सिन्धुः, अर्णवः, नाभिः, वृक्षः, ऊध्वैः. 9. R. ब्रह्म, वरेण्यम्; C. D. R. भवति. 10. वर्धन्त्यध्वानम्; Bi. mss. ख, ग, झ and C. D. R. read यद्वाहिष्या; C. D. अव्ययं च सङ्कुरुते, Bi. mss. ख, ग, छ and झ—अव्ययं च संङ्कुरुते. 12. C. D. ॥ २४ ॥, Bi. J. ॥ ११ (२४) ॥ ११.

---

12. एतानि सूक्तानि—There are no *sûktas* as such quoted below. But all the quotations are *ṛiks* only.

"सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥"

सोमः पवते जनयिता मतीनां जनयिता दिवो जनयिता पृथिव्या जनयिताग्नेर्जनयिता सूर्यस्य जनयितेन्द्रस्य जनयितोत विष्णोः । सोमः
5 पवते । सोमः सूर्यः प्रसवनाज्जनिता मतीनां प्रकाशकर्मणामादित्यरश्मीनाम् । दिवो द्योतनकर्मणामादित्यरश्मीनाम् । पृथिव्याः प्रथनकर्मणामादित्यरश्मीनाम् । अग्नेर्गतिकर्मणामादित्यरश्मीनाम् । सूर्यस्य स्वीकरणकर्मणामादित्यरश्मीनाम् । इन्द्रस्यैश्वर्यकर्मणामादित्यरश्मीनाम् । विष्णोर्व्याप्तिकर्मणामादित्यरश्मीनाम् । इत्यधिदैवतम् । अथा-
10 ध्यात्मम् । सोम आत्माप्येतस्मादेवेन्द्रियाणां जनितेत्यर्थः । अपि वा सर्वाभिर्विभूतिभिर्विभूतत आत्मा । इत्यात्मगतिमाचष्टे ॥ १२ ॥

"ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ।
श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥"

ब्रह्मा देवानामिति । एष हि ब्रह्मा भवति देवानां देवनकर्मणामा-
15 दित्यरश्मीनाम् । पदवीः कवीनामिति । एष हि पदं वेत्ति कवीनां कवीयमानानामादित्यरश्मीनाम् । ऋषिर्विप्राणामिति । एष हि ऋषिणो भवति विप्राणां व्यापनकर्मणामादित्यरश्मीनाम् । महिषो मृगाणा-

3-11. Bi. mss. च, छ, ज and C. D. omit from सोमः पवते जनयिता...to विष्णोः ( inclusive ) and read from सोमः पवते । सोमः सूर्यः प्रसवना°...... to the end of section 12. 4-11. Bi. mss. ख, ग, झ omit from सोमः पवते । सोमः सूर्यः etc. to the end of section 12. 11. C. D. ॥ २५ ॥, Bi. J. ॥ १२ ( २५ ) ॥ १२. 16. Bi. mss. ख, ग, झ, read कवीयमाणाना°, Bi. J. R. कवीयमानाना°; Bi. ms. ग reads ह्मषिणा, and mss. ख, झ read हि ऋषिणा, and Bi. J. हि ऋषिणो.

1-2. RS. IX. 96. 5.
12-13. RS. IX. 96. 6; VS. 37. 7; TA. 10. 10. 4.

मिति । एष हि महान् भवति मृगाणां मार्गणकर्मणामादित्यरश्मी-
नाम् । श्येनो गृध्राणामिति । श्येन आदित्यो भवति श्यायतेर्गति-
कर्मणः । गृध्र आदित्यो भवति गृध्यतेः स्थानकर्मणः । यत एतस्मि-
स्तिष्ठति । स्वधितिर्वनानामिति । एष हि स्वयं कर्माण्यादित्यो
धत्ते वनानां वननकर्मणामादित्यरश्मीनाम् । सोमः पवित्रमत्येति 5
रेभन्निति । एष हि पवित्रं रश्मीनामत्येति स्तूयमानः । एष एवैतत्
सर्वमक्षरम् । इत्यधिदैवतम् ।

अथाध्यात्मम् । ब्रह्मा देवानामिति । अयमपि ब्रह्मा भवति देवानां
देवनकर्मणामिन्द्रियाणाम् । पदवीः कवीनामिति । अयमपि पदं वेत्ति
कवीनां कवीयमानानामिन्द्रियाणाम् । ऋषिर्विप्राणामिति । अयमप्यृ- 10
षिणो भवति विप्राणां व्यापनकर्मणामिन्द्रियाणाम् । महिषो मृगाणा-
मिति । अयमपि महान् भवति मृगाणां मार्गणकर्मणामिन्द्रियाणाम् ।
श्येनो गृध्राणामिति । श्येन आत्मा भवति श्यायतेर्ज्ञानकर्मणः । गृध्राणी-
न्द्रियाणि, गृध्यतेर्ज्ञानकर्मणो यत एतस्मिंस्तिष्ठति । स्वधितिर्वनाना-
मिति । अयमपि स्वयं कर्माण्यात्मनि धत्ते वनानां वननकर्मणामिन्द्रि- 15
याणाम् । सोमः पवित्रमत्येति रेभन्निति । अयमपि पवित्रमिन्द्रियाण्य-
त्येति । स्तूयमानोऽयमेवैतत् सर्वमनुभवति । आत्मगतिमाचष्टे ॥ १३ ॥

"तिस्रो वाचं ईरयति प्र वह्निर्ऋतस्यं धीतिं ब्रह्मणो मनीषाम् ।
गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥"

वह्निरादित्यो भवति । स तिस्रो वाचः प्रेरयत्यृचो यजूंषि सामानि । 20
ऋतस्यादित्यस्य कर्माणि ब्रह्मणो मतानि । एष एवैतत् सर्वमक्षरम् ।

---

10. Bi. mss. ख, ग, झ—कवीयमाणाना°. 10–11. Bi. mss. च, छ, ज have °मित्ययमपि ऋषिणो. 14. Bi. mss. च, छ, ज—एतस्मिंस्तिष्ठन्ति. 17. C. D. ॥ २६ ॥, १३ ( २६ ) ॥ १३.

---

18–19. RS. IX. 97. 34.

इत्याधिदैवतम् । अथाध्यात्मम् । वह्निरात्मा भवति । स तिस्रो वाच ईरयति प्रेरयति विद्यामतिबुद्धिमताम् । ऋतस्यात्मनः कर्माणि ब्रह्मणो मतानि । अयमेवैतत् सर्वमनुभवति । आत्मगतिमाचष्टे ॥ १४ ॥

"सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः ।
5 सोमः सुतः पूयते अज्यमानः सोमे अर्कास्त्रिष्टुभः सं नवन्ते ॥"

एत एव सोमं गावो धेनवो रश्मयो वावश्यमानाः कामयमाना आदित्यं यन्ति । एवमेव सोमं विप्रा रश्मयो मतिभिः पृच्छमानाः कामयमाना आदित्यं यन्ति । एवमेव सोमः सुतः पूयते अज्यमानः । एतमेवार्काश्च त्रिष्टुभश्च संनवन्ते । तत एतस्मिन्नादित्य एकं भवन्ति ।
10 इत्यधिदैवतम् ।

अथाध्यात्मम् । एत एव सोमं गावो धेनव इन्द्रियाणि वावश्यमानानि कामयमानान्यात्मानं यन्ति । एवमेव सोमं विप्रा इन्द्रियाणि मतिभिः पृच्छमानानि कामयमानान्यात्मानं यन्ति । एवमेव सोमः सुतः पूयते अज्यमानः । इममेवात्मा च सप्त ऋषयश्च संनवन्ते ।
15 तानीमान्येतस्मिन्नात्मन्येकं भवन्ति । इत्यात्मगतिमाचष्टे ॥ १५ ॥

"अक्रान् समुद्रः प्रथमे विधर्मञ्जनयन् प्रजा भुवनस्य राजा ।
वृषा पवित्रे अधि सानो अव्ये बृहत् सोमो वावृधे सुवान इन्दुः॥

---

2. Bi. mss. ख, ग, झ have °बुद्धिमतान्यृतस्यात्मनः, Bi. J. °बुद्धिमतामृतस्यात्मनः, D. °बुद्धिमतात्मृतस्यात्मनः. 3. C. D. ॥ २७ ॥, Bi. J. ॥ १४ ( २७ ) ॥ १४. 6. Bi. mss. ख, ग, झ read वावाश्यमानाः, Bi. J. वावश्यमानाः. 10–11. Bi. mss. ख, ग, झ—भवन्त्यधिदैवतम्. 11–12. Bi. mss. ख, ग, झ—वावाश्यमानानि, Bi. J. वावश्यमानानि. 15. C. D. R. and Bi. mss. च, छ, ज—तान्येतस्मिन्नात्मन्येकं, Bi. J. तानीमान्येतस्मिन्नात्मन्येकं; C. D. ॥ २८ ॥, Bi. J. ॥ १५ ( २८ ) ॥ १५.

---

4–5. RS. IX. 97. 35.

16–17. RS. IX. 97. 40.

अत्यक्रमीत् समुद्र आदित्यः परमे व्यवने वर्षकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा । वृषा पवित्रे अधि सानो अव्ये बृहत् सोमो वावृधे सुवान इन्दुः । इत्यधिदैवतम् । अथाध्यात्मम् । अत्यक्रमीत् समुद्र आत्मा परमे व्यवने ज्ञानकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा । वृषा पवित्रे अधि सानो अव्ये महत् सोमो 5 वावृधे सुवान इन्दुः । इत्यात्मगतिमाचष्टे ॥ १६ ॥

" महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् ।
अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ॥ "

महत् तत् सोमो महिषश्चकारापां यद्गर्भोऽवृणीत । देवानामाधिपत्यमदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुरादित्यः । 10 इन्दुरात्मा ॥ १७ ॥

" विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥ "

---

3. C. omits इन्दुः after सुवानः, D. reads it. 4. C. omits राजा after भुवनस्य, D. has it. 5. C. D. R. and Bi. mss. च, छ, ज—read बृहत् for महत् of Bi. J. 6. C. D. ॥ २९ ॥, Bi. J. ॥ १६ (२९) ॥ १६. 9. C. D. R. and Bi. mss. च, छ, ज—देवानाधिपत्य° for देवानामाधिपत्य° of Bi. J. 11. C. D. ॥ ३० ॥, Bi. J. ॥ १७ ( ३० ) ॥ १७.

---

1. परमे व्यवने cf. Nir. XIII. 10. प्रथमे विधर्मन्=परमे व्यवने.

7-8. RS. IX. 97. 41.

7 and 11. The second half of the ṛik is merely quoted in both the places and no explanation of it is given.

11. इन्दुरात्मा—The आत्मपर meaning of the ṛik is not given.

12-13. RS. X. 55. 5; AV. 9. 27. 9. समने बहूनां, and देवस्य पश्य काव्यं महित्वा—These words are not explained in the comment below.

विधुं विधमनशीलं दद्राणं दमनशीलं युवानं चन्द्रमसं पलित आदित्यो गिरति । सद्यो म्रियते स दिवा समुदिता । इत्यधिदैवतम् । अथाध्यात्मम् । विधुं विधमनशीलं दद्राणं दमनशीलं युवानं महान्तं पलित आत्मा गिरति । रात्रौ म्रियते । रात्रिः समुदिता । इत्यात्म-
5 गतिमाचष्टे ॥ १८ ॥

" साकंजानां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इति ।

तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः ॥"

सहजातानां षण्णामृषीणामादित्यः सप्तमः । तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वाद्भिः सह
10 संमोदन्ते । यत्रैतानि सप्त ऋषीणानि ज्योतींषि तेभ्यः पर आदित्यः । तान्येतस्मिन्नेकं भवन्ति । इत्यधिदैवतम् । अथाध्यात्मम् । सहजातानां षण्णामिन्द्रियाणामात्मा सप्तमः । तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वान्नेन सह संमोदन्ते । यत्रेमानि सप्त ऋषीणानीन्द्रियाणि । एभ्यः पर आत्मा । तान्ये-
15 तस्मिन्नेकं भवन्ति ।

---

1-3. Bi. mss. ख, ग, झ read द्रमनशीलं. 2. D. reads भ्रियते, Bi. J. and C. म्रियते. 5. C. D. ॥ ३१ ॥, Bi. J. ॥ १८ (३१) ॥ १८. 6. R. Bi. षळिद्यमा, J. षलिद्यमा. 7. Bi. R. धामश स्थात्रे. 8. C. D. R. (foot-note) षण्णामृषीणामादित्यरश्मयस्तेषामिष्टानि, Bi. and R. ( text ) षण्णामृषीणामादित्यः सप्तमः. 10. Bi. J. R. सप्तऋषीणानि; R. ज्योतींषि. 10-11. R. ms. ( as given by Bi. ) reads आदित्यस्तान्यास्मिन्नेकं. 14-15. R. and Bi. mss. च, छ, ज read तान्येतास्मिन्नेकं भवन्ति, C. यान्यास्मिन्नेकं, D. यान्येतास्मिन्नेकं, and Bi. J. तस्मिन्नेकं भवन्ति.

---

6-7. RS. I. 164. 15; AV. 9. 25. 16.

8-11. "तेषामिष्टानि...... to एकं भवन्ति"—This whole passage is taken from Nir. X. 26, and is out of place here as it does not give the meaning of the second half of the stanza, above.

इत्यात्मगतिमाचष्टे ॥ १९ ॥

" स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदन्धः ।

कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात् स पितुष्पितासत् ॥"

स्त्रिय एवैताः शब्दस्पर्शरूपरसगन्धहारिण्यः । ता अमुं पुंशब्देन निराहारः प्राण इति पश्यन् कष्टान्न विजानात्यन्धः । कविर्यः पुत्रः स इमा जानाति । यः स इमा जानाति स पितुष्पितासत् । इत्यात्मगतिमाचष्टे ॥ २० ॥ 5

" सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ।

ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि भवन्ति विश्वतः ॥"

---

1. C. D. only read ॥ ३२ ॥, and do not mark the *pâda*; Bi. J. ॥ १९ ( ३२ ) ॥ १९, इति नैरुक्ते त्रयोदशस्यैव द्वितीयः पादः समाप्तः ॥. Here ends the second *pâda* of the thirteenth adhyâya and with स्त्रियः begins the third pada, XIII. iii. 1. Bi. mss. च, छ, झ, which treat this adhyâya as the fourteenth do not give the pâda division. But Bi. mss. ख, ग, झ which look upon this adhyâya as the continuation of the thirteenth give the pada division. 2. Bi. J. and Bi. mss. ख, ग, झ read अथ तृतीयः पादः । before स्त्रियः सतीस्ताँ. 4. Bi. mss. च, छ, ज, and R. स्त्रिय एवेति ताः, C. D. स्त्रिय एवैति ताः, Bi. J. स्त्रिय एवैताः. 4–5. C. D. R. and Bi. mss. च, छ, ज, पुंशब्दे निराहारः, Bi. J. पुंशब्देन निराहारः. 6. C. D. R. इमा, J. इमां, Bi. इमा, Bi. mss. ख, ग, झ—ईमा. 7. C. D. ॥ ३३ ॥, Bi. J. ॥ २० (३३) ॥ १. 9. R. Bi. J. परि भुवः.

---

2–3. RS. I. 164. 16; AV. 9. 25. 16.

4–5. ता अमुं पुंशब्देन निराहारः प्राणः—This is unintelligible. It cannot be made out, of what words of the ṛik, this is the explanation.

8–9. RS. I. 164. 36; AV. 9. 28. 7.

सप्तैतानादित्यरश्मीनयमादित्यो गिरति मध्यस्थानोर्ध्वशब्दः। यान्यस्मिंस्तिष्ठन्ति तानि धीतिभिश्च मनसा च विपर्ययन्ति। परिभुवः परिभवन्ति सर्वाणि कर्माणि वर्षकर्मणा। इत्यधिदैवतम्। अथाध्यात्मम्। सप्तेमानीन्द्रियाण्ययमात्मा गिरति मध्यस्थानोर्ध्वशब्दः। यान्य-
5 स्मिंस्तिष्ठन्ति तानि धीतिभिश्च मनसा च विपर्ययन्ति। परिभुवः परिभवन्ति सर्वाणीन्द्रियाणि ज्ञानकर्मणा। इत्यात्मगतिमाचष्टे ॥२१॥

"न वि जा॑नामि॒ यदि॑वे॒दम॑स्मि नि॒ण्यः संन॑द्धो मन॑सा चरामि।
य॒दा माग॑न् प्रथम॒जा ऋ॒तस्यादिद्वा॒चो अ॑श्नुवे भा॒गम॒स्याः॥"

न विजानामि यदि वेदमस्मि। निण्यः प्रसंनद्धो मनसा चरामि।
10 न हि विजानन् बुद्धिमतः पुष्टिः पुत्रः परिवेदयन्तेऽयमादित्योऽयमात्मा ॥२२॥

"अपा॒ङ् प्राङे॑ति स्व॒धया॑ गृभी॒तोऽम॑र्त्यो॒ मर्त्ये॑ना सयो॑निः।
ता शश्व॑न्ता विषू॒चीना॑ वि॒यन्ता॒ न्य॑१॒न्यं चि॒क्युर्न नि चि॑क्यु॒र॒न्यम्॥"

---

1-2. C. D. R. °शब्दो यत एतस्मिंस्तिष्ठति तानि, Bi. J. °शब्दो यान्यस्मिंस्तिष्ठन्ति तानि, Bi. mss. च, छ, ज—°शब्दो यत एतस्मिंस्तिष्ठन्ति तानि. 4-5. R. यान्यस्मिंस्तिष्ठति, Bi. J. यान्यस्मिंस्तिष्ठन्ति. 2-6. D. omits after परिभुवः परिभवंति, from सर्वाणि कर्माणि etc. to परिभुवः परिभवान्ति (inclusive), Bi. J. C. as text above. 6. Bi. J. सर्वाणीन्द्रियाणि ज्ञानकर्मणा, Bi. mss. ख, ग, झ—सर्वाणि कर्माणि ज्ञानकर्मणा; C. D. ॥ ३४ ॥, Bi. J. ॥ २१ (३४) ॥ २. 7-10. C. D. R. read section § 22, as:—न वि जा॑नामि॒ यदि॑ वे॒दमा॑स्मि॑ नि॒ण्यः संन॑द्धो मन॑सा चरामि। न हि विजानान् बुद्धिमतः पुष्टिः पुत्रः परिवेदयन्तेऽयमादित्योऽयमात्मा ॥. 10. Bi. mss. ख, ग, झ have जानन्, Bi. J. विजानन्; C. D. omit पुष्टिः; Bi. mss. ख, ग, झ—परिवेदयते, Bi. J. परिवेदयन्ते. 11. C.D. ॥३५॥, Bi. J. ॥२२ (३५)॥ ३.

---

7-8. RS. I. 164. 37; AV. 9. 28. 5. See Nir. VII. 3 for न वि जा॑नामि॒ यदि॑ वे॒दम॑स्मि.

10. न हि विजानन् बुद्धिमतः पुष्टिः पुत्रः परिवेदयन्ते—This is unintelligible.

12-13. RS. I. 164. 38; AV. 9. 28. 6.

अपाञ्चयति प्राञ्चयति स्वधया गृभीतोऽमर्त्य आदित्यो मर्त्येन चन्द्रमसा सह । तौ शश्वद्गामिनौ विश्वगामिनौ वहुगामिनौ वा । पश्यत्यादित्यं न चन्द्रमसम् । इत्यधिदैवतम् । अथाध्यात्मम् । अपाञ्चयति प्राञ्चयति स्वधया गृभीतोऽमर्त्य आत्मा मर्त्येन मनसा सह । तौ शश्वद्गामिनौ विश्वगामिनौ वहुगामिनौ वा । पश्यत्यात्मानं न 5 मनः । इत्यात्मगतिमाचष्टे ॥ २३ ॥

"तदिदांस भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥"

तद्भवति भूतेषु भुवनेषु ज्येष्ठमादित्यं यतो जज्ञ उग्रस्त्वेषनृम्णो दीप्तिनृम्णः । सद्यो जज्ञानो निरिणाति शत्रून् । इति । निरिणातिः 10 प्रीतिकर्मा दीप्तिकर्मा वा । अनुमदन्ति यं विश्व ऊमाः । इत्यधिदैवतम् ।

1. Bi. mss. ख, ग, झ—अपाङ्चेति प्राङ्चैति, Bi. J. अपाञ्चयति प्राञ्चयति. 1–2. C. D. R. and Bi. mss. च, छ, ज read मर्त्येन चन्द्रमसा सह, Bi. J. मर्त्येन मनसा सह. 3. C. D. R. omit न after पश्यत्यादित्यं. 6. C. D. ॥ ३६ ॥, Bi. J. ॥ २३ ( ३६ ) ॥ ४. 10. Bi. mss. ख, ग, झ omit शत्रूनिति; Bi. mss. च, छ, ज, C. D. and R. read रिणातिः for निरिणातिः of Bi. J.

1. अपाञ्चयति, प्राञ्चयति—*Cf.* 'अञ्चु अचु वा अचि वा गमने'—Dhâtup. 1. 887. Thus अञ्च् is a root of the first conjugation only, and not of the tenth as the *bhâṣya* has taken it.

1. गृभीतः should have been गृहीतः.

2. मर्त्येन चन्द्रमसा सह is the reading of C. D. and it is correct. The Bi. J. reading मर्त्येन मनसा सह is obviously a mistake as आदित्य is associated with चन्द्रमाः and not with मनः.

2. The वा after वहुगामिनौ is superfluous.

3. पश्यत्यादित्यं—पश्यति being the explanation of चिक्युः in the ṛk, should have been in the plural.

7–8. RS. X. 120. 1.

9. आदित्यं should be आदित्यः.

11. ऊमाः—This word is unintelligible.

अथाध्यात्मम्। तद्भवति भूतेषु भुवनेषु ज्येष्ठमव्यक्तं यतो जायत उग्रस्त्वेषनृम्णो ज्ञाननृम्णः। सद्यो जज्ञानो निरिणाति शत्रून्। इति। निरिणातिः प्रीतिकर्मा दीप्तिकर्मा वा। अनुमदन्ति यं सर्वे ऊमाः। इत्यात्मगतिमाचष्टे ॥ २४ ॥

5 "को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून्।
आसन्निषून् हृत्स्वसो मयोभून् य एषां भृत्यामृणधत् स जीवात्॥"

क आदित्यो धुरि गा युङ्क्ते रश्मीन् कर्मवतो भानुमतो दुराधर्षानसून्यसुनवन्तीषूनिषुणवन्ति मयोभूनि सुखभूनि। य इमं संभृतं वेद कथं स जीवति। इत्यधिदैवतम्। अथाध्यात्मम्। क आत्मा धुरि गा 10 युङ्क्त इन्द्रियाणि कर्मवन्ति भानुमन्ति दुराधर्षानसून्यसुनवन्तीषूनिषुणवन्ति मयोभूनि सुखभूनि। य इमानि संभृतानि वेद चिरं स जीवति। इत्यात्मगतिमाचष्टे ॥ २५ ॥

"क ईषते तुज्यते को बिभाय को मंसते सन्तमिन्द्रं को अन्ति।
कस्तोकाय क इभायोत रायेऽधि ब्रवत्तन्वे ३ को जनाय॥"

1. C. D. R. and Bi. add भुवनेषु after भूतेषु, J. तद्भवति भूतेषु ज्येष्ठं; C. D. read तपो for यतो of Bi. J. 2. C. D. R. रिणातिः. 4. C. D. ॥ ३७ ॥, Bi. J. ॥ २४ (३७) ॥ ५. 7 and 10 Bi. J. दुराधर्षानसून्यसुनवन्ती°, Bi. mss. ख, ग, झ—दुराधर्षानसूनसुनवन्ती°. 10. C. D. युक्त for युङ्क्त; C. D. R., and Bi. mss. च, छ, ज—कर्मवतो भानुमतो, Bi. J. कर्मवन्ति भानुमन्ति. 11-12. C. D. R., and Bi. mss. च, छ, ज—य इमं संभृतं वेद चिरजीवतीत्यात्म° for य इमानि संभृतानि वेद चिरं स जीवतीत्या° of Bi. J. 12. C. D. ॥ ३८ ॥, Bi. J. ॥ २५ (३८) ॥ ६.

5-6. RS. I. 84. 16.

10. The reading कर्मवतो भानुमतो of C. D. is grammatically incorrect.

10. दुराधर्षान् should have been दुराधर्षाणि.

13-14. RS. I. 84. 17; ईषते = गच्छति ( see next page, line 1 ): *Cf.* ईषति, Nigh. II. 14. 70.

क एव गच्छति, को ददाति, को बिभेति, को मंसते सन्तमिन्द्रम् ।
कस्तोकायापत्याय महते च नो रणाय रमणीयाय दर्शनीयाय ॥ २६ ॥

"को अग्निमीट्टे हविषा घृतेन स्रुचा यजाता ऋतुभिर्ध्रुवेभिः ।

कस्मै देवा आ वहानाशु होम को मंसते वीतिहोत्रः सुदेवः ॥

क आदित्यं पूजयति हविषा च घृतेन च स्रुचा यजाता ऋतुभि- 5
र्ध्रुवेभिरिति । कस्मै देवा आवहानाशु होमार्थान् । को मंसते वीति-
होत्रः सुदेवः कल्याणदेवः। इत्यधिदैवतम् । अथाध्यात्मम् । क आत्मानं
पूजयति हविषा च घृतेन च स्रुचा यजाता ऋतुभिर्ध्रुवेभिरिति ।
कस्मै देवा आवहानाशु होमार्थान् । को मंसते वीतिहोत्रः सुप्रज्ञः
कल्याणप्रज्ञः । इत्यात्मगतिमाचष्टे ॥ २७ ॥ 10

"त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम् ।

न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥"

---

2. C. D. ॥ ३९ ॥, Bi. J. ॥ २६ (३९) ॥ ७. 5 and 8. C. D R. and Bi. mss. च, छ, ज read पूरयति for पूजयति of Bi. J. 6. R. संसने, Bi. J. मंसते. 10. C. D. ॥ ४० ॥, Bi. J. ॥ २७ ( ४० ) ॥ ८.

---

2. महते च नो रणाय रमणीयाय दर्शनीयाय—This is the explanation of मुहे रणाय चक्षसे RS. X. 9. 1c, for which see Nir. IX. 27; and we cannot understand why it is inserted here.

As in the case of other *riks* in this adhyâya, we have not here the आदित्यपर and आत्मपर explanations. This *rik* therefore seems to be a later addition to the adhyâya.

3-4. RS. I. 84. 18.

11-12. RS. I. 84. 19.

त्वमङ्ग प्रशंसीर्देवः शविष्ठ मर्त्यम् । न त्वदन्योऽस्ति मघवन् पाता वा पालयिता वा जेता वा सुखयिता वा । इन्द्र ब्रवामि ते वच इति स्तुतिसंयुक्तम् ॥ २८ ॥

"हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।

5 नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥"

हंस इति । हंसाः सूर्यरश्मयः । परमात्मा परं ज्योतिः । पृथिवी व्याप्तेति । व्याप्तं सर्वं व्याप्तं वननकर्मणानभ्यासेनादित्यमण्डलेनेति ।

---

1. C. D. प्रशंसीद्देवः, Bi. J. प्रशंसीर्देवः. 2. C. D. R. and Bi. mss. च, छ, ज omit इति after वचः. 3. R. and Bi. mss. च, छ, ज read स्तुतियुक्तम्, Bi. J. स्तुतिसंयुक्तम्; C. D. mark the खण्ड as ॥ ४१ ॥. They do not mark the *pâda*. Bi. J. mark the *khaṇḍa* and the *pâda* as ॥ २८ ( ४१ ) ॥ ९, and then add इति निरुक्ते त्रयोदशाध्यायस्यैव तृतीयः पादः ॥ With स्तुतिसंयुक्तम् ends the *third* pâda of the *thirteenth* adhyâya, XIII. iii. 9. 4. Bi. J. add अथ चतुर्थः पादः ।, before the next *rik* i. e. हंसः शुचिषद्°. So XIII. iv. 1 begins with this rik. 6. Bi. mss. ख, ग, झ read हंसेति; Bi. J. R. हंसा सूर्यरश्मयः. 6–7. Bi.mss. ख, ग, झ—पृथिव्याप्तेति, Bi. J. पृथिवी व्याप्तेति. 7. Bi. mss. ख, ग, झ have वननकर्माभ्यासेना°.

---

1. त्वमङ्ग—The आदित्यपर and the आत्मपर meanings are not given in the case of this *rik* too.

1. अस्ति मघवन्—The order of words in the ṛik is मघवन्नस्ति. It is changed in the *bhâṣya*, which is against the practice of Yâska.

1–2. पाता वा पालयिता वा—These words are interpolated here from the explanation of the word पति.

4–5. RS. IV. 40. 5; VS. 10. 24; 12. 14.

6. All *bhâṣya* from पृथिवी व्याप्तेति onwards is meaningless and the language used is ungrammatical. Besides it does not explain the words of the *rik*. The whole seems to be a later interpolation.

त्ययतीति लोको त्ययतीति । हंसयन् त्ययतीति । हंसाः परमहंसाः । परमात्मा सूर्यरश्मिभिः प्रभूतगभीरवसतीति । त्रिभिर्वसतीति वा । रश्मिर्वसतीति वा । वह्निर्वसतीति वा । सुवर्णरेताः पूषा गर्भा रिभेति रिभन्ता वनकुटिलानि कुटन्ता रिभन्तान्तरिक्षा चरत्पथान्तरिक्षा चरदिति दिवि भुवि गमनं वा सुभानुः सुप्रभूतो ह्यतादित्यस्य गता 5 भवन्त्यतिथिर्दुरोणसत् सर्वे दुरोणसद् द्रवं सर्वे रसा विकर्षयति । रश्मिर्विकर्षयति । वह्निर्विकर्षयति । वननं भवति । अश्वगोजा अद्रिगोजा धरित्रिगोजाः सर्वे गोजा ऋतजा बहुशब्दा भवन्ति । निगमो निगमव्याति भवत्येष निर्वचनाय ॥ २९ ॥

" द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । 10
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभि चाकशीति ॥ "

1. Bi. mss. ख, ग, झ read त्यजतीति for त्ययतीति of Bi. J. R.; Bi. mss. ख, ग, झ have लोकस्त्यजतीति for लोको त्ययतीति and हंसस्त्यजतीति for हंसयन् त्ययतीति; Bi. mss. ख, ग, झ do not have हंसाः. 2. D. प्रभूत, Bi. J. C. प्रभूत; Bi. mss. ख, ग, झ read गभीत for गभीर of Bi. J. 3. Bi. mss. ख, ग, झ—वह्निर्वसतीति वा रश्मिर्वसतीति वा; Bi. mss. ख, ग, झ—पुरुषा गर्भा. 3–5. Bi. mss. ख, ग, झ—रिफिरिति रिफिता चमकुटिलानि कुटन्ता रेफान्तान्तरिक्षश्चेरदर्थत्यन्तरिक्षं चरतीति दिवि ।. 5. Bi. mss. ख, ग, झ have स्वर्भानुः for सुभानुः of Bi. J. 6–7. Bi. mss. ख, ग, झ read भवन्त्यातिथिर्दुरोणसत् द्रवन्ति सर्वे रसाश्चिकीर्षयन्ति रश्मिभिश्चिकीर्षयन्तीत्यश्वगोजा. 8. Bi. mss. ख, ग, झ—धनगोजा for धरित्रिगोजाः and सर्वगोजा for सर्वे गोजा of Bi. J. 8–9. Bi. mss. ख, ग, झ have ऋतगोजा ऋतजो बहुजो शब्दो भवति for ऋतजा बहुशब्दा भवन्ति; they read निगमो निगन्तव्यो भवत्यृषिनिर्वचनाय, Bi. J. R. निगमो निगमव्याति भवत्यृषे निर्वचनाय. 9. Bi. mss. ख, ग, झ conclude Khaṇḍa 3. with निर्वचनाय; C. D. ॥ ४२ ॥, Bi. J. ॥ २९ (४२) ॥ १.

10–11. द्वा सुपर्णा—RS. I. 164. 20; AV. 9. 26. 10.

Bi. mss. ख, ग, झ read द्वा सुपर्णा as the *first* खण्ड of the fourth pâda and place it before the Khaṇḍa, हंसः शुचिषद् ( Khaṇḍa §29 ) which in them is the *third* Khaṇḍa of the fourth pâda: the second being विप्रं विप्रासो ( our section §32 ).

द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारौ । दुष्कृतं पापं परिसारक-
मित्याचक्षते । सुपर्णा सयुजा सखायेत्यात्मानं दुरात्मानं परमात्मानं
प्रत्युत्तिष्ठति । शरीर एव तज्जायते । वृक्षम् । रक्ष शरीरम् । वृक्षं पक्षौ
प्रतिष्ठापयति । तयोरन्यद्भुक्त्वान्नमनश्नन्नन्यां सरूपतां सलोकतामश्नुते
5 य एवं विद्वान् । अनश्नन्नन्योऽभिचाकशीति । इत्यात्मगतिमाचष्टे ॥३०॥

" आ याहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व ।
तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव ॥ "

आगमिष्यन्ति शक्रो देवतास्तास्त्रिभिस्तीर्थैभिः शक्रप्रतैरीळिते-
भिस्त्रिभिस्तीर्थैर्यज्ञमिमं नो यज्ञभागमग्नीषोमभागाविन्द्रो जुषस्व ।
10 तृप्तामेवं मातुलयोगकन्याभागं सर्तृकेव सा या देवतास्तास्तत्स्थाने
शक्रं निदर्शनम् ॥ ३१ ॥

---

2. Bi. mss. ख, ग, झ omit दुरात्मानं. 3. Bi. mss. ख, ग, झ read वृक्ष-मृक्षं शरीरं वृक्षे पक्षौ, Bi. J. वृक्षं रक्ष शरीरं वृक्षं पक्षौ. 4. Bi. mss. ख, ग, झ—तयोरन्यो भुक्त्वान्य°, Bi. J. तयोरन्यद्भुक्त्वान्न°; C. D. °मनश्नन्नन्यं ( Bi. J. °न्यां ) सरूपतां. 5. Bi. mss. च, छ, ज—य एवं वेदान्ननमनश्नन्न्यो, Bi. J. य एवं विद्वाननश्नन्न्यो, C. D. R. य एवं वेदान्नमनश्नन्न्यो. C. D. ॥ ४३ ॥, Bi. J. ॥ ३० ( ४३ ) ॥ २. 6. J. °रीलितेभि°, Bi. C. °रीळितेभिं°. 7. Bi. R. °मातुंलस्येव, J. C. and Bi. ms. छ, °मातुंलस्येव. 8-9. Bi. J. R. °रीलितेभि°, C. °रीळितेभि°. 11. C. D. and Bi. ms. च—निदर्शनम्, Bi. J. निदर्शतिम wrongly; it should be निदर्शितम्; C. D. ॥ ४४ ॥, Bi. J. ॥ ३१ ( ४४ ) ॥ ३.

---

6-7. आ याहीन्द्र—RS. Khaila Sû. 14. 6. or RVKh. VII. 55. 8. The second half of this ṛik is very difficult to interpret and possibly has no connection as regards the meaning with the first half. Besides the ṛik is out of place in this adhyâya as it cannot yield the आत्मपर meaning.

6-11. आ याहीन्द्र—The whole of this section ( §31 ) is not found in Bi. mss. ख, ग, झ.

" विप्रं विप्रासोऽवसे देवं मर्तास ऊतये ।

अग्निं गीर्भिर्हवामहे ॥ "

विप्रं विप्रासोऽवसे विदुः । वेद विन्दतेर्वेदितव्यम् । विमलशरीरेण वायुना । विप्रस्तु हृत्पद्मनिलयस्थितमकारसंहितमुकारं पूरयेन्मकार-निलयं गतं विप्रं प्राणेषु विन्दुसिक्तं विकसितं वह्नितेजःप्रभं कनक- 5
पद्मेष्वमृतशरीरममृतजातस्थितममृतवाचामृतमुखे वदन्ति । अग्निं गीर्भिर्हवामहे । अग्निं संबोधयेत् " अग्निः सर्वा देवताः । " इति । तस्योत्तरा भूयसे निर्वचनाय ॥ ३२ ॥

" जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।

स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ " 10

जातवेदस इति । जातमिदं सर्वं सचराचरं स्थित्युत्पत्तिप्रलयन्याये-

3. C. D. वेद विंदते वेदितव्यं, Bi. J. वेद विन्दतेः वेदितव्यं; Bi. mss. ख, ग, झ—विमलं शरीरं वायुना; Bi. J. विमलशरीरेण. 4–5. Bi. mss. ख, ग, झ—विप्रस्तु पद्मनिलयं हृदिस्थितम(प्र)कारसंहारितमुकारं पूज(र)यन् मकारानिलयं गमयति । विप्रं प्राणेषु बिन्दुः सिक्तं विकाचितं वह्नितेजः प्रभुं कनकं पद्मेष्व(परमेश्वरम°)मृतशरीर°, Bi. J. as text above. 5. Bi. J. R. बिन्दुसिक्त. 6. Bi. mss. ख, ग, झ read °ममृतवाचा अमृतमुखा वदन्ति, Bi. J. °अमृतमुखे वदन्ति. 8. C. D. ॥ ४५ ॥, Bi. J. ॥ ३२ ( ४५ ) ॥ ४. This is the third khaṇḍa of the fourth pada according to Bi. Mss. ख, ग, झ ( XIII. iv. 3 ). 11. Bi. mss. ख, ग, झ read the bhâsya on जातवेदसे, as follows:—स्थित्युत्पत्तिप्रलयन्यायेन जात-वेदस्या इदं जातवेदसे (ग-°स्यां वैव जा°) ऽर्चाय सुनवाम सोममिति प्रसवायाभिषवाय सोमं राजानममृतमरातीयतो यज्ञार्थमनिस्मो निर्दहति (ग-निदहाति) निश्चयेन दहति भस्मीकरोति सोमो ददादित्यर्थः । स नः पर्षदाति ( ग-दुर्गाणि विश्वानि ) दुर्गमनानि स्थानानि नावेव सिन्धुं नावा सिन्धुं यथा यः कश्चित् कर्णधारो नावा सिन्धुः स्यन्दामिमां ( ग-°स्यन्दमानानां ) नदीं जलदुर्गा-न्महाकुलां तारयति दुरितात्यग्निरिति दुरितानि तारयति; C. °प्रळयन्यायेना°.

---

1–2. RS. VIII. 11. 6.

3–6. The bhâsya in section §32 does not explain the ṛik.

7. अग्निः सर्वा देवताः—KS. XII. 1.; AB. 1. 1. 1.

9–10. RS. 1. 99. 1.

नाच्छाय सुनवाम सोममिति प्रसवेनाभिषवाय सोमं राजानममृतमरातीयतो यज्ञार्थमिति स्मो निश्चये निदहाति दहति भस्मीकरोति सोमो ददद्दित्यर्थः । स नः पर्षदति दुर्गाणि दुर्गमनानि स्थानानि नावेव सिन्धुं यथा कश्चित्कर्णधारो नावेव सिन्धोः स्यन्द-
5 नान्नदीं जलदुर्गां महाकूलां तारयति दुरितात्यग्निरिति दुरितानि तारयति । तस्यैषापरा भवति ॥ ३३ ॥

" इदं तेऽन्याभिरसमानमद्भिर्याः काश्च सिन्धुं प्र वहन्ति नद्यः ।
सर्पो जीर्णामिव त्वचं जहाति पापं सशिरस्कोऽभ्युपेत्य ॥ "

इदं तेऽन्याभिरसमानाभिर्याः काश्च सिन्धुं पतिं कृत्वा नद्यो
10 वहन्ति । सर्पो जीर्णामिव सर्पस्त्वचं त्यजति । पापं त्यजन्ति । आप आप्नोतेः । तासामेषा भवति ॥ ३४ ॥

---

2. Bi. J. R. निश्चये निदहाति, Bi. mss. ख, ग, झ—निश्चयेन निदहाति. 5. Bi. mss. ख, ग, झ—महाकुलां, Bi. J. महाकूलां. 5-6. C. D. दुरितात्यग्निरिति दुरितानि तारयति, Bi. J. दुरितात्यग्निरिति तानि तारयति, R. दुरितान्यग्निरिति तानि तारयति. 6. C. D. ॥ ४६ ॥, Bi. J. ॥ ३३ ( ४६ ) ॥ ५. 11. C. D. ॥ ४७ ॥, Bi. J. ॥ ३४ ( ४७ ) ॥ ६.

---

1. अच्छाय or आच्छाय—The meaning of this word is not clear.

7-11. इदं तेऽन्याभिः—The whole of this section §34, is not found in Bi. mss. ख, ग, झ.

7-8. This verse cannot be traced.

9. The bhāsya wrongly reads असमानाभिः for असमानम् अद्भिः of the ṛik.

10. सर्पो जीर्णामिव सर्पः—One of the two सर्प words is superfluous.

10. पापं त्यजन्ति—This should be पापं त्यजति.

11. तासामेषा भवति—These words serve no purpose here and should be omitted.

" त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥ "

त्र्यम्बको रुद्रस्तं त्र्यम्बकं यजामहे सुगन्धिम् । सुगन्धि सुष्ठुगन्धिम् । पुष्टिवर्धनं पुष्टिकारकमिव । उर्वारुकमिव फलं बन्धनादारोधनान्मृत्योः सकाशान्मुञ्चस्व माम् । कस्मादिति । एषामितरेषापरा 5 भवति ॥ ३५ ॥

" शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान् ।
शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥ "

शतं जीव शरदो वर्धमान इत्यपि निगमो भवति । शतमिति शतं

2. Bi. वन्धनान्मृ°; Bi. J. R. मा मृतात्. 3. C. D. read सुगन्धि सगन्धि सुष्टुगन्धि पुष्टिवर्धनं; Bi. mss. ख, ग, झ omit second सुगन्धि; Bi. C. सुष्टुगन्धि, J. सुष्ठुगन्धि. 4. Bi. mss. ख, ग, झ omit इव in उर्वारुकमिव. 5–6. Bi. mss. च, ज and R. read कस्मादित्येषापरा भवति. 6. C. D. ॥ ४८ ॥, Bi. J. ॥ ३५ (४८) ॥ ७.

1–2. RS. VII. 59. 12.

1. त्र्यम्बकं यजामहे—This section is 32 in Bi. mss. ख, ग, झ and जातवेदसे is 33.

4. पुष्टिकारकम् इव—The इव in this is useless.

5. कस्मादिति—These words should better be read before मृत्योः सकाशात्.

5–6. एषामितरेषापरा भवति—Roth's reading is एषापरा भवति. The syllables मितरेषा are wrongly inserted and must be omitted.

7–8. RS. X. 161. 4; AV. 3. 11. 4; 7. 53. 2; 20. 96. 9.

9. इत्यपि निगमो भवति—These words are superfluous after एष अपरा भवति already occurring at the end of the previous section.

9. शतमिति शतं दीर्घमायुः—The bhâṣya explains the word शतं in the ṛik in this way. But there शतं qualifies शरदः, हेमन्तान् and वसन्तान्.

दीर्घमायुः । मरुत एना वर्धयन्ति । शतमेनमेव शतात्मानं भवति । शत-
मनन्तं भवति । शतमैश्वर्यं भवति । शतमिति शतं दीर्घमायुः ॥ ३६ ॥

"मा ते राधांसि मा तं ऊतयों वसोऽस्मान् कदांचना दंभन् ।

विश्वां च न उप मिमीहि मांनुष वसूंनि चर्षणिभ्य आ ॥"

5 मा च ते धामानि मा च ते कदा च नः सरिषुः । सर्वाणि प्रज्ञाना-
न्युपमानाय मनुष्यहितः । अयमादित्योऽयमात्मा ।

अथैतदनुप्रवदन्ति । अथैतं महान्तमात्मानमेषर्ग्गणः प्रवदति वैश्व-
कर्मणे । "देवानां नु वयं जाना" "नासदासीन्नो सदासीत्तदानीम्" ।
इति च । सैषात्मजिज्ञासा । सैषा सर्वभूतजिज्ञासा । ब्रह्मणः सारिष्टं
10 सरूपतां सलोकतां गमयति य एवं वेद ।

---

1. Bi. mss. ख, ग, झ—मरुतो मां वर्धयन्तु, Bi. J. मरुत एना वर्धयन्ति; Bi. mss. ख, ग, झ—शतमेव, Bi. J. शतमेनमेव; Bi. mss. ख, ग, झ—शतमात्मानं, Bi. J. शतात्मानं. 1–2. Bi. mss. ख, ग, झ omit शतमनन्तं भवति शतमैश्वर्यं भवति; C. D. ॥४९॥, Bi. J. ॥ ३६ (४९) ॥ ८. This is the sixth Khaṇḍa. 3. R. राधॉसि, Bi. J. राधांसि. 5. Bi. mss. ख, ग, झ—धनानि, Bi. J. धामानि; Bi. mss. ख, ग, झ—कदाचन, Bi. J. कदा च नः. 6. Bi. mss. ख, ग, झ—प्रज्ञाना-न्युपनामयन्मनुष्याहितो, Bi. J. प्रज्ञानान्युपमानाय मनुष्यहितोऽयमादित्योऽयमात्मा. 7. C. अथैनदनुप्र°, Bi. J. अथैतदनुप्र°; Bi. mss. ख, ग, झ—°प्रवदत्यथैनं, Bi. J. C. °प्रवदन्त्यथैतं. 7. Bi. J. C. °मेषर्गणः; Bi. mss. ग, झ—वैश्वकर्मणो, Bi. J. वैश्वकर्मणे. 9. Bi. mss. ग, झ—सार्ष्टिं, Bi. ms. ख—सा ऋष्टं, Bi. J. सारिष्टं. 10. R. य एवं वेद ॥ ३७ ॥ इति चतुर्दशोऽध्यायः ॥ इति परिशिष्टं संपूर्णम् ॥

---

1. मरुत एना वर्धयन्ति and शतमेनमेव शतात्मानं भवति are explanations which correspond to no words in the ṛik.

3–4. मा ते राधांसि—RS. I. 84. 20.

7. अथ should be इति as the group treating the आत्मपर ṛiks ends here.

8. देवानां नु वयं जाना—RS. X. 72. 1.

8. नासदासीन्नो etc.—RS. X. 129. 1.

नमो ब्रह्मणे । नमो महते भूताय । नमः पारस्कराय । नमो यास्काय । ब्रह्म शुक्लमसीय । ब्रह्म शुक्लमसीय ॥ ३७ ॥

१ २ ३ ४ ५
व्याख्यातं दैवतमग्निरस्मि जन्मनापश्यं गोपामाकाशगुणस्तं परि-
६ ७ ८ ९
वर्तमानं स यद्यनुरुध्यतेऽष्टोत्तरमथ ये हिंसामाश्रित्याथ ये हिंसा-
१० ११ १२ १३ १४
मुत्सृज्य न तं हंसो घर्मः सोमः पवते ब्रह्मा देवानां तिस्रो वाच ईरयति 5
१५ १६ १७ १८ १९ २०
सोमं गावोऽक्रान् महत्तत्सोमो विधुं दद्राणं साकञ्जानां स्त्रियः सतीः
२१ २२ २३ २४ २५ २६
सप्तार्धगर्भा न वि जानाम्यपाङ् प्राङेति तद्विदास को अद्य युङ्क्ते क
२७ २८ २९ ३० ३१ ३२
ईषते को अग्निमीट्टे त्वमङ्ग हंसः शुचिषद् द्वा सुपर्णाऽऽयाहीन्द्र विप्रं
३३ ३४ ३५ ३६ ३७
विप्रासो जातवेदस इदं तेऽन्याभिस्त्र्यम्बकं शतं जीव मा ते राधां-
सीति सप्तत्रिंशत् ॥ 10

---

1–2. C. D. read नमो ब्रह्मणे महते भूताय, Bi. J. नमो ब्रह्मणे नमो महते भूताय; Bi. mss. च, ज and Roth omit नमो ब्रह्मणे नमो महते भूताय नमः पारस्कराय नमो यास्काय ब्रह्म शुक्लमसीय ब्रह्मशुक्लमसीय; Bi. ms. ख, ग, झ read देवाय, Bi. J. भूताय; Bi. mss. ख, ग, झ omit नमः पारस्कराय. 2. C. D. ॥ ५० ॥, Bi. J. ॥ ३७ (५०) ॥ ९.

---

1. नमः पारस्कराय—Does this show that the author of this adhyâya was पारस्कर ?

2. ब्रह्मशुक्लमसीय, ब्रह्मशुक्लमसीय—The repetition of this clause shows that the section ends here and not after य एवं वेद ( see page 1208, line 10 ) as in Roth's edition. Roth and Bi. mss. च, ज omit the passage नमो ब्रह्मणे महते भूताय नमः पारस्कराय नमो यास्काय। ब्रह्मशुक्लमसीय etc. but the evidence of all the mss. shows that this passage should form an integral part of the last section.

10. सप्तत्रिंशत्—This first chain of the खण्डप्रतीकs is according to Bi. ms. ज. It shows that the परिशिष्ट was divided into two adhyâyas according to it. Bi. mss. ख, ग, झ, however, do not give this first chain. C. also does not give it.

अथेमा यद्द्यावो यदुदश्चो वि हि सोतोः सृण्येव तरत्स श्चत्वारि
शृङ्गा स्वर्यन्तश्चत्वारि वागृचो अक्षर आदित्य इत्यक्षरं न क्षरति हृदा
तष्टेषु व्याख्यातं द्वैवतमग्निरस्मि जन्मनापश्यं गोपामाकाशगुणस्तं
परिव्रर्तमानं स यद्यनुरुध्यतेऽष्टोत्तरमथ ये हिंसामाश्रित्याथ ये हिंसा-
5 मुत्सृज्य न तं हंसो घर्मः सोमः पवते ब्रह्मा देवानां तिस्रो वाच ईरयति
सोमं गावोऽक्रान्महत्तत्सोमो विधुं दद्राणं साकञ्जानां स्त्रियः सतीः
सप्तार्धगर्भा न वि जानाम्यपाङ् प्राङेति तदिदास को अद्य युङ्क्ते क
ईषते को अग्निमीट्टे त्वमङ्ग हंसः शुचिषद् द्वा सुपर्णा ऽऽयाहीन्द्र
विप्रं विप्रासो जातवेदस इदं तेऽन्याभिस्त्र्यम्बकं शतं जीव मा ते
10 राधांसीति पञ्चाशत् ॥

---

1–10. अथेमा……पञ्चाशत्—C. D. both read the second chain. D. did not read the chain at the end of the 13th adhyâya, but C. did. But both C. and D. do not read the special chain of 37 sections that occurs here first. Bi. ms. छ also gives the chain of 50 sections, which shows that according to mss. C. D. and Bi. ms. छ, the परिशिष्ट together formed one adhyâya only.

Bi. mss. ख, ग, झ do not give the Khaṇḍas आ याहीन्द्र §31 (44), and इदं तेऽन्याभिः §34 ( 47 ); so that the number of Khaṇḍas in them is forty-eight only.

इति निरुक्ते चतुर्दशोऽध्यायः समाप्तः ॥ १४ ॥

( ऊर्ध्वमार्गगतिप्रकरणं समाप्तम् । )

इति नैरुक्तं द्वितीय-परिशिष्टं समाप्तम् ॥

( इति परिशिष्टम् )

---

1. C. concludes as इति निरुक्ते उत्तरषट्के सप्तमोध्यायः ॥ and D. as इति नैरुक्ते उत्तरषट्के सप्तमोध्यायः ॥ इत्युत्तरषट्कः समाप्तः श्रीकृष्णार्पणमस्तु, after giving the chain. 5. D. reads in the end, शके १७२९ प्रभवनामसंवत्सरे फाल्गुन शु॥ दशमींदुवासरे तृतीयप्रहरे इदं पुस्तकं भट्टवाडदेकरेण लिखितं समाप्तं but an emendation in red the name reads महादेव भट्ट खाडील-करेण लिखितं.

# INDEX OF TEACHERS (Āchāryas) AND ANCIENT SCHOOLS CITED IN THE NIRUKTA

*N. B*—Roman figures refer to the adhyâyas and the Arabic to the Sections ( Khandas ) of the adhyâya

